SHRI SWAMI LAKHSMIRAM TRUST SERIES.
No. 3

# ABHĪNAVAM PRASŪTITANTRAM

## A TEXT-BOOK OF
## MIDWIFERY IN SANSKRIT
*(Non-pathological part)*

By
*Ayurvedacharya*
**Pt. Damodar Sharma Gaud, A. M. S.**
*Assistant Professor, of Ayurved.*
*Member of the Faculty of Ayurved.*
**Banaras Hindu University.**

FIRST EDITION
With 116 Illustrations

*Published by*
**Pt. Shyamsundar Sharma, M. A.**
*Secretary*
*Swami Lakshmiram Trust.*
1950

*Price Rupees Ten only*



पं० गजाननशर्मा व्याकरणतीर्थः।

भ्रातस्ते चरणान्तिके स्थिरधिया याराधिता भारती,
यच्चापि त्वदनुग्रहादिह भिषग्विद्या समासादिता।
तत्सर्वं कृतवित्तया त्वदनुजं मां प्रेरयत्युच्चकैः,
त्वत्पाणावुपहर्त्तुमल्पकमिमं ग्रन्थं, प्रसीदाग्रज॥

श्रीस्वामिलक्ष्मीरामनिधिग्रन्थमालायास्तृतीयं पुष्पम् ।

# अभिनवं प्रसूतितन्त्रम् ।

काशीहिन्दुविश्वविद्यालये आयुर्वेदाध्यापकेन

आयुर्वेदाचार्य्य,

श्रीदामोदर-शर्म्म-गौड़, ए० एम्० एस०

महाशयेन विरचितः

प्रसवसम्पद्वर्णनपरः

## प्रसूतिग्रन्थः

यस्येदं

प्रथमं सँस्करणम्

षोडशाधिकचित्रशतविभूषितम्

श्रीस्वामिलक्ष्मीरामनिधिमन्त्रिणा पं० श्यामसुन्दरशर्मा एम० ए०

इत्यनेन

प्रकाशितम् ।

वैक्रमाब्दाः २००६

( १९५० )

मूल्यं दश रूप्यकाणि ।



ग्रन्थकर्त्ता ।

( १ ) व्रजमोहनस्वर्णपदकम् ( सर्वप्राथम्ये )

( २ ) कविराजनर्मदासस्वर्णपदकम् ( चरके )

( ३ ) स्वामिलक्ष्मीरामस्वर्णपदकम् ( चरके )

( ४ ) रामरतनभट्टरस्वर्णपदकम् ( संस्कृतनिबन्धे )

# प्रकाशकस्य विज्ञप्तिः ।

जयपुरराज्यस्य सुप्रसिद्धाश्चिकित्सकचूडामणयो दादूपन्थपरिव्राजका आयुर्वेदमार्त्तण्डाः **श्रीलक्ष्मीरामस्वामिमहाभागाः** १९८१ तमविक्रमवत्सरस्य विजयदशम्यां ( १७-१०-३२ ) निरीक्षणसङ्घ ( ट्रस्ट ) मेकं नियम्य दशसहस्राधिकलक्षानुमितमुद्राणां राजकीयसुरक्षितधनम् (गवर्नमेन्ट सिक्यूरिटीज् ), पादोनलक्षद्वयमितमुद्राणाञ्च गृहारामादिकं तदधीनमकार्षुः । राजरक्षितधनस्य वृद्धिः ( कुसीदम् ), गृहादीनां भाटकञ्च प्रतिवर्षं ७०००) सप्तसहस्रमुद्रामितं भवति । स्वामिमहाभागानामुद्देश्यमनुसृत्य औषधालय-आतुरालय-विद्यालयादीनां संरक्षणे, निर्धनविद्यार्थिनां वृत्त्यादिना साहाय्यसम्पादने दादूसम्प्रदायस्यायुर्वेदग्रन्थानाञ्च प्रकाशनादिष्वनेकविधधर्मकार्येषु विद्योन्नतिकार्येषु च सोऽयमायो व्येति ।

आयुर्वेदद्वारैव श्रीमद्भिः स्वामिमहाभागैर्धनमिदमर्जितमित्यायुर्वेदस्यैवोन्नतिर्विशिष्याभीष्टा तेषाम् । सङ्घाधिकृते निधि (फण्ड) धने विंशतिसहस्रमुद्राः स्वामिभिरेतदुद्देश्येन पृथङ् नियमिताः, यदस्य निधेर्वृद्धि (सूद) द्रव्येण आयुर्वेदसम्बन्धिनवीनपुस्तकनिर्मातृभ्यो विद्वद्भ्यः पुरस्काररूपेण साहाय्यं दीयेत, प्राचीनार्वाचीनानाञ्चामुद्रितानामायुर्वेदग्रन्थानां प्रकाशनमनुष्ठीयेत । अनेनैव द्रव्येण सोऽयम् **'अभिनवं प्रसूतितन्त्रम्'** इत्याख्यो ग्रन्थो मुद्रापयित्वा विदुषां सेवायां समुपस्थाप्यते ।

प्रयोगप्रधानस्यायुर्वेदशास्त्रस्याध्यापनशैल्यपि प्रायोगिकाभ्याससहचरितैव स्यादिति निश्चयेऽपि साम्प्रतमायुर्वेदजगति उपयुक्तपाठ्यग्रन्थानामभाव एव तथाविधशैलीसम्प्रसारणे प्रथमः प्रतिबन्धहेतुः । प्रसूतितन्त्रविषये एतमभावमंशतः परिहरन् सोऽयं ग्रन्थो भारतवर्षे प्रधानायुर्वेदमहाविद्यालयपाठ्यविषयेषु समुचितमादरं लप्स्यत इति द्रढीयान् विश्वासो नः । अथ च संस्कृतभाषा विविधभाषाक्रान्तिपुरगणनातीतकालतः सत्स्वपि तत्रेषु परिवर्तनेषु स्थेमानमालम्बमाना यथावदर्थप्रकाशकतया आयुर्वेदवाङ्मयसुरक्षायै दृढं मञ्जूषायितेति कृत्वा प्रसूतितन्त्रविषयकमपि विज्ञानं संस्कृतोपनिबद्धमाकल्पं सुरक्षितं स्यादिति संस्कृतभाषायामेव ग्रन्थोऽयम-

स्माभिर्निर्मापित: । ग्रन्थस्यास्य लेखने आयुर्वेदमार्त्तण्डानां श्रीयादवजी महोदयानां सम्मतिमनुसृत्य पं० श्रीदामोदरगौड ए० एम्० एस्० महोदया निरीक्षकसङ्घेन प्रेरिता: पुरस्कृताश्च । ग्रन्थोऽयं त्रिकालाबाधितं ज्ञानं करामलकमिव विमृशतामृषीणां मूलवाक्यान्याधारतयोररीकृत्य लेशोक्तस्य विशेषोक्तिमिवाचरन् न पूर्वजानां ज्ञानमाक्षिपति किन्तूपबृंहयतीति सन्दर्भं प्रत्यक्षीकृत्य विद्वद्भिर्वैद्यमहानुभावैरनुभूयेत । एतस्य-प्रस्तावनालेखने आयुर्वेदाचार्या: डा० श्रीभास्कर गोविन्द घाणेकर, बी० एस्०-सी०, एम्० बी० बी० एस्० महोदया: सकलमपि विवेचनीयं वस्तु प्रकाशितवन्त इति तदध्ययनेन परिज्ञास्यत एव ।

किञ्च, गभीरार्थानुशीलने संस्कृतानभिज्ञानां छात्राणां हिन्दीभाषया सौकर्यं जायत इति विमृश्य हिन्दीभाषायामपि प्रसूतिविषयको ग्रन्थ एक: डा० श्रीवामनकृष्ण पटवर्धन, ए० एम्० एस्० महोदयं प्रेरयित्वा अस्माभिर्निर्मापित: । स चापि मुद्रितप्राय: सत्वरमेव प्रकाशमेष्यति ।

श्रीमन्तो यादवजी त्रिविक्रमजी महोदया: स्वामिमहाभागानां परमप्रिया: सुहृद: । स्वामिमहाभागै: ट्रस्टपत्रे तदिदं विशिष्य निर्दिष्टं यद् यावज्जीवं श्रीयादवजीमहाभागानामेवानुमत्या ग्रन्था: प्रकाश्येरन् । ग्रन्थस्यास्य निर्माणाय प्रेरका: प्रस्तुतरूपेणोपस्थितौ च प्रधानहेतुभूतास्तेऽपि स्वाशीर्वचोभिरिममलङ्कुर्वन्तीति तान्प्रति कोटिशो धन्यवादान् समर्पयाम: । श्रीमतामेवानुग्रहेणाद्य श्रीस्वामिलक्ष्मीरामनिधिग्रन्थमालायास्तृतीयं कुसुमं सोऽयं ग्रन्थो वैद्यजगत: समक्षमुपस्थाप्यते । मार्मिका विद्वांसो ग्रन्थमिमं बहुतरमाद्रियेरन्निति आशास्महे । आयुर्वेदपाठ्यक्रमोपयुक्तग्रन्थप्रणयनदिशायां सोऽयं प्रथम उपक्रमो निरीक्षकसङ्घस्य समुत्साहवर्धनाय, स्वामिमहाभागानां सदुद्देश्यपूर्त्तये च प्रभवेदिति चराचर गुरुं परमेश्वरं निर्मायां प्रार्थयामहे । इति—

गणगौरी बाजार
ता० १—७—५०

विदुषामाश्रव:—
श्यामसुन्दरशर्मा,
श्रीस्वामिलक्ष्मीरामट्रस्टमन्त्री,
जयपुरम् ।

## निरीक्षणसङ्घस्य वर्त्तमानाः पदाधिकारिणः

| | |
|---|---|
| सभापतिः—राजगुरु महन्त श्रीगङ्गादासजी, | जयपुर |
| कोषाध्यक्षः—राजवैद्य पं० श्रीनन्दकिशोरजी, | ” |
| मन्त्री—पं० श्रीश्यामसुन्दरजी शर्मा एम० ए०, | ” |
| सदस्यौ—स्वामी श्रीमङ्गलदासजी | ” |
| —स्वामी श्रीजयरामदासजी वैद्य | ” |

# पूज्य यादवजी महाराजका आशीर्वाद

आयुर्वेदमें स्वर्गवासी महामहोपाध्याय कविराज श्रीगणनाथसेन सरस्वतीजी ने प्राचीन और अर्वाचीन ज्ञानधाराओंका समन्वय करके सर्वप्रथम संस्कृतभाषामें प्रत्यक्षशारीर और सिद्धान्तनिदान ये दो स्वतन्त्र ग्रन्थ लिखे हैं। तदनन्तर संस्कृतभाषामें उस श्रेणीका स्वतन्त्र-ग्रन्थ लिखनेका यह द्वितीय प्रयास है। आयुर्वेदसाहित्यमें प्रसूतितन्त्र पर कोई स्वतन्त्र ग्रन्थ इस समय उपलब्ध नहीं है। आयुर्वेदाचार्य्य पण्डित श्रीदामोदारशर्मा गौड़ने यह ग्रन्थ लिखकर इस अभाव की पूर्ति की है। पं० दामोदरजी गौड़ काशीहिन्दूविश्वविद्यालयके आयुर्वेदिक कालेजके प्रसूतितन्त्रके अध्यापक और संस्कृतभाषामें सिद्धहस्त लेखक हैं। यह ग्रन्थ इस समय सर्व आयुर्वेदमहाविद्यालयों में प्रसूतितन्त्रके अध्यापनके लिए पाठ्यग्रन्थतया स्वीकृत होनेके योग्य है। आशा है कि प्रान्तीय आयुर्वेदिक बोर्ड और आयुर्वेदमहाविद्यालयोंके सञ्चालक इस ग्रन्थको पाठ्यपुस्तकके रूप में स्वीकृत कर लेखक और प्रकाशक के उत्साहको बढ़ावेंगे और अन्य लेखकोंको भी ऐसे उत्तम ग्रन्थ लिखने के लिए आकर्पित करेंगे।

यह ग्रन्थ लिखकर पं० दामोदरजी ने आयुर्वेदकी बड़ी सेवा की है। आशा है कि वे व्यवच्छेदन-शारीर आदि अन्य विषयों पर भी ऐसे उत्तम ग्रन्थ लिखकर आयुर्वेदसाहित्य की उन्नति करते रहेंगे। मैं भगवान् धन्वन्तरि से उनके दीर्घायुष्य और आरोग्यकी कामना करता हूँ।

बम्बई ]

वैद्य यादवजी त्रिक्रमजी आचार्य

१४-६-५०

# प्रस्तावना

## आयुर्वेदाचार्य

### श्री भास्कर गोविन्द घाणेकर

### बी० एस्-सी०, एम्० बी० बी० एस०

मनुष्यों के स्वास्थ्य और अस्वास्थ्य से सम्बन्धित शास्त्र को वैद्यक शास्त्र कहते हैं। आज संसार में अनेक वैद्यक शास्त्र प्रचलित हैं। इन सब वैद्यक शास्त्रों के अपूर्ण और पूर्ण करके दो विभाग किये जा सकते हैं। जिस वैद्यक में केवल रोगोत्पत्ति की अपनी विशिष्ट उपपत्ति का तथा तदनुरूप उनकी चिकित्सा का विवरण होता है उसको अपूर्ण वैद्यक या चिकित्सापद्धति (-pathy) और जिसमें रोगोत्पत्ति और रोगचिकित्सा के अतिरिक्त वैद्यक के अन्य अनेक मूलभूत सिद्धान्तों तथा विषयों का विवरण होता है उसको पूर्ण वैद्यक शास्त्र कह सकते हैं। डा० हानेमान की समचिकित्सा पद्धति (Homeopathy), डा० शूस्लर की जीवरसायनचिकित्सा पद्धति (Twelve tissue remedies), डा० कुन्हे की जलचिकित्सा पद्धति (Hydropathy) तथा इस प्रकार की अन्य अनेक चिकित्सा पद्धतियाँ अपूर्ण वैद्यक के उदाहरण हैं और आधुनिक पाश्चात्य वैद्यक शास्त्र, जो लोकप्रिय परिभाषा में एलोपैथी के नाम से प्रसिद्ध है, पूर्ण वैद्यक का उदाहरण है।

*वैद्यक के दो प्रकार*

भारतवर्ष में भी प्राचीन कालसे अनेक वैद्यक शास्त्र प्रचलित रहे हैं। इनमें मन्त्रतन्त्रवैद्यक, रसवैद्यक, सिद्धवैद्यक अपूर्ण वैद्यक के उदाहरण हैं। बहुतेरे आयुर्वेद विरोधी तथा आयुर्वेद से अनभिज्ञ लोग आयुर्वेद को भी एक त्रिदोषाधिष्ठित विशेष चिकित्सापद्धति बतलाते हैं तथा समझते हैं। परन्तु यह उनका मिथ्या प्रचार है या भ्रम है। आयुर्वेद, जैसे कि उसकी

*आयुर्वेद, परिपूर्ण वैद्यक है*

परिभाषा[1] में स्पष्ट किया गया है, आधुनिक पाश्चात्य वैद्यक के समान एक सर्वाङ्ग परिपूर्ण वैद्यक शास्त्र है। केवल अन्तर इतना ही है कि सहस्रावधि वर्षोंका प्राचीन होने के कारण पाश्चात्य वैद्यक के समान वह सविस्तर न होकर बहुत कुछ संक्षिप्त और खण्डित है। परन्तु इस क्षति की पूर्ति उसकी गहराई से हो जाती है जो पाश्चात्य वैद्यक की गहराई से कई गुना अधिक है।

स्वस्थ मनुष्यों के स्वास्थ्य की रक्षा करना तथा व्याधिपीड़ितों की व्याधियों का निराकरण करना ये आयुर्वेद के दो[2] प्रयोजन होते हैं। स्वास्थ्यरक्षा के प्रथम प्रयोजन में वैद्यकीय मूलभूत सिद्धांतों का तथा आधारभूत विषयों का समावेश होता है और व्याधिपरिमोक्ष के द्वितीय प्रयोजन में चिकित्सा के सिद्धान्तों का तथा चिकित्सा की सम्पूर्ण साधन सामग्री का विवरण किया गया है। इन प्रयोजनों में जो विषय समाविष्ट हुए हैं वे आठ-आठ अङ्गों में विभक्त किये गये हैं। इनमें चिकित्सा के अष्टांग विशेष रूप से प्रसिद्ध हैं और उन्हीं के कारण आयुर्वेद 'अष्टाङ्ग आयुर्वेद' कहलाता है।

आयुर्वेद के दो प्रयोजन

स्वास्थ्यरक्षा विभाग में ऐसे विषय समाविष्ट किये गये हैं जिनके ज्ञान से स्वस्थ मनुष्य अपने स्वास्थ्य की रक्षा करके रोगों से बच जाते हैं। इन विषयों के निम्न आठ अङ्ग होते हैं। (१) सूक्ष्म शारीर (Metaphysical aspect of body)—इसमें सांख्य तथा अन्य दर्शनों के अनुसार सृष्टि का विकास, चतुर्विंशतितत्त्वात्मक शरीर की उत्पत्ति इत्यादि सूक्ष्म तथा अतीन्द्रिय विषयों का विवरण किया जाता है। (२) स्थूल या प्रत्यक्ष शारीर (Anatomy)—इसमें शवच्छेदन से प्राप्त पाञ्चभौतिक स्थूल शरीर के अङ्ग-प्रत्यङ्गों का तथा धातूपधातुओं का विवरण होता है। (३) दोषधातुमलविज्ञान

---

(१) हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।
मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ चरक ॥

(२) इह खलु आयुर्वेदप्रयोजनम्, व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणं च ॥ सुश्रुत ॥

( Physiology )—इसमें वातादि दोष, रसादि धातु, पुरीषादिमल इनकी उत्पत्ति, प्राकृत कार्य इत्यादि का विवरण होता है। ( ४ ) आहार विज्ञान ( Diatetics )—इसमें सम्पूर्ण नैसर्गिक तथा मनुष्यं-कृत आहार्य द्रव्यों के गुण धर्मों का तथा उनके हिता-हित संयोगों का विवरण होता है। ( ५ ) देशकाल-विज्ञान ( climate and meteorology )—इसमें देश के अनूपादि विभाग, वर्ष के ऋतु, चन्द्र, सूर्य का तथा देश के विभागों का तथा विविध ऋतुओं का स्वास्थ्यास्वास्थ्य से सम्बन्ध इत्यादि विषयों का विवरण होता है। ( ६ ) जनपदोद्ध्वंसनीय ( Epidemology and prevention of diseases )—इसमें महामारी के या सामूहिक रूप में फैलकर जनपदों का विध्वंस करने वाले रोगों के कारणों का तथा उनसे बचने के उपायों का विवरण होता है। ( ७ ) स्वस्थवृत्त ( Personal hygiene )—इसमें प्रात-र्विधि, व्यायाम, स्नान, भोजन, धूम्रपान, वस्त्र-धारण, निद्रा, मैथुन इत्यादि वैयक्तिक स्वास्थ्यरक्षा से सम्बन्ध रखनेवाले विषयों का विवरण होता है। ( ८ ) वैद्यकीय सद्वृत्त ( mental hygiene and medical ethics )—इसमें स्वास्थ्य-रक्षा की दृष्टि से कायिक, वाचिक और मानसिक आचार विचार उच्चार इत्यादि अनेक व्यावहारिक विषयों का समावेश होता है।

स्वास्थ्य रक्षा के अष्टांग

व्याधिपरिमोक्ष के भी स्वास्थ्यरक्षा विभाग के समान आठ[3] अङ्ग होते हैं। ये अङ्ग बहुत प्रसिद्ध होने के कारण केवल इनके नाम नीचे दिये जाते हैं। ( १ ) कायचिकित्सा ( General medicine ( २ ) शल्यचिकित्सा ( Surgery ) ( ३ ) बालचिकित्सा या कौमारभृत्य ( ४ ) भूत-विद्या ( Mental diseases ) ( ५ ) विषचिकित्सा ( Toxi-cology ) ( ६ ) शालाक्य या उर्ध्वाङ्गचिकित्सा ( ७ ) वाजीकरण और ( ८ ) रसायन

चिकित्सा के अष्टांग

---

( ३ ) कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजराविषान् ।
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ॥ अष्टाङ्गहृदय ।'

चिकित्सा का विस्तार बहुत अधिक हो जाने के कारण सहस्रावधि-वर्ष पहले आयुर्वेद महर्षियों ने उसको विषयानुसार उपर्युक्त आठ अङ्गों में विभक्त किया। इसलिये ये आठों अङ्ग चिकित्सा की दृष्टि से महत्व के हैं। परन्तु तरतम भेद की दृष्टि से इनमें कौन सा अङ्ग श्रेष्ठ है इसका विवेचन इस ग्रन्थ की दृष्टि से उचित तथा उपर्युक्त होने के कारण यहाँ पर किया जाता है। कायचिकित्सक[४] नित्योपयोगिता और व्यापकता के आधार पर, शल्यचिकित्सक[५] आशुक्रियाकरण और यन्त्रशस्त्रादि के उपयोग के आधार पर तथा अन्य तन्त्रकार अन्य कारणों के आधार पर अपने-अपने तन्त्र को श्रेष्ठ बताते हैं और उस दृष्टि से उनका कथन ठीक भी है।

चिकित्सा का श्रेष्ठ अङ्ग

परन्तु जिस नरदेह की चिकित्सा के लिये ये अङ्ग बनाये गये हैं उस नरदेह का उत्पत्तिस्थान जो योनि, उसमें उसका अवतरण और जन्मोत्तर संवर्धन इनका विवरण तथा इनके रोगों की चिकित्सा का विचार जिस अङ्ग में किया गया है वह अङ्ग अर्थात् कौमारभृत्य मुझे और अङ्गों से अधिक श्रेष्ठ मालूम होता है। इसलिये काश्यपसंहिताकारों[६] ने अपने तन्त्र की श्रेष्ठता प्रदर्शित करने के लिये जो विचार प्रदर्शित किये हैं उनसे मैं पूर्ण सहमत हूँ।

कौमारभृत्य की श्रेष्ठता प्रदर्शित करने के लिए ऊपर जो विचार-प्रणाली प्रकट की गयी है उसकी यथार्थता सिद्ध करने के लिये कौमारभृत्य के विषयों की संक्षिप्त सूची पाठकों के सामने रखना आवश्यक है। क्योंकि न कौमारभृत्य या कुमारतन्त्र शब्द से, न चरक सुश्रुत में

---

(४) नित्योपयोगि दुर्बोधं सर्वाङ्गव्यापि भावतः ॥ अष्टाङ्गसङ्ग्रह ॥

(५) अष्टास्वपि चायुर्वेदतन्त्रेष्वेतदेवाधिकमभिमतमाशुक्रियाकरणा-द्यन्त्रशस्त्रक्षाराग्निप्रणिधानात् सर्वतन्त्रसामान्याच्च ॥ सुश्रुत ॥

(६) किं चास्याद्यं तन्त्रमिति ?

कौमारभृत्यमष्टानां तंत्राणामाद्यमुच्यते ।
आयुर्वेदस्य महतो देवानामिव हव्यपः ॥
अनेन हि संवर्धितमितरे चिकित्सन्ति ॥ काश्यपसंहिता ॥

वर्णित उसकी परिभाषा[७] से तदन्तर्गत विषयों का पता लगता है।

कौमार भृत्य के विषय

इसकी यथार्थ परिभाषा हारीतसंहिता[८] में मिलती है और उसकी यथार्थता का प्रत्यय अभी हाल में प्राप्त और प्रकाशित काश्यपसंहिता के अवलोकन से प्राप्त होता है। उसके अनुसार कौमारभृत्य में योनिव्यापत्तन्त्र ( Diseases of women ) प्रसूतितन्त्र (Midwifery) और बालतन्त्र या कुमार-तंत्र ( paediatrics ) इन तीन तन्त्रों का मुख्यतया समावेश होता है।

प्राचीन काल में आयुर्वेद का बहुत विस्तार था, उसके प्रत्येक अंग की और उसके साथ कौमारभृत्य की अनेक स्वतन्त्र संहिताएँ थीं तथा प्रत्येक अंग के और उसके साथ कौमारभृत्य के विशेषज्ञ[९] तथा विशेष व्यवसायी थे। आगे चलकर इनका लोप हो गया। आज जो इनी गिनी

लेखक और ग्रन्थ कैसे हों

संहिताएँ उपलब्ध हैं। वे सब की सब प्रतिसंस्कृत या खण्डित हैं। अर्थात् कौमारभृत्य और प्रसूतितन्त्र इसके लिए अपवाद नहीं है। इस प्रकार यद्यपि आयुर्वेद का बहुत कुछ संकोच हो गया तथापि उसकी गहराई में विशेष अन्तर न पडा। इसलिए आज आयुर्वेद को ऐसे कलाकारों की आवश्यकता है जो उपलब्ध आयुर्वेद वाङ्मयमहोदधि में गोता लगाकर उसके अच्छे अच्छे सिद्धान्तरूप मौक्तिकों को ग्रहण करके उनसे आधुनिक अभि-रुचि के अनुसार ग्रन्थ रूप बढ़िया आभूषण बना सकें। यह कार्य संस्कृत के पण्डित, उपलब्ध आयुर्वेद वाङ्मय के ज्ञाता तथा आधुनिक पाश्चात्य वैद्यक तथा विज्ञान से परिचित लेखकों द्वारा ही हो सकता है।

---

( ७ ) कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्ट-स्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम् ॥ सुश्रुत ॥

( ८ ) गर्भोपक्रमविज्ञानं सूतिकोपक्रमस्तथा ।
बालानां रोगशमनं ज्ञेयं बालचिकित्सितम् ॥ हारीतसंहिता ॥

(९) आपन्नसत्वायां कौमारभृत्यो गर्भमर्मणि प्रजनने च वियतेत ॥ कौटिल्य ॥ कुमारभृत्यैः कुशलैरनुष्ठिते ॥ रघुवंश ॥

अभिनव प्रसूतितन्त्र आयुर्वेद के अधिष्ठान पर अधिष्ठित प्राचीन प्रसूतितन्त्र का आधुनिक अवतार है। इसको पढ़ते समय आधुनिक ग्रन्थों की सरलता तथा सुन्दरता के साथ प्राचीन संहिताओं की गम्भीरता की भी झलक मिलती है। पाठक स्वयं इसका अनुभव कर सकते हैं। इसके लेखक मेरे चिरपरिचित मित्र तथा सहाध्यापक पण्डित दामोदर शर्मा गौड़ हैं। आप काशी हिन्दू विश्वविद्यालय के आयुर्वेद महाविद्यालय में लगभग पंद्रह वर्षों से इस विषय के अध्ययन अध्यापन का कार्य कर रहे हैं। इससे अधिक आपकी योग्यता का परिचय कराने की आवश्यकता नहीं है। इसलिए अन्त में मैं आपको ऐसे सुन्दर ग्रन्थ के निर्माण के लिए बधाई देता हूँ और आशा करता हूँ कि भविष्य में भी ऐसे सुन्दर ग्रन्थ लिखकर आप आयुर्वेद की सेवा करते रहेंगे। इति शम्।

ज्येष्ठपौर्णिमा
संवत् २००७

भास्कर गोविन्द घाणेकर

# अभिनवं प्रसूतितन्त्रम् ।

## प्रथमसंस्करणे ग्रन्थकर्त्तुर्वक्तव्यम् ।

ननु साम्प्रतं सर्वत्र शिक्षणालयेषु वेदोऽयमायुषो विषयक्रमप्रविभक्त-स्तन्त्रान्तरोपबृंहितश्च पाठ्यते। किन्तु तादृशपाठ्यपुस्तकानामभावाच्छा-त्राणामध्यापकानाञ्च कार्य्ये कीदृशो महान् प्रतिबन्धः समुपस्थितो भवतीति नाविदितगोचरं विदुषाम्। नैकं तत्पुस्तकं, यत्र प्राचां सूत्रात्मकवचांसि प्रतीचां व्याख्यानवचनानि च साकल्येन सङ्गृहीतानि यथाक्रमं सङ्ग्रथि-तानि च स्युः। एक एव विषयः प्राच्यपाश्चात्यभेदेन विभिन्नकाले विभि-न्नाध्यापकैर्विभिन्नरीत्या च पाठितश्छात्राणां न केवलं बुद्धिभेदं जनयति, तेषां बुद्धिमाकुलीकरोत्यपि। एतद्दोषनिराकरणाधियैव परमादरणीया आयुर्वेद-मार्त्तण्डाः श्रीयादवजी त्रिकमजी आचार्य्यमहोदया वार्धक्येऽपि श्रमु-त्सहमानाः परांश्चोत्साहयन्तः पाठ्यपुस्तकानां निर्माणोपक्रमे कीदृक् प्रयतन्त इत्यपि सुविदितमेव भिषजां भिषग्बुभूषूणां च समेषाम्।

दुष्करं चैतत् कर्म। तत्र स्वयं प्रवृत्तोऽपि श्रीयादवजीमहाभागैः स्वर्गी-यैग्र्न्थनिर्माणदिशि प्रक्षुण्णनववर्त्मभिमहामहोपाध्याय-कविराज-श्रीगण-नाथसेन-शर्म-सरस्वतीमहोदयैश्च भृशं समुत्साहितस्तेषामेव सरणिमनुसरन् कौमारभृत्याङ्गप्रत्यङ्गभूतं प्रसूतिविषयमालम्ब्य सम्पदात्मकं ग्रन्थमिमं यथा-कथञ्चित् पूरितवान्। प्रसङ्गोपात्तो मूढगर्भस्तु प्रपञ्चितः। अत्र वेदितव्य-विषयाणां यावच्छक्यं सुविस्तरं वर्णनं विहितम्। विषयसम्पोषणानि आर्षवचनानि मध्ये मध्ये यथास्थलं ससङ्केतं निवेशितानि। विस्तृतानि विशिष्टानि च प्राचां वचांसि प्रसङ्गान्ते "भवन्ति चात्र, अथाहुः प्राञ्चः" इत्येवं सङ्कलितानि। चित्राणि च प्रचुराणि विषयावबोधसहायकानि संयो-जितानि। पत्राणामधस्तात् पुराणानां नवीनानाञ्च संज्ञानामाङ्ग्लपर्याया

उपयोगिटिप्पणानि चापि प्रदत्तानि। सोऽयं छात्रानध्यापकांश्च कियदप्युपकरोति चेत् सफलो मे परिश्रमः। प्रोज्झितं व्यापत्प्रकरणं च कालान्तरे विप्रसूतितन्त्राख्ये स्वतन्त्रे तन्त्रे निबन्धास्मि। येभ्यश्च पुस्तकेभ्यश्चित्रादयोऽत्र गृहीतास्तेषां प्रकाशकानां ग्रन्थकर्त्तृणां च महदुपकृतिभारं मन्ये।

किञ्च ग्रन्थोऽयं १९४२ तमे ईशाब्दे बीजरूपेण मुद्रणालये समाहितोऽपि नानाप्रत्यवायैः सन्ततिरसस्यासम्यग्वहनादन्तरान्तरोपविष्टकस्थितिं गत इव अल्पाल्पेन लेखनीतेजसा मुद्रणयन्त्रतेजसा च मन्दं मन्दमाप्यायमानो वर्षनवकेन बहिरेतीति नूनं—"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात्" इति चरकोक्तिश्चरितार्था भवति।

अथ च सूचीपत्रपरिशोधनपत्रादीनि प्रकाशनत्वरणवशान्नात्र योजितानीति पाठकैः क्षन्तव्यम्। पारिभाषिकशब्दानामनुक्रमणिका तु ग्रन्थान्ते सपृष्ठाङ्कनिर्देशं नियोजिता। तत्र च क्वचित् क्वचित् संज्ञाशब्दाः परिशोधिता अपि। तदेवं प्रयत्नेन साधितेऽपि कार्य्येऽस्मिन् दृष्टिदोषाद् मुद्रणदोषाद् मादृशाल्पज्ञजनप्रज्ञादोषाद्वा यत्र यत्र स्खलनं स्यात् तत्र तत्र करुणापरैर्गुणैकपक्षपातिभिर्विद्वद्भिः संशोधनीयम्, सूचनीयश्चाहं येनाचिरेणैव प्रकाशयिष्यमाणे संस्करणान्तरे तत्सर्वं निराकृतं भवेत्। इति—

| | |
|---|---|
| १५ मञ्जोलीकोठी<br>असीसङ्गमः<br>काशीक्षेत्रम्<br>महाशिवरात्रिः<br>२००६ | निवेदयते<br>विदुषां विधेयो<br>दामोदर-शर्म्म-गौडः। |

———

# विषयोल्लेखः

## शारीरखण्डं प्रथमम्

### प्रथमोऽध्यायः

(१) श्रोणिविज्ञानम् ... ... ... १—१५

अस्थीनि—१—सन्धयः—३—स्नायवः—५—प्रविभागाः—६—तलभूमिः—७—व्यासाः—११

### द्वितीयोऽध्यायः

(२) बहिर्जननाङ्गविज्ञानम् ... ... ... १६—२२

भगपीठम्—१६—भगोष्ठद्वयम्—१७—भगालिन्दः—१८—भगशिश्निका—मूत्रप्रसेकद्वारम् १९—योनिद्वारम्—योनिच्छदः—योनिद्वारिको ग्रन्थिः—२०—योनिद्वारिका प्रहर्षपिण्डिका—२१—मूलपीठम्—२२

### तृतीयोऽध्यायः

(३) अन्तर्जननाङ्गविज्ञानम् ... ... ... २३—३९

योनिः—२३—गर्भाशयः— २६—गर्भाशयबन्धनिकाः—३०—अनुगर्भाशयिका रक्तवाहिन्यः—३३—नाड्यः—३४—रसायन्यः—बीजवाहिन्यौ—३६—बीजग्रन्थिः—३७

### चतुर्थोऽध्यायः

(४) गर्भबीजविज्ञानम् ... ... ... ४०—५०

बीजपुटकानि—४०—स्त्रीबीजम्—४२—बीजागमः—४३—पीतपिण्डम्—४५—बीजविपाकः—४६—पुम्बीजम्—४८

## पञ्चमोऽध्यायः


(५) रजोविज्ञानम् ... ... ... ५१–६५

रजोदर्शनम्—५१— रजःक्षयः—५३–आर्त्तवाऽदर्शनम्—असृग्दरः—५४—आर्त्तवचक्रम्— ५६—रजोहेतुः—५९ – रजःस्वरूपम्—६१—रजःकार्यम्—६३—रजसो रसजत्वम् —६४


## षष्ठोऽध्यायः


(६) ऋतुविज्ञानम् ... ... ... ६६–८०

ऋतुकालः—६६—ऋतुमतीलक्षणानि—६८—ऋतुकालचर्या—६८—गर्भाधानविधिः—७१


# गर्भखण्डं द्वितीयम्

## प्रथमोऽध्यायः


(७) गर्भावक्रान्तिविज्ञानम् ... ... ... ८३–१०५

यस्मिन् गर्भसंज्ञा—८३—यया चानुपूर्व्याऽभिनिर्वर्त्तते कुक्षौ—८४—कललावस्था — बुद्बुदावस्था—८५—स्तरनिर्वृत्तिः—८६—गर्भकोषयल्ककोषौ—८७—गर्भस्थली—८८— गर्भवृन्तम्–गर्भवपनम्— ८९— गर्भशरीरनिर्मितिः —९०–नालपुटकम्—यल्कवाहिनी—९१—अलिन्थः९२–जननस्तरैरभिनिर्वर्त्तमाना भावविशेषाः– ९३–गर्भधराकला –९४—प्राचां गर्भावक्रान्तिः–९७–लिङ्गभेदहेतवः–१०२


## द्वितीयोऽध्यायः


(८) गर्भोपादानविज्ञानम् ... ... ... १०६–११४

षड्धात्वात्मकता—१०६—चतुर्विंशतिकता–११०–त्रिधातु-

कता—११०— षड्भावसमुदायसम्भवता—१११ — पञ्च-
चतुष्टयानामविरोधः—११३—मनुष्यविग्रहता—११४

## तृतीयोऽध्यायः

(९) अपरादिविज्ञानम् ... ... ... ११५–१२६

अपरानिर्मितिः—११५—कोरकाः—११५—कोरकान्तरालानां शोणितावकाशेषु परिणमनम्—११७—अपरास्तम्भिका—११८—चक्रकुल्या—अपरास्वरूपम्—११९—अपराकर्माणि—१२१ — जरायुः—१२२—गर्भोदकम्—१२३ — नाभिनाडी—१२५

## चतुर्थोऽध्यायः

(१०) गर्भपोषणविज्ञानम् ... ... ... १२७–१३५

किमाहारो वर्त्तयति—१२७—गर्भरक्तसंवहनम्—१३०—जातमात्रस्य संवहनकर्मणि वैशिष्ट्यम्—१३४

## पञ्चमोऽध्यायः

(११) गर्भवृद्धिविज्ञानम् ... ... ... १३६–१४४

मासानुमासिको वृद्धिक्रमः—१३६—किन्नु खलु गर्भस्याङ्ग पूर्वमभिनिर्वर्त्तते कुक्षौ—१४२

## षष्ठोऽध्यायः

(१२) प्रगल्भगर्भविज्ञानम् ... ... ...१४५–१५९

प्रगल्भो गर्भः—गर्भकरोटिः—१४५—करोटौ लक्षणीया विशेषाः—१४६ — करोटिव्यासाः —१४९—करोटिपरिचयः—१५०—कुतोमुखःकथञ्चान्तर्गतस्तिष्ठति—गर्भाङ्गसंस्थितिः—१५१ — गर्भावस्थितिः—१५२ — गर्भावतरणानि—१५३—गर्भोदयाः—१५४—शिरोवतरणहेतवः—१५५—गर्भासनानि—१५७—शीर्षोदय आसनचतुष्टयम्—१५७

---

# गर्भिणीखण्डं तृतीयम्

## प्रथमोऽध्यायः

(१३) गर्भिणीविज्ञानम् ... ... ... १६३–१७५

गर्भिण्यास्तत्तदङ्गगतानि परिवर्त्तनानि—गर्भाशयः—१६३—वर्धमानगर्भाशयस्य मासिकसीमनिर्देशः—१६५—गर्भाशयग्रीवा—१६७—बीजस्रोतसी — बीजग्रन्थी—योनिः—१६८—श्रोणितलभूमिः—त्वचा —उदरम्— १६९—स्तनौ—१७१ — रक्तसंस्थानम्—मूत्रसंस्थानम्—१७२—रसपाकविधिः—१७३—नाडीसंस्थानम्—स्रोतोविहीन-ग्रन्थयः—१७४

## द्वितीयोऽध्यायः

(१४) गर्भनिर्णयविज्ञानम् ... ... ... १७६–२०७

हीनबललक्षणानि—१७७ — मध्यबललक्षणानि—१७९—उत्तमबललक्षणानि—१८४—सद्योगृहीताया लक्षणानि—१८८—व्यक्तगर्भायाः सामान्यलक्षणानि—१८९—सापेक्षनिश्चितिः—१९०— मासिककालनिर्णयः—२०२— मृत-गर्भालक्षणानि—२०३—गर्भसङ्ख्यानिर्णयः—२०५—प्रस-वतिथिनिर्धारणम्— २०५

## तृतीयोऽध्यायः

(१५) गर्भिणीचर्याविज्ञानम् ... ... ... २०८–२२१

गर्भिण्याः स्वस्थवृत्तम्—२०८—गर्भिण्याः सामान्यतो विशेषतश्च परिज्ञेया विषयाः—२०९—गर्भिणीचर्याविषये प्राचामुपदेशाः—२१०—मासिकं कर्त्तव्यं कर्म—२१५—पुंसवनम्—२१८

## चतुर्थोऽध्यायः

(१६) परीक्षणविज्ञानम् ... ... ... २२२—२४०

प्रश्नपरीक्षणम्—२२२—दर्शनपरीक्षणम्—२२३ — उदर-स्पर्शनपरीक्षणम् — २२३—श्रवणपरीक्षणम् — २३१ — योनिपरीक्षणम्—२३२—श्रोणिमापनम्—२३५

---

# प्रसवखण्डं चतुर्थम्

## प्रथमोऽध्यायः

(१७) प्रसवविज्ञानम् ... ... ... २४३—२५३

प्राकृतो वैकृतश्च प्रसवः—२४३—आसन्नप्रसवस्य लक्षणानि—२४३—प्रसवक्रमः २४५—प्रथमावस्था — २४५ —द्वितीयावस्था—२४७ — तृतीयावस्था—२४८ — प्राचां वचांसि — २४९ — प्रसवहेतुविचारः — २५० — प्राचां वचांसि—२५३

## द्वितीयोऽध्यायः

(१८) प्रसवाङ्गविज्ञानम् ... ... ... २५४—२६२

प्रसाविका शक्तिः—२५४ —अपत्यपथः—२५५ —उत्तराधरगर्भशय्ये — २५६ — ग्रीवाविकसनम् — २५७ — गर्भाशयद्वारविकसनम् — अधरगर्भशय्याविस्फायनम् — २५८—गर्भाशयकायमानह्रासः—गर्भाशयसङ्कोचानां विविधाङ्गेषु परिणामः—२५९—अपत्यम्—अपत्यगतयः—२६१

## तृतीयोऽध्यायः

(१९) प्रसवोपक्रमविज्ञानम् ... ... ... २६३—२९३

सूतिकागारम्—अग्रोपहरणीयद्रव्याणि — २६३ — प्रास-

विकशुद्धिः—२६५—आसन्नप्रसवोपक्रमः—२६६ — प्रथमावस्थाकर्त्तव्यानि — २६७ — द्वितीयावस्थाकर्त्तव्यानि—२६८—नवजातसङ्गोपनम्—२७३ – तृतीयावस्थाकर्त्तव्यानि —२७४—मुक्तगर्भाशयाया अपराया लक्षणानि–२७६ —अप्रपन्नाया अपराया निष्कासनविधयः—२७८—अपराजरायुमूलाधारपरीक्षणम्—२७९—सामान्या सूतिकोपचर्या–२८०— बालोपचर्या–२८१–प्राचां मतेन प्रसवोपक्रमश्च—२८२

## चतुर्थोऽध्यायः

(२०) शीर्षोदयविज्ञानम् ... ... ... २९४—३१०

हेतवः—२९४—आसनानि—निर्णयः–२९५ — निष्क्रमणविधिः—२९६ — सङ्कोचः— २९७ — अन्तरावर्त्तनम्—२९८— प्रसारः —२९९—बहिरावर्त्तनम्—३००—विशल्यभावः—शिरोरूपणम्—३०१—अधिशिरः—३०२—तत्तदासनेषु निष्क्रमणविधिविस्तरः—३०२—वैकृतं निष्क्रमणम् —शिरसः प्रतीपावर्त्तनम्–३०५—शिरसोऽत्यावर्त्तनम्—३०६—अंसापवर्त्तनम्–३०७–शिरसःप्रतीपावर्त्तने प्रसवोपक्रमः—३०७—शीर्षोदये शिरोरूपणम्—३१०

## पञ्चमोऽध्यायः

(२१) मुखोदयविज्ञानम् ... ... ... ३११—३२४

मुखोदयः—३११—हेतवः— ३१२–आसनानि— ३१३ — निर्णयः—३१४—निष्क्रमणविधिः–३१५—निष्क्रमणविधिविस्तरः— ३१८–वैकृतं निष्क्रमणम— ३१९—शिरोरूपणम् शुभाशुभम्—मुखोदयोपक्रमः ३२१

## षष्ठोऽध्यायः

(२२) ललाटोदयविज्ञानम् ... ... ... ३२५–३२८

हेतवः—३२५— आसनानि—निर्णयः — निष्क्रमणविधिः —३२६– उपद्रवाः—शिरोरूपणम्—उपक्रमः—३२७

## सप्तमोऽध्यायः

(२३) नितम्बोदयविज्ञानम् ... ... ... ३२९–३५२

नितम्बोदयप्रकाराः—३२९—हेतवः—गर्भासनानि—३३०—निर्णयः—३३१—निष्क्रमणविधिः—३३२—निष्क्रमणविधिविस्तरः—३३६ वैकृतं निष्क्रमणम्—३३८—रूपणम्—शुभाशुभम्—३३८—उपद्रवाः—३३९ — गर्भमृत्युहेतवः—३३९—उपक्रमः—३४०—उपक्रमविस्तरः—३४१—शिरोबहिष्करणविधयः—३४३—विशिष्टोपद्रवाः सोपक्रमाः—जघनसङ्गः—३४६—उद्बाहुता—३४८ — अनुग्रीवबाहुता—३५०—शिरःसङ्गः—३५१—शिरोग्रहः—शिरसः प्रतीपावर्त्तनम्—३५२

## अष्टमोऽध्यायः

(२४) स्कन्धोदयविज्ञानम् ... ... ... ३५३–३६५

पार्श्वावतरणम्—३५३—हेतवः—गर्भासनानि—३५४—निर्णयः—३५६—निष्क्रमणविधिः—३५७—शुभाशुभम्—३५९—उपक्रमः—३६०—आसनोपक्रमः—३६१—शीर्षावर्त्तनम्—श्रोण्यावर्त्तनम्—३६२—गर्भच्छेदनम्—उदरविपाटनम्—३६३—जटिलावतरणम्—३६३

## नवमोऽध्यायः

(२५) बह्वपत्यताविज्ञानम् ... ... ... ३६६–३८०

प्रकाराः—हेतवः—३६६—अतुल्यबीजो यमः—३६७—तुल्यबीजो यमः—३६८—तुल्यत्वं भिन्नत्वं कञ्चाधिगर्भाधानम्—३७०—अवतरणक्रमः—३७२—निर्णयः — ३७३—प्रसवक्रमः—३७४—उपद्रवाः— ३७५ — शुभाशुभम्—उपक्रमः—२७६—विविधाः परस्परासङ्गास्तेषामुपक्रमश्च—३७८—प्राचां वचांसि—३८०

## दशमोऽध्यायः

(२६) मूढगर्भविज्ञानम् ... ... ... ३८१–४००

त्रिविधो मूढगर्भः—३८१—असम्यगागतस्य चतुर्धाऽष्टधा वा गतिः—३८२—अनिरस्यमानस्य हेतवः–३८४–सम्मोहकारणानि—३८५—द्विविधो गर्भमोहः—३८५—साध्यासाध्यता—३८६—उपक्रमसिद्धान्ताः—३८८—असम्यगागतस्योपक्रमः—३८९ — अनिरस्यमानस्योपक्रमः—३९०—निर्हृतशल्याया उपचारविधिः—३९२—सम्मोहितस्योपक्रमः—दारुणमोहोपक्रमः—३९३– अदारुणमोहचिकित्सा —३९४—कृत्रिमश्वसनस्यानेके विधयः—३९५—सुखप्रसूतिकृद्योगाः—४००

---

# सूतिकाखण्डं पञ्चमम्

## प्रथमोऽध्यायः

(२७) सूतिकाविज्ञानम् ... ... ... ४०३—४२७

सूतिकाकालस्यावधिः—४०३ — गर्भाशयादिसंवरणम्—४०३ — सूतिकास्रावः–४०६–स्तनपरिवर्त्तनानि—४०७—तत्तत्संस्थानगतपरिवर्त्तनानि — — ४०८—— सूतिकावेद्यो लक्षणवर्गः—४११—सूतिकोपक्रमः—४१२—स्नेहादिपानम —४१३—विश्रान्तिः—४१४— निद्रा—बुभुक्षा— ४१६ — विण्मूत्रप्रवृत्तिः—४१९—सङ्क्रमणवारणम्—४१९–स्तनपालनम् —४२१–स्तन्यपायनविधिः—४२१— स्तनस्तन्यसम्पत्——४२२—-क्षीरजननानि—४२३—स्तन्यपायनविधौ वचनानि — ४२३ — मक्कलशूलशमनम् — ४२४—भिषजःकर्त्तव्यानि—-२२४—-पुनरावर्त्तदर्शनम—४२७।

---

नमो भगवते धन्वन्तरिदेवाय ।

# ग्रन्थकर्त्तुर्निवेदनम्

यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥१॥

भावयामि भवं देवं भवानीसहितं विभुम् ।
यत्कृपालेशमात्रेण पुंसः स्यादहितं हितम् ॥२॥

नमश्चाथ महर्षिभ्यस्तेभ्यो लोकहिताय यैः ।
निरन्तरं तपस्तप्त्वा प्रोक्तो वेदोऽयमायुषः ॥३॥

*   *   *

स्वतन्त्रे भारते वर्षे राजस्थानेऽतिविश्रुते ।
मुकुन्ददुर्गवास्तव्यो भारद्वाजाख्यगोत्रकः ॥४॥

हरदेवसुतो विप्रः सुन्दरीगर्भसम्भवः ।
गजाननानुजो गौडः शर्मा दामोदरः सुधीः ॥५॥

महर्षेर्मालवीयस्य हिन्दूनां मानवर्धने ।
विश्वविद्यालये काश्यामध्यापकपदे स्थितः ॥६॥

*   *   *

नत्वा गुरुपदद्वन्द्वं दृष्ट्वा तन्त्राण्यनेकशः ।
छात्राणामुपकाराय तनुते तन्त्रमुत्तमम् ॥७॥

नव्यायुर्वेदसंसिक्ता प्राच्यायुर्वेदभूमिजा ।
फलं प्रसूतितन्त्राख्यं सूते मे धिषणालता ॥८॥

आयुर्वेदः क्व गम्भीरः क्व मेऽल्पविषया मतिः ।
तथापि चापलादस्मि कर्तुं किमपि साहसम् ॥९॥
शास्त्राणि सम्मुखीकृत्य प्रत्नानि नूतनानि च ।
ग्रथ्नामि नवकं ग्रन्थं तुष्यतात् सुरभारती ॥१०॥

*　　*　　*

आयुर्वेदो महाँस्तस्य गरिमाऽद्यापि पूर्ववत् ।
दृष्टस्तदेकदेशस्य लोपाद् विज्ञानवारिधौ ॥११॥
यथास्थलं निमग्नानि प्राचामिह वचांसि तु ।
स्वयं स्वगौरवं वक्ष्यन्त्युद्धृत्योद्धृत्य दर्शनात् ॥१२॥

*　　*　　*

उन्नतात् पूर्वदेशाद्या आपगाः पश्चिमाननाः ।
ताभिः सम्पूरितो भाति प्रोच्छलः पश्चिमोदधिः ॥१३॥
संयोगात्तत्र प्राप्तानि यान्यार्षवचनानि वै ।
अवगाह्य विमृश्यानि रत्नानीव सुकोविदैः ॥१४॥
नैसर्गिकाण्यमूल्यानि सुप्रभाणि महान्ति च ।
क्षारोदकेऽन्यथा किं स्यात्फलं गम्भीरमज्जनैः ॥१५॥

# अभिनवं प्रसूतितन्त्रम्।

## प्रसूतिशारीरखण्डम्।

### प्रथमोऽध्यायः।

अथातः श्रोणिविज्ञानीयमध्यायं व्याख्यास्यामः।

प्रसूतिशारीरमिति स्त्रीश्रोणिशारीरम्, यदपेक्ष्यते प्रसवविज्ञानाय। श्रोणिनाम त्रिकनितम्बवङ्क्षणोपलक्षितः कट्यूरुमध्यगो देशः सान्तर्गुहो, यमाश्रित्यावतिष्ठन्ते स्त्रिया अन्तर्जननाङ्गानि सह बस्त्यादिभिः सुरक्षितम्। निर्मीयते चैषा श्रोणिचक्रनिर्मापकैश्चतुर्भिरस्थिभिर्दृढस्नायुबद्धैराभ्यन्तर-पेशीविशेषैश्च। अथ चास्याः पेशीविरहितायाः कङ्कालश्रोणिः, तदन्वितायाश्च मांसलश्रोणिरिति द्विविधं संज्ञानं वर्णनासौकर्याय।

### कङ्कालश्रोणिः।

अस्थीनि :—श्रोणिकङ्कालश्चास्थिचतुष्टयविनिर्मितम्। तत्र द्वे श्रोणि-फलके, एकं त्रिकास्थि, अनुत्रिकास्थि चैकमिति चत्वारि श्रोणिचक्रनिर्मापका-ण्यस्थ्नां भवन्ति। प्राञ्चस्तु पुनः श्रोणिफलकद्वयस्य पुरःस्थं भागद्वयं सन्धानिकासन्धितं पृथगेवाभिमुखं कटीसन्धानकारकं तिर्यगस्थीति कृत्वा पञ्चकमस्थ्नामाहुः, भगास्थि चेति तस्य संज्ञा। यदुच्यते—

---

प्रसूतिशारीरम् Obstetrical Anatomy. श्रोणिः Pelvis. श्रोणिचक्रम् Pelvic gurdle. कङ्कालश्रोणिः Bony or Static Pelvis. मांसलश्रोणिः Dynamic Pelvis.

"श्रोण्यां पञ्च, गुदभगनितम्बेषु चत्वारि, त्रिकसंश्रितमेकम्"

—सु० शा० ५

"द्वे श्रोणिफलके, एकं भगास्थि पुंसां मेढ्रास्थि च" इति।

—च० शा० ७

**श्रोणिफलकम्**—तदेतत् कपालभूयिष्ठं बृहदस्थिफलकम् अस्थित्रितयसंयोगादारभ्यते जघनकपालम्, कुकुन्दरास्थि, भगास्थि चेति। तत्र, आविंशतिवर्षमेषामवयवानां वंक्षणोदूखले तरुणास्थिव्यवधानकृतम् पार्थक्यं दृश्यते। यौवने चैतेषां परस्परं संयोगो वंक्षणोदूखलस्थेन रेखात्रितयेन सूचितलक्षणः। प्रौढ़े तु वयसि त्रयाणामंशानां सङ्घातादेकीभावो रेखात्रयविलोपश्च।

**जघनकपालं** नामोर्ध्वतनोंशो विस्तृतपक्षाकारः। तस्य परिधिभूता धारा **जघनधारा** नाम। सा अग्रतः **पूर्वोर्ध्वकूटे** पश्चिमतश्च **पश्चिमोर्ध्वकूटे** पर्यवसिता। मध्ये च जघनधारायास्तुङ्गप्रदेशो **जघनचूड़ा** नाम। कपालस्य ईषत्खातगर्भम् आभ्यन्तरतलन्तु **जघनोदर**संज्ञम्, श्रोणिपक्षिण्याः पेश्याः प्रभवस्थानम्। तदधःसाम्नि च वस्तिगुहोर्ध्वसीमभूता रेखा **वक्ररेखा** नाम। तत्रैव च भगकुकुन्दरास्थिभ्यां संयोगस्थले उत्सेधः **श्रोणिकङ्कतिकोत्सेधः**। जघनकपालाभ्याञ्च महाश्रोण्याः पार्श्वभागौ निर्मीयेते।

**कुकुन्दरास्थि** नामाधस्तनोंशोऽर्धचन्द्रप्रायः **कुकुन्दरपिण्डेन कुकुन्दरकण्टकेन** चोपलक्षितः। लघुश्रोण्याः पार्श्वभागौ कुकुन्दरास्थिभ्यां निर्मीयेते। वक्रिमविशेषाच्च कुकुन्दरास्थि क्रोड़े पतितं गर्भशिरः पुरो घूर्णयति।

---

श्रोणिफलकम् Hip Bone. जघनकपालम् Iliam. जघनधारा Iliac Crest. पूर्वोर्ध्वकूटम् Anterior Superior Iliac Spine. जघनचूड़ा Highest point of Crest. जघनोदरम् ( जघनखातम् ) Iliac Fossa. वक्ररेखा Arcuate Line. श्रोणि-कङ्कतिकोत्सेधः Iliopectineal Eminence. कुकुन्दरास्थि Ischium. कुकुन्दरपिण्डकम् Ischial Tuberosity. कुकुन्दरकण्टकम् Ischial Spine.

भगास्थि नाम भगाद्यधिष्ठानभूतः श्रोणिफलकस्य पुरस्तनोंशः । तदेतत् इतरभगास्थ्ना कृतसन्धानं लघुश्रोण्याः पुरोभागं निष्पादयति । अस्थ्नश्च त्रयो भागा भवन्ति मुण्डम्, उत्तरशृङ्गम्, अधरशृङ्गञ्चेति । तत्र मुण्डे भगशिखा, उत्तरशृङ्गे च भगतीरणिका ( वस्तिकण्ठिका रेखा ) संलक्षणीया । उत्तराधरशृङ्गाभ्याञ्च क्रमशो भगास्थि जघनकपालेन कुकुन्दरेण च संयुज्यते । भगास्थिकुकुन्दरास्थिभ्यां मण्डलीकृतं गवाक्षाकारमन्तरालञ्च श्रोणिगवाक्षं नाम ।

त्रिकास्थि नाम न्युब्जपृष्ठं श्रोणिफलकयोरन्तरालस्थं त्रिकोणप्रायम् अस्थिफलकम्, त्रिककशेरुकापञ्चकसङ्घातनिष्पन्नम् । सहानुत्रिकेण चेदं लघुश्रोण्याः पश्चिमभागं निर्माति । त्रिकास्थ्न ऊर्ध्वसन्धेयपृष्ठस्य पूर्वधारा तु 'त्रिकोष्ठ'संज्ञया व्यवह्रियते । अस्थ्नः पक्षतिप्रायावंशौ च त्रिकपक्षौ नाम । पूर्वपृष्ठे स्थितानि छिद्राणि तु त्रिकपूर्विकाणां नाडीनां निर्गमाय । एता एव त्रिकनाड्यः प्रसवकाले गर्भशिरःसम्पीडिताः सक्थ्नोरुद्वेष्टनं प्रायशो जनयन्ति ।

अनुत्रिकास्थि च नाम त्रिकास्थ्नोऽधःस्थितस्त्रिकोणाकृतिः काकचञ्चुसन्निभोऽस्थिसङ्घातः, क्षुद्रकशेरुकाचतुष्टयसंयोगेन निष्पन्नः । तेनैतेन लघुश्रोण्याः पश्चिमाधरभागो निर्मीयते ।

सन्धयः—चत्वारः सन्धयो भवन्ति परस्परमेषामस्थ्नां सन्धानात् । तत्र श्रोणिफलकद्वयस्य पश्चिमतस्त्रिकास्थ्ना संयोगात् वामदक्षिणभेदेन द्वौ

---

भगास्थि Pubes. भगशिखा Pubic Crest. भगतीरणिका Pecten Pubis. श्रोणिगवाक्षम् Obturator foramen. त्रिकास्थि Sacrum. त्रिकोष्ठम् Promontary. त्रिकपक्षः Ala of Sacrum. अनुत्रिकास्थि Coccyx.

सन्धा त्रिकजघनसन्धी नाम, पुरतश्च फलकद्वयस्य परस्परं सन्धानादेकः सन्धिः भगसन्धानिका नाम, त्रिकानुत्रिकयोर्मेलनाच्च सन्धिः त्रिकानुत्रिकसन्धिरिति सन्धिचतुष्टयं सामान्येन व्याख्यातम्भवति ।

[ १ चित्रम् ]

कङ्कालश्रोणिः ।




१—त्रिकोष्ठम् । २—पञ्चमी कटिकशेरुका । ३—त्रिकजघनसन्धिः । ४—जघनकपालम् । ५—श्रोणिगुहा । ६—जघनधारा । ७—पूर्वोर्ध्वकूटम् । ८—महाशिखरकम् । ९—ऊर्व्वस्थि । १०—भगसन्धानिका । ११—भगतोरणिका । १२—त्रिकास्थि । १३—भगास्थि । १४—अनुत्रिकास्थि । १५—कुकुन्दरास्थि । १६—जघनोदरम् । १७—त्रिकानुत्रिकसन्धिः ।

---

त्रिकजघनसन्धिः Sacro-iliac Joint. भगसन्धानिका Symphisis Pubis. त्रिकानुत्रिकसन्धिः Sacro-coccygeal Joint.

सन्धयश्चैते प्रायेण दृढ़तरा अपि उत्तरगर्भकाले रक्तातिसञ्चारहेतुकेन स्नायुमार्दवेन श्लेष्मधरकलापुटकाभिव्यक्त्या च भवन्ति पुनरीषच्चला:, जनयन्ति च प्रसवसौकर्यं तत्र तत्रावकाशदानेन। यथा, अवतरता हि गर्भशिरसा यदा त्रिकोष्ठं सम्पीड्यते तदा तत् किञ्चिद् पश्चादपसरति, श्रोणिकण्ठिकां रेखामतिक्रान्ते च शिरसि पुनः प्रतिनिवर्त्तते स्वस्थानम्। ततश्च पश्चिमतः पीड्यमाने त्रिकनिम्नभागे पुरतोऽप्येतत् प्रतिक्षिप्यते। एवं पूर्वापरमान्दोलितं त्रिकास्थि लघुश्रोण्याः प्रवेशद्वारं निर्गमद्वारञ्च ह्रसयति विवर्धयति वा यथाक्रमम्। सोऽयम् त्रिकजघनसन्धाने गतिसम्भवस्य प्रभावः। एवमेव चानुत्रिकमपि पश्चिमतोऽपसार्यमाणं प्रसवकाले निर्गमद्वारपथं प्राङ्गुलमितं विवर्धयति। भगसन्धानिकापि च गर्भिण्या भवति किञ्चन विकसनक्षमा।

अथाहुः प्राञ्चः—

१—त्रयः सन्धयः कटीकपालेषु।

२—शिरःकटीकपालेषु तुन्नसेवन्यः।

३—अंसपीठगुदभगनितम्बेषु सामुद्गाः* । सु० शा० ५

स्नायवः—सन्ति चात्र काश्चन स्नायवः सन्धिस्नायुभ्यो भिन्ना या विशेषतः श्रोणिकङ्कालमारचयन्ति तत्तदन्तरालपूरण्यः। तद्यथा—त्रिकपिण्डीया, त्रिककण्टकीया, वंक्षणिका, गवाक्षकला चेति। तत्र पूर्वे द्वे यथादेशसंयुक्ते त्रिकनितम्बान्तरालं पश्चिमतः पूरयतः, रचयतश्च कुकुन्दरद्वारं गृध्रसीद्वारञ्च। तृतीया पुनर्जघनकपालस्य पूर्वोर्ध्वकूटे

---

* अंसपीठेत्यत्र वंशपीठेति अंसकूटेति वा पाठपरिवर्त्तनं कार्यम्, प्रत्यक्षविरोधापत्तेरिति नव्याः।

त्रिकपिण्डीया Sacrotuberous Lig. त्रिककण्टकीया Sacrospinous Lig. वंक्षणिका Inguinal Lig. गवाक्षकला Obturator membrane.

भगास्थ्नो भगकूटे च तिर्यक् निबद्धा तत्रत्यमन्तरालं पूरयति रचयति च वंक्षणदरीसंज्ञं कुहरं पुरःसक्थिकानां धमनीशिरानाड़ीपेशीनां निर्गमाय। चतुर्थी तु स्नायुः श्रोणिगवाक्षमाच्छादयति। इति।

श्रोणिकङ्कालञ्चैतत् ऊर्ध्वतनं महायतनंऽधस्तनं गर्भाशयतनं च प्रदेशे मध्यस्थया श्रोणिकण्ठिकया रेखया विभज्यमानं क्रमशो महाश्रोणिः (गौणी श्रोणिर्वा) लघुश्रोणिश्चेति (मुख्या श्रोणिर्वा) स्थलभेदेन द्वेधा भिद्यते। व्यवहारे तु श्रोणिशब्दो लघुश्रोणिमात्रपरः। श्रोणिकण्ठिका च रेखा त्रिकोष्ठ-त्रिकपक्षधारा-वक्ररेखा-भगतीरणिका-भगशिखानां सम्मेलनतः प्रादुर्भूता लघुश्रोण्याः प्रवेशद्वारं क्रोड़ीकरोति।

महाश्रोणिः—अस्या पुनरान्तरतलं जघनखाताङ्कितं श्रोणिपक्षिण्या पेश्या समाच्छादितं च भवत्युपधानकल्पम्, यदाश्रित्य वर्त्तते गर्भाशयो गर्भेणाधिवृद्धः। निर्गलनिकाकृतिश्च महाश्रोणिर्गर्भशिरो लघुश्रोण्याः प्रवेशद्वाराभिमुखं प्रणुदति। अथ चास्या व्यासमानमपि प्रायो लघुश्रोण्या व्यासमानेन सह नियतान्तरमिति महाश्रोण्याः प्रसवंप्रयोजनं वर्णितं भवति।

लघुश्रोणिः—एषा पुनः पुरतो भगास्थिभ्यां,पश्चिमतस्त्रिकानुत्रिकाभ्यां, पार्श्वतः कुकुन्दरास्थिभ्यां त्रिकपिण्डीयत्रिककण्टकीयस्नायुभिश्च सीमिता प्रवेशद्वारम्, श्रोणिगुहा, निर्गमद्वारञ्चेति त्रिविधस्थलेषु विभज्यते प्रसववर्णनासौकर्य्याय। अस्याः पुरःसीमा सार्धैकतो द्विप्राङ्गुलमाना, पश्चिमसीमा च सार्धचतुःप्राङ्गुलतः पञ्चप्राङ्गुलमिता वक्राऽयता च।

तत्र प्रवेशद्वारं नाम श्रोणिकण्ठिकया रेखया प्रावृतं गुहाया ऊर्ध्वतलम्। निर्गमद्वारञ्च पुनर्गुहाया अधस्तलदेशो रूपतश्चतुर्भुजः, यः

---

महाश्रोणिः Greater or False Pelvis. लघुश्रोणिः Lesser or True Pelvis. श्रोणिकण्ठिका रेखा Brim of Pelvis. निर्गलनिका Funnel. प्रवेशद्वारम् Inlet. निर्गमद्वारम् Outlet.

पुरतो भगसन्धानिकया भगाधरशृङ्गयोश्चाधरधाराभिः, पार्श्वतः कुकुन्दर-पिण्डाभ्याम्, पश्चिमतोऽनुत्रिकाग्रेण त्रिकपिण्डीयत्रिककण्टकीयाख्यस्नायूनामधोधाराभिश्च सीमितः । सोऽयं देशः कुकुन्दरपिण्डयोजन्या कल्पित-रेखया पूर्वापरतस्त्रिकोणद्वये विभज्यते 'मूत्रजननत्रिकोणम्' 'पायव्यत्रिकोण'-ञ्चेति यथासंज्ञे, तत्तदवयवानां तथावस्थानदर्शनात् । श्रोणिगुहा ( वस्ति-गुहा वा ) नाम उभयद्वारमध्यगतोऽवकाशः प्रधानाश्रयोऽन्तर्जननावयवानां सबस्तिमलाशयम् । अस्याः सीमचतुष्टयन्तु लघुश्रोणिसीमकृतमिति कङ्काल-श्रोण्यांख्याता भवति ।

## मांसलश्रोणिः ।

शरीरे पुनः पेश्यादयो मृदुभागाः कङ्कालश्रोण्या अन्तराकाशं ह्रसयन्ति स्वस्वस्थानमास्थिताः, निर्मान्ति च पुनः श्रोणितलभूमिं पुरतो वक्ष्यमाणाम् । तत्रोपश्रोणिकण्ठं दृश्येते कटिलम्बिन्यौ नाम दीर्घ पेश्यौ, याभ्यां ह्रस्यते प्रवेशद्वारस्यानुप्रस्थो व्यासः । अन्तर्गुहञ्च गुहापथः शुण्डिकया श्रोणिगवाक्षिण्याऽन्तःस्थया मलाशयमूत्राशयगर्भाशयादीनां प्राचीरैश्च सङ्कीर्यते ।

श्रोणितलभूमिः—सेयं निर्गमद्वारमाच्छाद्य स्थिता श्रोण्यास्तलभूमिर्यां निर्भिद्य वर्त्तन्ते योनिगुदं मूत्रप्रसेकश्च सुधृतम् । निर्मीयते चैषा समुदया-देषां भावानामधःक्रमेण—

( १ ) उदर्या कला ।

( २ ) उदर्यकलाबहिःस्थं मेदः ।

( ३ ) श्रोणिगुहान्तरीया कला ।

---

मूत्रजननत्रिकोणम् Urogenital Triangle. पायव्यत्रिकोणम् Anal Triangle. श्रोणिगुहा Pelvic Cavity.

श्रोणितलभूमिः Pelvic Floor. मूत्रप्रसेकः Urethra. १ Peritoneum. २ Extraperitoneal fatty tissue. ३ Pelvic fascia.

( ४ ) पायुधारण्यौ अनुत्रिकिण्यौच पेश्यः ( श्रोणिप्राचीरा ) ।

( ५ ) पायुधारण्या अधःपृष्ठाच्छादनी कला पायव्या नाम ।

( ६ ) मूलाधारकला ( त्रिकोणिका स्नायुर्वा ) ।

( ७ ) भगशिश्निकायाः शृङ्गद्वयम्, भगालिन्दीये प्रहर्षपिण्डके च ।

( ८ ) मूलाधारस्थाः काश्चन उत्तानाः पेश्यः ।

( ९ ) मूलाधारस्य मेदोधरायाः प्रावरण्या अन्तःस्तरः ।

[ २ चित्रम् ]

श्रोणितलभूमिः ।



क—शिश्निकाप्रहर्षणी । ख—योनिद्वारसंकोचनी । ग—शिश्निकाप्रहर्षणी । घ—योनिमूलच्छदा । च—पायुधारिणी । छ—नितंबपिण्डिका गरिष्ठा । ज—गुदसंकोचनी बाह्या ।

---

४ Levatores ani and Coccygei (Pelvic diaphragm). ५ Fascia covering lower surface of levatores. ६ The perineal membrane ( Triangular Ligament ). ७ Crura of clitoris and bulbs of vestibule. ८ Superficial perineal muscles. ९ Deep membranous layer of superficial fascia of perineum ( Colles's fascia)

(१०) तस्या एव प्रावरण्या बहिःस्तरो गुदकौकुन्दरीयेण मेदः-पिण्डेन सहितः ।

(११) त्वक् चेति ।

[ ३ चित्रम् ]

श्रोणिप्राचीराया ऊर्ध्वतलम् ।




अत्र पायुधारण्याख्यपेश्या भागत्रयं यथावद्दर्शितम् ।

१—कुकुन्दरानुत्रिकिणी । २—जघनानुत्रिकिणी । ३—भगानुत्रिकिणी । ४,५—धवलरेखा । गु.—गुदम् । यो.—योनिः ।

साऽसावञ्जलिसमाकारा तलभूमिः श्रोणिप्राचीरया पेश्या प्रचेष्टमाना सम्यग् विवर्त्तयति गर्भं प्रसूयमानमिति विशेषप्रयोजना ।

---

१० Superficial fatty layer of superficial fascia, ११ Skin.

[ ४ चित्रम् ]

## श्रोणिप्राचीराया अधरतलम् ।



अत्रापि पायुधारण्याः खण्डत्रयं दर्शितम् ।

१—कुकुन्दरानुत्रिकिणी । २—जघनानुत्रिकिणी । ३—भगानुत्रिकिणी । ४—मूलाधारस्थाः पेश्यः । गु—गुदम् । यो—योनिः ।

प्राञ्चस्तु पुनराहुः—

"अपत्यपथे चतस्रः, ( पेश्यः ) तासां प्रसृतेऽभ्यन्तरतो द्वे,
मुखाश्रिते बाह्ये च वृत्ते द्वे" इति*

—सु० शा० ५

## श्रोणिमापनम् ।

तत्र खलु श्रोण्या विविधव्यासमानानि मीयन्ते श्रोणिमापकेन यन्त्रेण बाह्याभ्यन्तरतः, येन श्रोणिमानविपर्यस्तकृतो मूढगर्भ उत कष्टप्रसवो वा

---

* अभ्यन्तरतो द्वे Two halves of pelvic diapragm, बाह्ये च द्वे Sphincter vaginae muscles. ( ते एव च बाह्ये द्वे योनिकर्णिकासञ्ज्ञे इति भावमिश्रः ) श्रोणिमापनम् Pelvimetry. श्रोणिमापकम् Pelvimeter.

भवितेति प्रागभिज्ञायते । अभिज्ञाते च तत्त्वे तथैवोपक्रम्यमाणा स्त्री शर्मं लभत इति स्पष्टमस्योपयोगित्वम् । अतएव च प्रथमं प्रसवित्र्याः स्त्रिया नियमेन श्रोणिमापनं विधीयते कुशलैर्भिषग्जनैरिति । व्यासाश्च खलु स्थानभेदेन निर्दिश्यमाना भवन्त्येते परिज्ञेयाः—

तत्र बाह्यश्रोणिव्यासाः पुनः पञ्च, तद्यथा—

( क ) जघनधारान्तरालिकः— जघनधाराबहिरोष्ठयोर्मध्यगतो विस्तृततमो व्यासः सार्धदशप्राङ्गुलत एकादशप्राङ्गुलं यावत् ।

( ख ) पुरःकूटान्तरालिकः—पूर्वोर्ध्वजघनकूटयोर्मध्यगोऽवकाशः सार्धनवप्राङ्गुलमानतो दशप्राङ्गुलमानः ।

( ग ) शिखरकान्तरालिकः—ऊर्वस्थ्नो महाशिखरकयोर्मध्यगतो व्यासो द्वादशप्राङ्गुलतः सार्धद्वादशप्रांगुलमानः ।

( घ ) कटिसन्धानिकान्तरालिकः—पश्चमकटिकशेरुकाकण्टकाग्रतो भगसन्धानिकाया ऊर्ध्वधारां यावत् स्थितः सार्धसप्तप्रांगुलमानतोऽष्टप्रांगुलमानोऽवकाशः ।

( ङ ) पश्चिमकूटान्तरालिकः—पश्चिमोर्ध्वकूटयोरन्तरालश्चतुःप्रांगुलमितः ।

आभ्यन्तरश्रोणिव्यासास्तु तावन्नव—उपप्रवेशद्वारम्, अन्तर्गुहम्, उपनिर्गमद्वारञ्चेति स्थानत्रयेऽनुदीर्घानुप्रस्थतिरश्चीनभेदत्रयेण व्यासनिर्देशात् । तिरश्चीनव्यासस्य प्रतिस्थलं वामदक्षिणभेदेन द्विविधत्वेऽपि तिरश्चीनत्वसामान्याद्दैर्घ्यसामान्याच्चैकत्वेन ग्रहः । अथ व्यासाः—

---

( क ) Inter-cristal diameter ( ख ) Interspnious diameter. (ग) Inter-trochanteric. (घ) External conjugate or Baudelocque's diameter. (ङ) Posterior interspinous. ( प्रांगुलशब्दश्चात्र तन्त्रे सर्वत्र 'इञ्च'परो ज्ञेयः ) ।

उपप्रवेशद्वारम्

(१) अनुदीर्घः—त्रिधा चायं स्थाननिर्देशभेदेन वर्ण्यते, तद्यथा

(च) त्रिकोष्ठमध्यतः सन्धानिकाग्रं यावत् ४½ मितः

(छ) त्रिकोष्ठमध्यतः सन्धानिकापृष्ठोर्ध्वं यावत् ४' मितः

(ज) त्रिकोष्ठमध्यतः सन्धानिकाधरं यावच्च ४¾" मितः

(२) तिरश्चीनः—द्विविधश्चायं वामदक्षिणभेदेन, स्वपार्श्वगतात् त्रिकजघनसन्धानादारभ्य परपार्श्वगतं श्रोणिकङ्कतिकोत्सेधं यावत् प्रसृतः ४½" मितश्च।

(३) अनुप्रस्थः—वक्ररेखामध्यगतो विस्तृततमोऽवकाशः ५" मितः।

[ ५ चित्रम् ]

प्रवेशद्वारगताः श्रोणिव्यासाः।



क, ख—अनुदीर्घव्यासः। ग, घ—तिरश्चीनव्यासो वामः। च, छ—अनुप्रस्थव्यासः। १—त्रिकपिण्डीया स्नायुः। २—त्रिककण्टकीया स्नायुः।

---

(१) Anteroposterior. (च) Anatomical Conjugate or Conjugata Vera. (छ) Obstatrical or available conjugate. (ज) Diagonal conjugate. (२) Oblique, (३) Transverse.

(मध्यकुहर)

( ४ ) अनुदीर्घः—[ त्रयोऽप्येते तृतीयत्रिककशेरुकायाः
( ५ ) तिरश्चीनः—सन्धानिकापश्चिममध्यभागस्य चान्त-
( ६ ) अनुप्रस्थः—राले यथास्थिताः ४½′ मिता भवन्ति ]

(निर्गमद्वार)

( ७ ) अनुदीर्घः—अनुत्रिकस्य यथास्थितस्याग्रतः सन्धानिका-
धरं यावत् ४′ मितः, अनुत्रिके पश्चिमतोऽ-
पसृते तु ५′ मितो भवति ।
( ८ ) तिरश्चीनः—त्रिकपिण्डकस्नाय्वोर्मध्यतो भगाधरशृङ्ग-
मध्यं यावत् ४¾′ मितः ।
( ९ ) अनुप्रस्थः—कुकुन्दरपिण्डान्तःपृष्ठयोरन्तरालः ४ मितः ।

[ ६ चित्रम् ]

**निर्गमद्वारगतौ श्रोणिव्यासौ ।**



क, ख—अनुदीर्घव्यासः । ग, घ—अनुप्रस्थव्यासः ।

स्मर्त्तव्यञ्चात्र—जघनधारान्तरालिके पुरःकूटान्तरालिके च व्यासे प्राङ्गुलमितो यो मानभेदः स स्थिरसाम्यः, सूचयति च जघनधारावक्रिम्णः श्रोण्याश्च प्राकृतदशाम् । वैषम्यं तु पुनः सङ्कुचितश्रोणीकाया आयतश्रो-

णीकाया वा स्त्रिया दृश्यते। तत्रायं विशेषः, उभयोर्निश्चितमानभेदस्य हीनत्वे श्रोण्यायामः, मानभेदस्य तथात्वेऽपि व्यासद्वयस्य हीनमानत्वे श्रोणि-सङ्कोच इत्यनुमीयते। जघनधारान्तरालिकश्च व्यासः श्रोणिप्रवेशद्वारग-तादनुप्रस्थव्यासात् द्विगुणप्रायः। एवं कटिसन्धानिकान्तरालिको व्यासः प्रवेशद्वारस्यानुदीर्घव्यासात् सार्धत्रिप्राङ्गुलाधिक इति बाह्यश्रोणिमापने-नापि आभ्यन्तरश्रोणिव्यासमानं शक्यमनुमातुमिति। आभ्यन्तरश्रोणि-मापनञ्च यथार्थमानप्रदर्शकमपि कष्टतमो विधिर्भवति, मूर्च्छितायामेव स्त्रियां यन्त्रसम्प्रयोगदर्शनात्। श्रोणिमापनयन्त्रप्रयोगश्च प्रत्यक्षकर्मा-भ्यासेऽभ्यसनीयो, नेह विस्तरभिया प्रपञ्चितः।

[ ७ चित्रम् ]

बाह्यश्रोणिमापने प्रयुज्यमानम् श्रोणिमापनयन्त्रम्।



प्राञ्चश्चात्र—

( १ ) पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः*

( २ ) द्वादशाङ्गुलो भगविस्तारः ।—सु० सू० ३५

( ३ ) षोडशाङ्गुलविस्तारा कटी ।—च० वि० ८

( ४ ) जघनमुरसा तुल्यं प्रशस्यत इत्येके ।—का० सू० २८

---

* हृदयादूर्ध्वं कण्ठस्याधः पुरुषोरो द्वादशाङ्गुलम्, तत्प्रमाणा स्त्रीश्रोणिः, केचित्तु चतुर्विंशत्यङ्गुलविस्तारमुरः । श्रोणिरत्र ऊरुसन्धेरधस्तात् स्मरमन्दिरोपरितनभाग इति डल्हणः ।

# द्वितीयोऽध्यायः ।

## अथातो बहिर्जननाङ्गविज्ञानीयमध्यायं व्याख्यास्यामः ।

बहिर्जननाङ्गानि नाम स्वभावतो भगोष्ठयोरपसारणेन च चक्षुषा दृश्यमानाः केचन जननावयवाः । तेषाञ्च 'भगम्' 'बहिर्भगम्' वेति सामान्यो व्यपदेशः । तदिदं योन्याः प्रथमावर्त्तभूतं भगं विभागशो विविच्यमानं निम्नावयवं भवति क्रमविशेषेण—

भगपीठम् ।
पूर्वसन्धानम् ।
भगशिश्निका ।
भगालिन्दः ।
मूत्रप्रसेकद्वारम् ।
योनिद्वारम् ।
योनिच्छदा कला ।
भगालिन्दखातः ।
भगाञ्जलिका ।
पश्चिमसन्धानम् ।
मूलपीठम् ।

ऊर्ध्व—भगोष्ठम् ।
अधर—भगोष्ठम् ।
योनिद्वारिका प्रहर्षणिका ।
योनिद्वारिका ग्रन्थिः ।

ऊर्ध्व—भगोष्ठम् ।
अधर—भगोष्ठम् ।
योनिद्वारिका प्रहर्षणिका ।
योनिद्वारिका ग्रन्थिः ।

तत्र—

भगपीठं कामपीठं वा भगसन्धानिकापुरःस्थो मृदुमेदुरः समुत्सेधो यावन् रोमशो नाम । एतदेव च पुनर्नग्नोत्थितायाः स्त्रियाः केवलं दृश्यते बहिर्जननावयवेषु ।

---

बहिर्जननाङ्गानि External Genitals. भगं बहिर्भग वा Vulva or Pudendum. भगपीठम् Mons Pubis.

बृहद्भगोष्ठद्वयं नाम—ओष्ठसमाकारं भगदारिकामुभयतः कपाटभूतं किञ्चित्स्थूलकोमलं भगपीठान्मूलपीठं यावत्प्रगतश्चावयवद्वयम्। तदेतद् बहिर्लोमशत्वचाऽन्तश्च कोमलतनुत्वचा परिवृतं मेदोधमनीसिरानाडी-पूतिग्रन्थितन्तुजालकगर्भं भवति। उपलभ्यन्ते चात्र कानिचन स्वतन्त्र-पेशीसूत्राण्यपि।

पुरतश्चौष्ठद्वयं मिथः संयुज्यमानं पूर्वसन्धानम्, पश्चिमतस्तु क्रमशो मेदःक्षयाद्धीयमानस्थौल्यं तथैव पश्चिमसन्धानमारचयति। सर्वदा-ऽनुपलम्भाच्च प्रायिकमेतत् पश्चिमसन्धानम्। कौमारे च बृहद्भगोष्ठयोः प्रायशः सान्निध्यादितरे ये भगावयवाः सुलीनास्तिष्ठन्ति त एवासकृत्प्रसूतायाः प्रौढे वा वयसि मेदःक्षयेण तयोः पार्थक्यात् स्फुटदर्शना भवन्ति। अतएव च तदा वायुवस्त्रादियोगादन्तर्भगोष्ठयोर्वर्णविपर्ययः खरता च।

यस्तावत् पुंसामण्डकोषः, तस्यैवाण्डविरहितस्य द्विधा भिन्नस्य च बृह-द्भगोष्ठद्वये परिणाम इति गर्भव्याकरणविदः।

लघुभगोष्ठे नाम—एकैकतो द्व्यङ्गुलमात्रायतौ बृहद्भगोष्ठान्तर्निगूढौ कोमलतनुस्निग्धार्द्रत्वचा विनिर्मितौ शतपत्रवर्णप्रायौ निर्लोमशौ पूतिग्रन्थि-स्वेदग्रन्थिबहुलौ च त्रिकोणाकृती स्वल्पावयवौ। एते पुनः पुरतो द्विधा विभज्य भगशिश्निकां चावेष्ट्य संयुज्यमाने शिश्निकाच्छदम् उपरितनं शिश्निकाप्रबन्धनं चाधःस्तनं रचयतः। पश्चिमतस्त्विमे स्तोकायतने भगाञ्जलिकायां बृहद्भगोष्ठयोर्वा कदाचन निबद्धे स्तः। नाडीजालभूयस्त्वा-च्चात्र कामसंवेदनम्।

---

बृहद्भगोष्ठे Labia Majora. भगदारिका Pudendal Cleft. पूर्वसन्धा-नम् Anterior Commissure. पश्चिमसन्धानम् Posterior Commi-ssure. लघुभगोष्ठे Labia Minora or Nymphae. शिश्निकाच्छदम् Prepuce of the clitoris. शिश्निकाप्रबन्धनम् Fraenulum Clitoridis,

[ ८ चित्रम् ]

**स्त्रिया बहिर्जननाङ्गानि ।**




१—शिश्निकाच्छद: । २—भगालिन्द: ( पूर्वभागः ) । ३—योनिद्वारम् । ४—भगालिन्दखातः । ५—भगपीठाध:स्थितं पूर्वसन्धानम् । ६—भगशिश्निका । ७—शिश्निकामुण्डम् । ८—शिश्निकाप्रबन्धनम् । ९—बृहद्भगोष्ठम् । १०—लघुभगोष्ठम् । ११—मूत्रप्रसेकद्वारम् । १२—योनिच्छदा कला । १३—पश्चिमसन्धानम् । १४—मूलपीठम् । १५—गुदम् ।

**भगालिन्दो (भगद्वारं वा) नाम—त्रिकोणाकृतिरवकाशदेशो लघुभगोष्ठयोरन्तराले स्थित:, योनिद्वारमूत्रप्रसेकद्वाराभ्यामनुविद्धश्च । भग-**

---

भगालिन्द: Vestibule.

शिश्निका चास्य शिखरमधितिष्ठति । मूलदेशश्चास्य योनिद्वारस्याधस्ताद् भगाञ्जलिकाया उपरिष्टाच्च (उभयोर्मध्य इति यावत्) वर्त्तमानो नौकाकृतिः 'भगालिन्दखात'संज्ञः ।

भगशिश्निका पुनः—पूर्वसन्धानस्याधःस्थितः प्राङ्गुलदीर्घो हर्षणशीलः शिश्नस्थानीयश्च स्त्रीणामवयवविशेषः । शिश्निका चेयं द्वाभ्यामेव दण्डिकाकाराभ्यां पेशीभ्यां निर्मिता, शिश्नदृष्टाया मूत्रप्रसेकधरायास्तृतीयपेश्या अत्राभावदर्शनात् । अतएव नीरन्ध्रोऽयमवयवः । ते च शिश्निकापार्श्विके नाम पेश्यौ परस्परसंयुक्ते शिश्निकाया न्युब्जं गात्रं रचयतः । पश्चिमतस्तु तयोर्मूलद्वयं मिथोवियुक्तं, भगाधरशृङ्गयोरधस्तादुभयतः सम्बद्धं, शिश्निकाप्रहर्षणीपेशीसूत्रैः समावृतं च शिश्निकाशृङ्गसंज्ञम् ।

गात्रस्य पुरःप्रान्तच्छादनश्छत्राकसदृशोऽवयवस्तु शिश्निकामुण्डं शिश्निकामणिर्वा नाम, शिश्निकाच्छदेन शिश्निकाप्रबन्धनेन चोपलक्षितः । आच्छादनप्रबन्धनयोर्ह्रस्वत्वादेव च शिश्निकागात्रस्य वक्रीभावः । सेयं भगशिश्निका सकलकामनाडीमुखविचुम्बिता कन्दर्पलीलावसरं विशेषेण हर्षभूमिर्भवति ।

मूत्रप्रसेकद्वारं तावत्—सार्धैकप्राङ्गुलदीर्घस्य योनेः पुरःप्राचीरे सम्बद्धस्य मूत्रप्रसेकस्य योनिद्वारोपरिष्टाद् भगशिश्निकाधस्ताच्च स्थितं निर्गममुखम् । तदेतन्मुखमुद्रणैः पेशीसूत्रैः परितः स्थितैः सुसंवृतं वलीराजिभिरुपलक्षितमुद्गतमिव संलक्ष्यते । अस्य पार्श्व एव चोभयतो मूत्रप्रसेकपार्श्विकनलिकाग्रन्थिमुखं सूक्ष्ममप्युन्मुच्यमानं क्वचिद् द्रष्टुं शक्यम् ।

---

भगालिन्दखात: Vestibular Fossa or Fossa Navicularis. भगशिश्निका Clitoris. गात्रम् Body. शिश्निकाशृङ्ग Crura Clitoridis. शिश्निकामुण्डम् Glands. मूत्रप्रसेकद्वारम् External Urethral Orifice. मूत्रप्रसेकपार्श्विकनलिकाग्रन्थी Para-urethral tubular glands.

नलिकाग्रन्थिद्वयञ्चैतत् मूत्रप्रसेकस्य पार्श्वयोस्तन्मांसप्राचोरिकायामुपलभ्यते पौरुषग्रन्थिस्थानीयम् ।

योनिद्वारं नाम—योनिमुखं, मूत्रप्रसेकद्वारस्याधस्ताद् वर्त्तमानम् । तच्च कौमारे योनिच्छदाख्यया कलया निम्नार्धभागे प्रावृतं निगूढञ्च लघुभगोष्ठयुगलेन । प्रौढे तु वयसि तत्कलाविलोपेन भगोष्ठापसरणेन च स्फुटदर्शनम् ।

योनिच्छदा कला पुनः—वृत्ता वक्रचन्द्राकारा वा शिथिला कला, कौमार्ये योनिमुखस्य साकल्येनांशतो वा प्रावरणी । सा क्वचिदेकच्छिद्रा बहुच्छिद्रा वा, स्थूला तन्वी वेति त्रिविधस्वरूपा । स्तरद्वयवती चैषा कला । तत्र बहिःस्तरो भगत्वचाऽन्तःस्तरस्तु योनिश्लेष्मलकलया सानुबन्धः । स्तरयोरन्तराले च वर्त्तन्ते सूक्ष्माः सिराधमन्यो नाड्यः पेशीसूत्राणि च ।

एषा प्रायः पुरुषसंयोगेन यौवने भिद्यते, विदीर्यते च साकल्येन प्रथमप्रसवकाले । ततश्च तदवशेषा 'योनिच्छदाङ्कुर' भूता उपलभ्यन्ते ।

भगाञ्जलिका च—कोमलतनुत्वग्भागोऽञ्जलिसमाकारः, पुरःस्थितो भगालिन्दखातस्य । सेयं पार्श्वतो लघुभगोष्ठाभ्यामनुबध्यते ।

योनिद्वारिकौ ग्रन्थी तु—योनिद्वारस्योभयतः स्थितं योनिसङ्कोचन्याख्यपेश्या निगूढं च ग्रन्थियुगलम् । अस्य सूक्ष्मं नलिकामुखं भगालिन्दे योनिद्वारसमीपत ( योनिच्छदलघुभगोष्ठयोरन्तराले ) उन्मुच्यते । स्रावश्चास्य पीतपिच्छिलः कामकाले निःस्रुतः स्त्रीशुक्रमित्याचक्षते केचन साम्प्रदायिकाः ।

---

योनिद्वारम् Vaginal Orifice. योनिच्छदा कला Hymen. योनिच्छदाङ्कुराणि Carunculae Hymenales. भगाञ्जलिका Frenulum Labiorum or Fourchette. योनिद्वारिकौ ग्रन्थी Greater Vestibular Glands. ( Bartholin ).

[ ९ चित्रम् ]

बहिर्भगस्य केचन निगूढा अवयवाः ।



क—शिश्निकामूलधरा स्नायुः । ख—भगशिश्निका । ग—पिण्डिका-योजनं लघुशिराजालम् । घ—शिश्निकाशृङ्गम् । ( गकारघकारौ चित्रे न चित्रितावपि रेखाक्रमेण स्वयमुन्नेयौ ) ङ—मूत्रप्रसेकद्वारम् । च—योनिद्वारिका प्रहर्षपिण्डिका ( चकारोऽयं यथास्थानं रेखाक्रमेण स्वयमूह्यः ) छ—त्रिकोणिका स्नायुः । ज—योनिद्वारिको ग्रन्थिः । झ—योनिद्वारं योनिच्छदा कला च । ट—मूलपिण्डिकातलम् ।

योनिद्वारिके प्रहर्षपिण्डिके नाम—जलौकाकारं, पूर्वतस्तनु पश्चिमतश्च स्थूलं, प्राङ्गुलदीर्घं, योनिद्वारस्योभयतस्त्रिकोणिकाख्यस्नायोरधस्तलं योनिभित्तेश्च बहिस्तलमाश्रित्य संस्थितं, योनिसङ्कोचन्याख्यपेश्या समाच्छादितं च शिरागुच्छद्वयम् । तदेतत् पिण्डिकाद्वयं मूत्रप्रसेकद्वारस्याग्रतः

---

योनिद्वारिके प्रहर्षपिण्डिके—Vestibular Bulbs.

पिण्डकायोजनिकाख्यलघुसिराजालकद्वारेण परस्परं संयुज्यते। सिराजालकञ्चेदं पुरस्तात् भगशिश्निकाधस्तले प्रसृतं शिश्निकामुण्डेन सानुबन्धनम्। प्रसवकाले पिण्डकाविदरणे च विशेषेण रक्तस्रुतिः।

यस्तावत् पुंसां शिश्नमूलपिण्डका, सैव योन्या मूत्रप्रसेकेन च द्विधा भिन्ना प्रहर्षपिण्डिकाद्वये परिणतेति सूक्ष्मदृशः।

मूलपीठं पुनः—शास्त्रेऽस्मिन् पायुभगान्तरालगः सेवन्यङ्कितो देशः। त्वच उपरिष्टाच्चास्य वर्त्तते मूलपिण्डका नाम तन्तुमेदोभूयिष्ठः साधकप्रांगुलायतोऽवयवविशेषः। पिण्डकायाः पुरःसीम्नि स्थितं योन्याः पश्चिमं प्राचीरं, पश्चिमसीम्नि च गुदनलिकायाः प्राचीरमग्रिमम्। सा चेयं सेवनीसूत्रिकासंज्ञकतनुकण्डरागर्भा कासाञ्चन पेशीनां निवेशभूमिर्भवति।

---

पिण्डकायोजनिका—Commissure of the Bulbs (Pars intermedia) शिराजालकम्—Venous Plexus, शिश्नमूलपिण्डका—Bulb of penis. मूलपीठम्—Obstatrical Perineum मूलपिण्डका—Perineal Body. सेवनीसूत्रिका Fibrous raphe.

# तृतीयोऽध्यायः ।

## अथातोऽन्तर्जननाङ्गविज्ञानीयमध्यायं व्याख्यास्यामः ।

अन्तर्जननाङ्गानि तावत्—श्रोणिगुहान्तर्गताः केचन जननावयवाः, ये नाम विशेषतो गर्भप्रसवप्रयोजना भवन्ति । योनिर्गर्भाशयो बीजस्रोतसी बीजग्रन्थियुगलञ्चेति तेषां प्रविभागः । तत्र—

योनिरन्तर्भगं वा नाम—वक्रीभूय पुरोऽधःप्रसृतो नलिकाविशेषः पेशीकलामयः, गर्भाशयेनोर्ध्वं बहिर्भगेन चाधस्तात् सम्बद्धः । सेयं सन्निहितपूर्वापरप्राचीरतया न्यूनावकाशाऽपि सति प्रयोजने विशेषेण ( द्विगुणं यावत् ) विकसनक्षमा । स्वल्पमुखोऽन्तर्महाशुषिरश्चावकाशस्तु योनिमार्गोऽपत्यपथो वेति संज्ञायते । स्वल्पमुखता च योन्याः सर्वेषां तत्प्राचीराणां त्रिकोणत्वात् परिज्ञेया । तदेतदन्तर्भगं त्र्यावर्त्तस्य योनिसामान्यस्य द्वितीय आवर्त्त इति प्राञ्चः ।

योन्याः पुरःप्राचीरं सार्धद्विप्राङ्गुलं, दीर्घतरं पश्चिमप्राचीरञ्च त्रिप्राङ्गुलतः सार्धत्रिप्राङ्गुलं यावत् प्रमितम् । ऊर्ध्वभागस्त्वस्या गर्भाशयग्रीवां संवेष्टयति, ग्रीवा च पुनरन्तर्विष्टा विभाजयति स्वपरिगतं योन्यवकाशं चतुर्षु कोणेषु—पूर्वम्, ( उत्तानतमम् ) पश्चिमम्, ( गम्भीरतमम् ) वामं, दक्षिणञ्च ( नातिगभीरम् ) योनिकोणमिति ।

व्यतिकरस्तु पुनर्योन्याः पुरतो वस्तिमूलं मूत्रप्रसेकश्च, पार्श्वतः पायुधारण्याख्यपेशीयुगलं गवीन्यौ च, पश्चिमतश्च मूलपिण्डिका

---

अन्तर्जननाङ्गानि Internal Genital Organs. योनिरन्तर्भगं वा Vagina. योनिमार्गः Vaginal Cavity or Passage. योनिकोणानि Vaginal fornices. व्यतिकरः Relation.

[ १० चित्रम् ]

श्रोण्या अनुलम्बच्छेदः।




क—गर्भाशयः। ख—गर्भाशयवेष्टनी उदर्या कला। ग—मूत्राशयः। घ—भगसन्धानिका। ङ—मूत्रप्रसेकद्वारम्। च—योनिद्वारम्। छ—अग्रिमं योनिकोणम्। ज—गुदविवरम्। झ—पश्चिमं योनिकोणम्। ञ—योनिगुदान्तरीयं गुदगर्भाशयान्तरीयं वा स्थालीपुटम्। ड—उदर्या कला।

गुदनलिका योनिगुदान्तरीयं स्थालीपुटकञ्चेति। अनुगर्भाशये धमन्यौ तु योनिपार्श्वकोणयोरुपरिष्टाद् वर्त्तेते, अनुभूयते च तत्र तयोः स्पन्दनं, विशेषेण तु गर्भकाले।

निर्माणतस्तु पुनश्चतुर्धा स्तरविभागो योनिप्राचीरस्य संलक्ष्यतेऽन्तर्बहिःक्रमेण, तद्यथा—

(१) अन्तःस्तरः कलामयो नाम—अनुप्रस्थगताभिर्बहुभिर्वलिराजिभिरुपलक्षितः श्लेष्मग्रन्थिविरहितस्त्वग्विशेषः। प्रजातासु च स्त्रीषु

(१) Inermost Mucous Coat. वलिराज्यः Rugae.

वलिराजीनां विलोपः। अस्माच्च स्तरादम्लोपस्नेहो जीवाणुविघातकरः स्यन्दमानो योनिमार्गमभिरक्षति। पुरःपश्चाच्चात्र मध्यरेखायां दृश्यतेऽनुदैर्घ्यं वलिराजिद्वयम्। ते एते योनिस्तम्भिके वलिस्तम्भिके वा नाम।

( २ ) उपान्तःस्तरो हर्षणतन्तुमयो नाम—यत्र बह्वो रक्तप्रणालिकाः संयोजकतन्तुषु वितता दृश्यन्ते। स्तरश्चायं योनिद्वारिकाभ्यां प्रहर्षपिण्डिकाभ्यामनुबद्ध इत्यवधेयम्।

( ३ ) मध्यस्तरः पेशीमयो नाम—योऽभ्यन्तरतो वृत्तैर्बाह्यतश्चानुदैर्घ्यैः स्वतन्त्रपेशीसूत्रैर्विनिर्म्मितः। योनिद्वारसमीपे तु योनिसङ्कोचन्या मूत्रद्वारसङ्कोचन्याश्च पेश्याः सूत्राण्यपि स्तरस्यैतस्य बलाधानाय सम्पद्यन्ते।

( ४ ) बहिःस्तरः सौत्रतन्तुमयो नाम—अधिष्ठानभूमिः शोणितवहानां प्रणालिकानां वातनाडीनाञ्च। सिराजालकानि चात्र भूम्ना दृश्यन्ते, विशेषेण च पार्श्वयोः।

पोषणञ्च पुनर्योन्याः सम्पद्यत आभिर्धमनीभिरुत्तराधरक्रमेण—

( क ) अनुगर्भाशयाया धमन्या योनिगाः प्रशाखाः।

( ख ) अनुयोनिका नाम धमनी, अधरवस्तिगास्थानीया।

( ग ) मध्यमाया गुदान्तिकाया गुदोपस्थिकायाश्च शाखाप्रतानाः।

प्रतिनिवर्तते च रक्तं सिराभिरधिश्रोणिकयोराभ्यन्तर्य्योः सिरयोः। रसायन्यश्चापि योन्या अधिश्रोणिकेषु वंक्षणिकेषु च रसग्रन्थिषु प्रविष्टाः। तत्रायं विशेषः—अधरदेशरसायन्यो भगरसायनीभिः सहिता वंक्षणिकान्,

---

योनिस्तम्भिके Columns of the Vagina

(२) Submucous Layer of Erectile Tissue. (३) Middle Muscular Coat. (४) Outermost Coat of Connective Tissue. (क) Vaginal branches of the uterine artery. (ख) Vaginal (Inferior Vesical) artery. (ग) Branches of the middle rectal & internal pudendal arteries. वंक्षणिकाः Inguinal glands.

मध्यदेशरसायन्योऽधिश्रोणिकानधरान्, उत्तरदेशरसायन्यश्च गर्भाशयरसायनीसहिताः पत्त्रबन्धनिकामार्गेणोत्तरानधिश्रोणिकान् रसग्रन्थीन् गाहन्त इति।

गर्भाशयो नाम—अधरपश्चिमाभिमुखः क्षुद्रतुम्बिकाकारो दृढस्थूलप्राचीरः पूर्वापरतश्चिपिटप्रायो मांसमयोऽवयवः, शून्योदरोऽधिष्ठानभूतश्च गर्भस्य। धरेत्यपि चास्य संज्ञा। सोऽयं श्रोण्यां गुदबस्त्योरन्तराले पुरस्तादानतो मनाक् वक्रीकृततनुश्चाऽवतिष्ठते। द्वेधा चास्य प्रविभागः कल्पितो योजनिकाऽभिधेन सङ्कीर्णमध्यभागेन, गात्रं ग्रीवा चेति। तत्र—

[ ११ चित्रम् ]

**स्त्रिया अन्तर्जननाङ्गानि।**




१—गर्भाशयस्य स्कन्धभागः। २—बीजवाहिन्याः पुष्पितप्रान्तः। ३—बीजग्रन्थिः। ४—अनुबीजग्रन्थिका धमनी। ५—रज्जुबन्धनिका। ६—अनुगर्भाशयिका धमनी। ७—योनिमार्गः (योनिपुरोभित्तिं विदार्य दर्शितः) ८—ग्रीवाया अन्तर्योनिकभागो बहिर्मुखोपलक्षितः।

---

अधिश्रोणिका अधराः Hypogastric glands. अधिश्रोणिका उत्तराः Iliac glands. गर्भाशयः Uterus. योजनिका Isthmus.

गात्रं तावत् त्रिकोणाकारो भागो योजनिकाया उपरितनः। महायतन-स्यास्य स्कन्धदेशे च पार्श्वकोणयोर्बीजवाहिस्रोतोद्वयमुन्मुच्यते तदनु-बद्धम्। तत्र स्कन्धस्योत्तरधारा अप्रजातासु समा स्तोकेन नतमध्या वा दृश्यते, प्रजातासु च पुनः स्पष्टमुन्नतोदरा।

ग्रीवा च गात्रानुगता स्वल्पायतना योजनिकाया अधस्तात् स्थिता। अन्तर्विशति चेयं योनौ तत्पूर्वप्राचीरं निर्भिद्य स्तोकेन। अतएवास्या द्वावंशौ भवत ऊर्ध्वयोनिकोऽन्तर्यौनिकश्चेति। तर्क्वाकारा ग्रीवागुहा च ग्रीवासरणिरित्युच्यते। अनुबध्यते चैषा प्राङ्गुलमाना योनिगुहया

[ १२ चित्रम् ]

**गर्भाशयस्याभ्यन्तरम्।**




१।१—बीजवाहिन्योर्द्वारद्वयम्। २—गर्भाशयप्राचीरम्। ३—गात्रगुहा। ४—ग्रीवान्तर्मुखम्। ५—ग्रीवासरणिः। २ द्रुमपत्रप्रतानवत् संलक्ष्यमाणा वलीराज्यः पत्रप्रतानिकासंज्ञाः। ६—ग्रीवाबहिर्मुखम्। ७—योनिप्राचीरम्।

---

गात्रम् Body. स्कन्धः Fundus. ग्रीवा Cervix. ऊर्ध्वयोनिकोऽशः Supra-vaginal Portion. अन्तर्यौनिकोंऽशः Vaginal Portion. ग्रीवा-सरणिः Cervical Canal.

पूर्वापरोष्ठद्वयलक्षितेन बहिर्मुखेन, सार्धप्राङ्गुलमानया गात्रगुहया चान्तर्मुखेन । एवञ्च सार्धप्राङ्गुलद्वयपरिमाणा गर्भाशयगुहेति फलितम् । बहिर्मुखञ्च स्त्रीणां रक्तवहं स्रोतो बहिर्मुखम् । यदुच्यते—"स्त्रीणामपराणि च त्रीणि, द्वे स्तनयोरधस्ताद् रक्तवहञ्च" इति सु० शा० ५ अ० । सेयं ग्रीवासरणिः प्रायेण संवृतमुखा श्लेष्मार्गलिकया प्रतिरुद्धमार्गा च तिष्ठति रजःकालादृतुकालाच्चान्यत्र । यदुच्यते—

नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा ।
ऋतौ व्यतीते नार्यास्तु योनिः संव्रियते तथा ॥ सु० शा० ३

योनिर्गर्भाशय इति डल्हणः । विवृताविवृतमुखत्वं हि योनेर्गर्भग्रहणाग्रहणहेतुस्तच्च वायोः क्रियावतः कालसहायस्यायत्तमिति च प्रासङ्गिकोऽरुणदत्तः ( वा० शा० १ )

वेधप्रस्थदैर्घ्याणि तु पुनः पूर्णवयस्कायाः सार्धतोलकद्वयभारस्य गर्भाशयस्य क्रमेणैकप्राङ्गुलद्विप्राङ्गुलत्रिप्राङ्गुलप्रमाणानि भवन्ति । प्राङ्गुलवेधस्तु योजनिकाऽन्तिके ज्ञेयः, अन्यत्र तु प्राङ्गुलार्धमानः । तदेतन्मानमप्रजातायाः स्त्रिया उक्तम्, प्रजातायास्तु किञ्चिदधिकं भवति । गर्भिण्याश्च पुनर्यथागर्भमभिवर्धते ।

प्राञ्चश्चात्र—

( १ ) स्त्रीणां गर्भाशयोऽष्टमः ।

( २ ) पित्तपक्वाशययोर्मध्ये गर्भशय्या, यत्र गर्भस्तिष्ठति ।

( ३ ) शंखनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता ।
तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥
यथा रोहितमत्स्यस्य मुखं भवति रूपतः ।
तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥—सु० शा० ५

---

बहिर्मुखम् External Os. अन्तर्मुखम् Internal Os. (२) 'पित्तपक्वाशययोर्मध्ये' इत्यत्र 'वस्तिपक्वाशययोर्मध्ये' इति पाठो न्याय्यः (गणनाथसेनमहोदयाः ) । तत्संस्थानाम् = अल्पमुखामन्तर्महाशुषिरामितिडल्हणः ।

(४) स्त्रीणां तु वस्तिपार्श्वगतो गर्भाशयः सन्निकृष्टः।

—सु० चि० ७

(५) भगस्याधः स्त्रिया वस्तिरूर्ध्वं गर्भाशयः स्थितः।

गर्भाशयश्च वस्तिश्च महास्रोतःसमाश्रितौ॥

—वैतरणः (डल्हणेनोद्धृतः)

निर्म्माणं पुनर्गर्भाशयस्य तिसृभिः प्राचीरिकाभिर्वृतिभिर्वा सम्पद्यते। तत्र—

परिवेष्टिकवृतिर्नाम—बाह्या प्राचीरिका परिवेष्टिन्या कलयोदर्यया निर्मीयते। सेयं कला पुरस्तादवतीर्यमाणा वस्तेरुत्तरं पश्चिमं च समाच्छाद्य पुनरूर्ध्वं प्रस्थिता सोपाङ्गं गर्भाशयशरीरं पूर्वतः प्रावृणोति; अवतरति च पुनस्तथैव गर्भाशयस्य शरीरम्, ऊर्ध्वयोनिकं ग्रीवाभागं योनिप्राचीरांशञ्च पश्चिमतः समाच्छादयन्ती। एवञ्चास्या द्विगुणीभावो गर्भाशयसन्धारणाय जायते। ततश्चैषा गुदनलिकादीन् प्रावृण्वती पुनरूर्ध्वं प्रतिष्ठते। इत्थञ्च पुरस्ताद् गर्भाशयस्य वस्तिगर्भाशयान्तरीयम्, पश्चाच्च योनिगुदान्तरीयं नाम (गुदगर्भाशयान्तरीयं वा) स्थालीपुटद्वयं निष्पद्यते। अनयोरेव च गर्भाशयधरौ पूर्वापरांशौ यथाक्रमम् अग्रिमा पश्चिमा च बन्धनिकेति संज्ञायेते। अथ च गर्भाशयप्रावरणकाले द्विगुणीभूतया कलयैव पार्श्वगतया पक्षबन्धनिकानाम गर्भाशयप्रबन्धनमुभयतो विरच्यते।

पैशिकवृतिर्नाम—मध्यमा प्राचीरिका गर्भाशयस्थौल्यायतना प्रधानाश्रया च नाडीसिराधमनीरसायनीनाम्। स्वतन्त्रपेशीतन्तवश्च निबिडं सन्निविष्टा एका मांसपेशीरिव लक्ष्यमाणा अपि गर्भावस्थायां त्रिधा

---

परिवेष्टिकवृतिः Serous Coat. (Perimetrium) वस्तिगर्भाशयान्तरीय स्थालीपुटम् Vesico-uterine Pouch. योनिगुदान्तरीयं गुदगर्भाशयान्तरीयं वा स्थालीपुटम् Recto-vaginal or Recto-uterine Pouch पैशिकवृतिः Muscular Coat or Myometrium.

संहितास्त्रिषु स्तरेषु स्फुटं प्रतीयन्ते। तत्र बहिःस्तरोऽनुदैर्घ्यसूत्रमयः, अन्तःस्तरोऽनुप्रस्थसूत्रमयः, मध्यमस्तरश्च परस्पराविष्टतिरश्चीनसूत्रमय इति।

**श्लैष्मिकवृतिर्नाम**—आभ्यन्तरप्राचीरिका कलामयी तनुश्लेष्मस्राविग्रन्थिबहुला सूक्ष्मरोमान्विता ग्रन्थिस्रोतोऽनुविद्धा च। लोम्नां गतिप्रवाहश्च बहिर्मुखः। उपस्नेहश्च तरलः पयःसमो मृदुक्षारप्रतिक्रियः स्रवति। ग्रीवागतो निःस्रवस्तु घनपिच्छिलः। ग्रीवाभागे च पुरः पश्चात् मध्यरेखायामनुदैर्ध्यमवस्थिते द्वे वलिस्तम्भिके, ताभ्याञ्चोर्ध्वं तिर्यक् प्रोद्गता वलीराजयः पत्रप्रतानिकासंज्ञाः संलक्ष्यन्ते। ता एता गर्भाशयमुखसंवरणकाले परस्परमाविष्टा ग्रीवासरणिमवरुन्धन्ति। धृतगर्भायाश्च स्त्रियाः कलेयं किञ्चिद् विपरिणता 'गर्भधरा कला' इत्यभिधीयते।

**गर्भाशयबन्धनिकाः**—चत्वारि तावद् बन्धनिकानां युगलानि भवन्ति गर्भाशयसन्धारणाय, याभिः पूर्णयो रिक्तयोर्वा गुदवस्त्योरवस्थाभेदेन पूर्वापरत ईषत् प्रचलन्नपि यथास्थानं गर्भाशयो ध्रियते। ताश्च पुनर्द्वे पत्त्रबन्धनिके, द्वे रज्जुबन्धनिके, द्वे त्रिकगर्भाशयिके बन्धनिके, एकाऽग्रिमा बन्धनिका, एका च पश्चिमा बन्धनिकेति भवन्त्यष्टौ। तत्र—

**पत्त्रबन्धनिके नाम**—गर्भाशयधरे प्रबन्धन्यौ उदर्याख्यकलाया द्विगुणीभावादारचिते गर्भाशयपार्श्वयोः पत्त्रवदायते च। ते इमे एकतो गर्भाशयपार्श्वे, इतरतश्च श्रोणिभित्तौ त्रिकजघनसन्धानस्याग्रतः संलग्ने, मध्यप्राचीरवत् स्थिते, वस्तिगुहां पूर्वापरयोरंशयोर्विभाजयन्त्यौ, तानेतान् गर्भाशयानुबद्धान् संयोजकधातुनिगूढानवयवान् निजस्तरद्वयान्तराले सन्धारयतः—बीजवाहि स्रोतः, रज्जुबन्धनिका, बीजग्रन्थिः सप्रबन्धनः,

---

श्लैष्मिकवृतिः Mucous Coat or Endometrium. पत्रप्रतानिकाः Arbore Vitae गर्भधरा कला Decidua. पत्त्रबन्धनिका Broad Ligament.

बीजग्रन्थिगा धमनी सिरा च, सिराजालकम्, नाड्यः, रसायन्यः, अनुगर्भाशयिका धमनी सिरा च, गवीनी, स्वतन्त्रपेशीसूत्राणि चेति ।

[ १३ चित्रम् ]

पक्षबन्धनिकाया अनुलम्बच्छेदः ।



१—बीजवाहिस्रोतः । २—अनुबीजग्रन्थिकाया धमन्याः स्रोतोऽनुगा शाखा सशिरा । ३—अधिबीजकोषिकोऽवयवः २—अनुबीजग्रन्थिका धमनी ४—रज्जुबन्धनिका । ५—संयोजकतन्तुराशिः । ६—अनुगर्भाशयाः सिराः । ७—अनुगर्भाशया धमनी । ८—गवीनी । ९—बीजग्रन्थिः । १०—उदर्या कला ।

संयोजकधातुश्चात्र परिवेष्टनकलायाः स्तरद्वयान्तराले वर्त्तमानो गर्भाशयं परितो वेष्टयति; उपलभ्यते च विशेषेण पत्त्रबन्धनिकातलदेशयोः, अनुगर्भाशयिके धमन्यौ परितः, वस्तिगर्भाशयग्रीवयोगुदगर्भाशयग्रीवयोश्चान्तराले, त्रिकगर्भाशयिकबन्धनिकयोश्च । तत्र पत्त्रबन्धनिकातलदेशयोरनुगर्भाशयिकधमन्यौ परितः स्थितः संहतप्रायः संयोजकधातुराशिरेव गर्भाशयं वस्तुतः सन्धारयति । अतएव 'ग्रीवाधरबन्धनिका' इत्यपि तदभिधानं श्रूयते ।

रज्जुबन्धनिके नाम—रज्ज्वाकारे गर्भाशयस्य पुरःकर्षण्यौ बन्धनिके उदर्याख्यकलावृते पञ्चषाङ्गुलदीर्घे च । एकैका च बन्धनिका गर्भाशयपार्श्वतो मूलकोणाद् बीजवाहिस्रोतोनिबन्धनस्थलस्याग्रतो निम्नतश्च निर्गत्य, पत्त्रबन्धनिकापूर्वस्तरं समुत्थापयन्ती, पुरस्तादूर्ध्वं पार्श्वतश्च वक्रीभूय प्रसृता, अन्तर्वंक्षणीयच्छिद्रपथेन वंक्षणसुरङ्गायां प्रविश्य बहिर्वंक्षणीयच्छिद्रेण च बहिरागता, छिद्रोत्तरशृङ्गे बृहद्भगोष्ठे सन्धानिकापुरोभागे च निवेशमाप्नोति । ते इमे पेशीस्नायुसूत्रभूयिष्ठे वृषणबन्धनिकाभ्यां स्फुटं सादृश्यमावहत इति गर्भव्याकरणविदः ।

त्रिकगर्भाशयिके नाम ह्रस्वप्राये गर्भाशयस्य पश्चात्कर्षण्यौ पेशीस्नायुसूत्रभूयिष्ठे उदर्यावृते च बन्धनिके, ये पुनर्मध्ययोजनिकासमीपतो गर्भाशयात् समुद्भूय पार्श्वापरतः प्रसृते गुदनलिकां क्रोडीकृत्य त्रिकपुरस्त्यायां प्रावरण्यां निविष्टे भवतः, त्रिधा विभाजयतश्च योनिगुदान्तरीयं स्थालीपुटं वाममध्यदक्षिणभागेषु ।

---

संयोजकधातुः Connective tissue-the parametrium. ग्रीवाधरबन्धनिका Transverse Ligament of the Cervix. रज्जुबन्धनिके Round Ligaments. वंक्षणीयच्छिद्रम् Abdominal ring (Internal & External) वृषणबन्धनिका Spermatic Cord. त्रिकगर्भाशयिके Sacro—uterine Ligaments.

अग्रिमा पश्चिमा च बन्धनिके उदर्याख्यकलाया एव द्विगुणीभावादारचिते पूर्वोक्तस्थालीपुटद्वयस्य पूर्वापरांशभूते इत्युक्तं प्राक् । ते एते नामतो प्रबन्धन्यावपि न याथार्थ्येन गर्भाशयधारणक्षमे ।

पोषणं तावद् गर्भाशयस्य सम्पद्यतेऽनुगर्भाशायिकयोरनुबीजग्रन्थिकयोश्च धमन्योः शाखाप्रतानैः । तत्र—

अनुगर्भाशयिका नाम धमनी अधिश्रोणिकाया आभ्यन्तर्याः सम्भूय, पक्षबन्धनिकायास्तलदेशमनुसरन्ती, वस्त्यभिमुखां गवीनीमुल्लङ्घ्य, गर्भाशयग्रीवाया अन्तिके द्वयोः शाखयोर्विभज्यते । तत्राद्या प्रधाना शाखा

[ १४ चित्रम् ]

सपरिकरस्य गर्भाशयस्य रुधिराभिसरणम् ।




१—अनुबीजग्रन्थिका धमनी । २—अनुगर्भाशया धमनी । ३—गवीनी । ४—अनुगर्भाशया सिरा । ५—अनुबीजग्रन्थिके सिरे ।

गर्भाशयपार्श्वे कुटिलगत्योर्ध्वं प्रसरन्ती, गर्भाशयस्य पूर्वं पश्चिमं स्थलदेशमुभयतः शाखाप्रदानेन पुष्णन्ती, मूलकोणान्तिके त्रिधा विभज्य शाखयैकया

अग्रिमा पश्चिमा च बन्धनिके Anterior & Posterior Ligaments.

अनुगर्भाशयिका धमनी Uterine artery.

गर्भाशयस्कन्धभागमन्यया बीजवाहिस्रोतसो मूलप्रान्तं पुष्णाति संयुज्यते चापरयाऽनुबीजग्रन्थिकया धमन्या सह । द्वितीयाऽधोमुखी गौणी तनुशाखा तु गर्भाशयग्रीवायाः पूर्वापरदेशावनुशाखाभिः सन्तर्पयति ।

सेयमनुगर्भाशया धमनी स्वपार्श्वीयाया अनुबीजग्रन्थिकाख्यधमन्याः, अनुयोनिकाख्यधमन्याः, एवं स्वनामिकाया अपरायाश्च धमन्याः प्रशाखानुशाखाभिर्धमनीचक्रमारचयति, परितो बीजग्रन्थी योनिं गर्भाशयञ्च । सर्वासाञ्चासां धमनीनां विशेषेणायतनवृद्धिर्दृश्यते धृतगर्भायां नार्य्यामिति विशेषः ।

अनुबीजग्रन्थिका धमनी तु औदर्यमहाधमन्याः सम्भूय श्रोण्यामवतरन्ती, पक्वबन्धनिकायाः शिखरदेशे बीजवाहिस्रोतसोऽधस्तात् तदनुक्रममवस्थिता, बीजग्रन्थिं बीजवाहिस्रोतश्च बहुभिरनुशाखाभिः पुष्णन्ती, गर्भाशयस्य पार्श्वकोणेऽनुगर्भाशयिकया धमन्या संयुज्यते ।

सिराश्च पुनर्धमन्यनुवर्त्तिन्यस्तथासंज्ञा भवन्ति, रचयन्ति च तावदनुगर्भाशयिकं सिराजालम् । तत्र, अनुगर्भाशयिका सिराऽधिश्रोणिकायामाभ्यन्तर्यां, दक्षिणाऽनुबीजग्रन्थिका सिराऽधरायां महासिरायां, वामाऽनुबीजग्रन्थिका सिरा तु पुनर्वामानुवृक्कायां सिरायामुन्मुच्यते ।

नाड्यस्तु पुनरधिवस्तिकान्नाड़ीचक्रात् वस्तिगुहान्तरीयनाड़ीचक्राभ्याञ्च प्राधान्येन सम्भवन्ति । द्वितीयतृतीयचतुर्थानुत्रिकनाड़ीभ्यो निर्गतानामपि कतिपयसूत्राणामत्र सहभावः । सर्वाश्चैता गर्भाशयग्रीवापश्चिमतः स्थिते ग्रैवनाडीगण्डे बलाधानकरेऽवगाह्य गर्भाशये प्रसरन्ति । तत्रायं विशेषः—नाड़ीचक्रसम्भूता हि नाड्यो गर्भाशयस्यानुप्रस्थसूत्राणां प्रचेष्टन्योऽनुत्रिकनाड्यस्त्वनुदैर्घ्यसूत्राणाम् । तदेतत् परिगर्भाशयं नाड़ीचक्रम् अपानवायोः क्रियासाधनभूतमिति तद्विदः ।

---

अनुबीजग्रन्थिका धमनी Ovarian artery. अधिवस्तिकं नाड़ीचक्रम् Hypogastric plexus, वस्तिगुहान्तरीये नाड़ीचक्रे Pelvic plexuses. ग्रैवनाड़ीगण्डम् Cervical ganglion.

[ १५ चित्रम् ]

## गर्भाशयानुगा नाड्यः ।



१—दक्षिणं ग्रवं नाडीगण्डम् । २—दक्षिण वस्तिगुहान्तरीय नाडीचक्रम् । ३—अधिवस्तिकं नाडीचक्रम् । ४,५,६—अनुकटिका नाम नाडीग्रन्थयः । ७—अर्धेन्दुग्रान्थर्मणिपूरग्रन्थिर्वा । ८, ९—परिवृक्कं नाडीग्रन्थिद्वयम् । १०,११—परिबीजग्रन्थिक नाडीचक्रम् । १२—बीजवाहिस्रोतः । १३—बीजग्रन्थिः । क, ख, ग, घ—कटिकशेरुकाः ।

रसायन्यश्चापि गर्भाशयस्य तदुत्तरदेशसम्भवा औदर्यमहाधमन्यनुवर्त्तीन् रसग्रन्थीन्, मध्यदेशप्रभूता अधिश्रोणिकान् बाह्यान् ( उत्तरान् ) रसग्रन्थीन् रज्जुबन्धनिकापथेन वंक्षणीयानुत्तानाँश्च रसग्रन्थीन्, अधरदेशोद्भवास्तु पुनरधिश्रोणिकान् सामान्यान् आभ्यन्तराँश्च रसग्रन्थीन् गाहन्ते ।

बीजवाहिन्यौ बीजस्रोतसी वा नाम षडङ्गुलप्रायं स्रोतोयुगम् गर्भाशयपार्श्वकोणाभ्यां विनिःसृत्य बहिः पश्चाच्च बाहुवत् प्रसृतम्, पक्षबन्धनिकयोः शिखरोच्चदेशे स्थितम्, क्रोड़ीकृतबीजग्रन्थिकम्, उदर्य्यामहाकोषे पुष्पितमुखेन चोन्मुच्यमानम् । आभ्यामाह्रियन्ते मासि मासि बीजग्रन्थिगात्रभेदनिर्गतानि स्त्रीबीजानि । यदुच्यते—"आर्त्तववहे द्वे, तयोः मूलम् गर्भाशयः" ( सु० शा० ९ ) इति ।

स्थानाकृतिभेदेन च तयोश्चतुर्धा प्रविभाग इत्थम्—(१) आद्यो गर्भाशयाविष्टो भागः प्राङ्गुलार्धप्रायो गर्भाशयप्राचीरिकां निर्भिद्य स्थितः सूक्ष्मशरेषिकाप्रवेशार्हस्रोतोमुखेन गर्भाशयगुहयाऽनुबद्धः । (२) द्वितीयो गर्भाशयस्य पार्श्वकोणाद्बहिर्गतः समग्रस्रोतम आन्तरतृतीयांशप्रमाणो वृत्तकठिनः सङ्कीर्णस्रोतोऽवकाशत्वात् योजनिकासंज्ञः । (३) तृतीयो भागस्तु तनुप्राचीरोऽखिलस्रोतसोऽर्धभागनिर्मापकः स्फारीभूतत्वात्

---

औदर्यमहाधमन्यनुवर्त्तिनो रसग्रन्थयः Aortic glands. अधिश्रोणिका बाह्या रसग्रन्थयः External iliac. glands. उत्ताना वंक्षणीया रसग्रन्थयः Superficial inguinal glands. अधिश्रोणिकाः सामान्या आभ्यन्तराश्च रसग्रन्थयः Common iliac and Internal iliac glands. बीजवाहिन्यौ बीजस्रोतसी वा Oviducts or Fallopian tubes. गर्भाशयाविष्टो भागः Intra-uterine or Interstitial part. योजनिकाभागः Isthmus.

कलसिकासंज्ञः । (४) चतुर्थस्तावत् पश्चान्मुखः पुष्पितप्रान्तो नाम भागः प्रस्फुटितकूष्माण्डपुष्पसमो भेरीसमाकारो वा । खातामुखञ्चास्य उदर्यामहाकोषे उन्मुच्यमानं प्रायेण जीवितदशायां स्रोतसः पैशिकप्राचीरिकासङ्कोचात् संवृतं तिष्ठति । परिधौ त्वस्य विषमानेकप्रवर्धनानि संलक्ष्यन्ते । प्रवर्धनानामन्यतमञ्च विशेषेण प्रवृद्धं कोरोदरं बीजग्रन्थिना लग्नं स्त्रीबीजानां पथप्रदर्शकभूतञ्च बीजकुल्यासंज्ञम् ।

निर्मीयेते च बीजस्रोतसी बहिरुदर्यया कलया मध्येऽनुदैर्घ्यानुप्रस्थैः पेशीसूत्रैरन्तश्च श्लैष्मिककलया निर्ग्रन्थिकया वलीराजिसमन्वितया सूक्ष्मरोमान्वितया च । रोम्णाञ्च गतिप्रवाहो गर्भाशयाभिमुखः ।

बीजग्रन्थी नाम श्रोणिप्राचीरसन्निधौ गर्भाशयपार्श्वतः पक्षबन्धनिकास्तरद्वयान्तराले वर्त्तमानं चटकाण्डसमाकारं बीजकोषयुगलम्, पक्षबन्धनिकायाः पश्चिमस्तरे गभीरखाताङ्किते च तिर्यगधिसंश्रितम् । तयोरेकैकश्च ग्रन्थिरेकतो बीजकुल्यया इतरतश्च गर्भाशयाभिमुखे प्रान्ते रज्ज्वाकारेण ह्रस्वप्रबन्धनेन संलग्नः पुष्पितप्रान्तेन गर्भाशयेन च यथाक्रमं प्रतिबध्यते । प्रबन्धनञ्चैतत् द्वित्राङ्गुलदीर्घं पेशीस्नायुसूत्रभूयिष्ठं मूलतो रज्जुबन्धनिकाया एवाङ्गभूतं बीजकोषबन्धनिकासंज्ञम् । अस्ति चात्र प्रबन्धनमेकमन्यदपि येनाऽयं बीजकुल्याभिमुखे प्रान्ते धार्यतेऽनुबीजग्रन्थिकसिराधमन्यादिगर्भेण । उत्तोलनी बन्धनिकेति च तत्संज्ञा । तदिदं बन्धनं पक्षबन्धनिकाया एवांशभूतं ज्ञेयम् ।

पूर्वतश्चास्मिन् ग्रन्थौ लक्ष्यते खातं बीजग्रन्थिद्वारं नाम । अनुबीजग्रन्थिकानां नाड़ीसिराधमनीरसायनीनाञ्च तेनैव पथा प्रवेशनिर्गमौ ।

---

कलसिकाभागः Ampulla. पुष्पितप्रान्तः Infundibulum or Fimbriated extremity. प्रवर्धनानि Fringe like processes or Fimbriae. बीजकुल्या Fimbria ovarica. बीजग्रन्थी Ovaries. बीजकोषबन्धनिका Ovarian Lig. उत्तोलनी बन्धनिका Suspensory Lig. of the ovary or Infundibulo-pelvic Lig. बीजग्रन्थिद्वारम् Hilum of the ovary.

मानतश्चैष प्रायेण तोलकार्धभारः सार्धाङ्गुलदीर्घः पादोनाङ्गुलायतः अङ्गुलत्र्यष्टमांशस्थूलश्च।

सुश्रुते तु 'अन्तर्गतफल'शब्देन बीजकोषयोरभिधानं दृश्यते, तद्यथा—

पुंसां पेश्यः पुरस्ताद्याः प्रोक्ता लक्ष्णमुष्कजाः।*
स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः॥

—सु० शा० ५

निर्माणं पुनर्बीजग्रन्थेस्तदुपादानभूतेन बीजग्रन्थिवस्तुना सम्पद्यते। तच्च द्विविधम्, अन्तर्वस्तु बहिर्वस्तु चेति। तत्र—

अन्तर्वस्तु नाम ग्रन्थेरभ्यन्तरतः स्थितो नाडीसिराधमनीरसायनी-बहुलः पेशीस्नायुतन्तुमयो भागविशेषः। तदाश्रित्य च वर्त्तते बहिर्वस्तु।

बहिर्वस्तु पुनर्ग्रन्थेर्बाह्यभागनिर्मापकः कार्यकरोऽवयवः सञ्जननत्वचः श्वेतावरणस्य क्षेत्रवस्तुनो बीजगर्भपुटकानाञ्च सङ्घातभूतः। तत्र सञ्जननत्वङ् नाम बीजकोषस्य प्रावरणभूता कला बीजग्रन्थिद्वारे उदर्याख्य-कलयाऽनुबद्धा च। स्त्रीबीजानां तत्पुटकानाञ्चेयं मूलभूमिरिति प्रसिद्धिः। पुटकानि तु क्षेत्रवस्तुनः समुद्भवन्तीति केचित्। क्षेत्रवस्तु पुनः संयोजक-धातुकोषाणुमयो नाडीसिराधमनीरसायनीबहुला बीजपुटकानामाधारभूमिः सञ्जननत्वचोऽधस्ताद् वर्त्तमाना। क्षेत्रवस्तुन ऊर्ध्वभागस्तु घनसंहतः श्वेतवर्णत्वात् श्वेतावरणसंज्ञः। बीजगर्भपुटकानि पुनः स्त्रीबीज-धराणि पुटकानि पुष्टापुष्टभेदेन विभिन्नरूपाणि।

* संज्ञापञ्चकविमर्शे म० म० गणनाथसेनमहाभागैरपि प्रत्यपादि मतमिदम्, यथाहि—"नव्यमतेन तु स्त्रीणां शिश्नवृषणाभावेऽपि तत्स्थानापन्न'भग-शिश्निकाबीजकोष'योः सन्त्येव कतिचित् पेशीसूत्राण्यदृश्यप्रायाणि इति सुविदितं शारीरविदाम्। तानीह प्राचामभिप्रेतानीति सुवचम्" इति।

अन्तर्वस्तु Medulla. बहिर्वस्तु Cortex. सञ्जननत्वक् Germinal Epithelium क्षेत्रवस्तु Stroma. श्वेतावरणम् Tunica albuginea. बीजगर्भपुटकानि Ovarian ( Graafian ) follicles.

तत्र क्षेत्रवस्तुनोऽभ्यन्तरे बहुशः प्रकीर्णानां सिकताकणानामिव सहस्राधिकानां सूक्ष्मस्त्रीबीजानां तनुपुटकावृतानां सन्निवेशदर्शनात् विचित्रमस्य विधातुर्निजकृत्यभिरक्षणकौशलमिति विभावयन्तु सुधियः। अथ च जन्मकाले लक्षप्रायाणामपि ( सप्ततिसहस्राणामिति केचित् ) यौवने पञ्चत्रिंशत्सहस्रमेषामवशिष्यते, शेषाणान्तु तत्रैव परिक्षयः। एष्वपि परिपुष्टबीजानां चतुःशतमेव बहिर्निक्षिप्यते। तत्रापि च दशानां द्वादशानां वा प्रायेण साफल्यम्। ऋत्यृतुकालञ्च प्राय एकस्माद् बीजग्रन्थेरेकस्यैव स्त्रीबीजस्य निर्गमः।

—·—

# चतुर्थोऽध्यायः ।

## अथातो गर्भबीजविज्ञानीयमध्यायं व्याख्यास्यामः ।

द्विविधं हि गर्भबीजम्, स्त्रीबीजं पुम्बीजञ्चेति। ते च यथाक्रमं बीजग्रन्थेर्वृषणग्रन्थेश्च परिणतौ कोषाणुविशेषौ। गर्भजन्म तु तयोः संयोगादेव। तत्र परिपक्वानि बीजान्येव गर्भजननसमर्थानि भवन्ति, तस्मात्, तत्स्वरूपविज्ञानाय बीजपुटकविज्ञानं बीजागमविज्ञानं बीजविपाकविज्ञानञ्च नूनमपेक्ष्यम्। तदेवात्र च क्रमशो विस्तरेण वर्ण्यते।

### बीजपुटकानि ।

बीजगर्भपुटकानि पुनः स्त्रीबीजधराणि पुटकानि पुष्टापुष्टभेदेन विभिन्नरूपाणीत्युक्तं प्राक्। परिपक्वानीषत्पक्वान्यपक्वानि चेति पुटकानां त्रैविध्यम्। बीजग्रन्थिच्छेदे तु त्रिविधानामपि यथादेशमेषामवस्थानदर्शनम्। प्रतिपुटकञ्च कोषाणुविशेषः स्त्रीबीजमेकं (क्वचिद्द्वे ततोऽधिकान्यपि वा) पुटकेनाभिरक्षितं तेनैव च परिपुष्यमाणमवतिष्ठते।

तत्र यानि अपक्वानि तानि श्वेतावरणस्याधस्तात् क्षेत्रवस्तुनः परिधिभागे उत्तानस्थितानि दृश्यन्तेऽन्तर्गतबीजवेष्टनानां संयोजकतन्तुकोषाणूनां स्तरैकनिर्मितानि सिकताकणरूपाणि। ईषत्पक्वानि च तेषामेव बीजवेष्टककोषाणूनां संविभागवर्धनादनेकस्तरमयानि। कोषाणवस्त्वेते कणिकाधराः। अतएव च कणिकाधरकोषाणुनिष्पन्नत्वात् पुटकप्राचीरिकायाः कणिनी स्तरिकेति संज्ञानम्। परिपक्वानि पुनः क्रमशोऽन्तर्द्रवनिचयात्

---

अपक्वानि Youngest, Earliest, Immature or Primordial Follicles. पक्वानि Larger or More advanced Follicles. परिपक्वानि Full ripe or Fully mature Follicles.

प्रवृद्धायतनानि, आङ्गुलीयकाकाराणि, सम्पुष्टबीजानि, बहिःस्थितस्य परिवे-ष्टकस्य क्षेत्रवस्तुनः सङ्घातान्निष्पन्नेन पुटककञ्चुकाख्यवेष्टनान्तरेण वेष्टि-

[ १६ चित्रम् ]

बीजागमक्रिया ।




१—अपक्वानि बीजगर्भपुटकानि । २—पच्यमानानि बीजगर्भपुटकानि । ३—ईषत्पक्वं बीजगर्भपुटकम् । ४—परिपच्यमानं बीजगर्भपुटकम् । ५,६—परिपक्वे बीजगर्भपुटके । ७—क्षेत्रवस्तु ( पुटककञ्चुका ) । ८—पुटकभेदान्निर्गतं स्त्रीबीजम् ।

तानि च । पुटककञ्चुकानाञ्च द्वेधा स्तरविभागो दृष्टः, बहिःस्तरोऽन्तः-स्तरश्चेति ।

पुटकद्रवस्तु कणिन्याः स्तरिकाया अन्तश्चीयमानः स्तरिकामिमां द्विधा विभाजयति परिसरीयभागे परिबीजभागे च । तत्र परिसरीयभागः पुटक-परिसरान्तर्वेष्टनभूतः, परिबीजभागस्तु बीजं परितः पिण्डीभूय स्थितो बीजपीठिकासंज्ञः । स्त्रीबीजस्य समन्तात् क्रमविशेषेण कृतसंसञ्जनानां बीजपीठिकाकोषाणूनां तु विसारिमण्डलमिति संज्ञा साकल्येन । मण्ड-लस्यान्तश्च स्वच्छरूप इतरोऽपि स्थूलः स्तरः एको वेष्टनभूतः स्त्रीबीजस्य बीजावरणसंज्ञो बीजवलयसंज्ञो वा । तच्च बीजपीठिकाकोषाणूनामुप-स्नेहेन जातमिति विशेषविदः ।

स्त्रीबीजन्तु प्राङ्गुलस्य सविंशशतांशानामेकेन तुल्यप्रायमानम् ($\frac{1}{120}$") चिद्रसोपादानम् । तत्र चिद्रसस्य बाह्यो भागस्तनुस्वच्छो भवति, आन्तरश्च सान्द्रः । सान्द्रता च पोषकयल्ककणसङ्कुलत्वाज्ज्ञेया । सान्द्रचिद्रसे च वर्त्तते चित्कणिकागर्भं चित्केन्द्रम् ।

बीजबीजावरणयोर्मध्ये द्रवपूर्णोऽन्तरालदेशस्तु परिबीजावकाशसंज्ञः । बीजविपाककाले विसृष्टानि ध्रुवगात्राणि चास्मिन्नेवावकाशे वर्त्तन्ते । एवञ्च परिपक्वबीजपुटकस्य स्तरविभागो बहिरन्तःक्रमेणेत्थं फलितः—

पुटककञ्चुका {
(१) बहिःस्तरः ।
(२) अन्तःस्तरः ।

---

स्त्रीबीजम् Ovum. or Female gamete. चिद्रसः Protoplasm. पोषकयल्कः Nutritive yolk. पुटककञ्चुका Theca folliculi. (१) Outer layer or Tunica fibrosa. (२) Inner coat or Tunica vasculosa.

मुख्यपुटकम्। —
- ( ३ ) कणिनी स्तरिका।
- ( ४ ) पुटकद्रवः।
- ( ५ ) बीजपीठिका।
- ( ६ ) विसारिमण्डलम्।
- ( ७ ) बीजावरणम्।
- ( ८ ) परिबीजावकाशः।
- ( ९ ) तनुच्छिद्रसः। — स्त्रीबीजम्।
- ( १० ) सान्द्रच्छिद्रसः। — स्त्रीबीजम्।
- ( ११ ) चित्केन्द्रम्। — स्त्रीबीजम्।
- ( १२ ) चित्कणिका। — स्त्रीबीजम्।

## बीजागमः।

परिपच्यमानानि तु बीजपुटकानि प्राक् क्षेत्रवस्तुनि गभीरं निमज्ज्य तिष्ठन्ति। काले चैषामन्यतमं परिपक्वं सदूर्ध्वमागतं ग्रन्थिगात्रे पिडकोद्गम इव संलक्ष्यते। ऊर्ध्वमनागतानामभिन्नानां वा तु परिक्षयोऽन्तरेव।

तत्रान्तर्द्रवप्रचयेन, आर्त्तवकाले बीजग्रन्थौ रक्तसञ्चारपरिवृद्धया, ग्रन्थिगतानां पेशीसूत्राणां प्रचेष्टनेन चोत्तंसितस्य बीजपुटकस्य समुत्सन्नो भागः प्रवृद्धान्तर्भारसम्पीडितः कोथमाप्नोति। सहैव च बीजपीठिकाकोषाणूनामपि तदा तनुप्रश्लथभावः। ततश्च प्रकुथितं पुटकं भिद्यते, स्त्रीबी-

---

मुख्यपुटकम् Follicle proper. (३) Stratum granulosum. (४) Liquor folliculi. (५) Discus proligerus or Cumulus Oöphorus. (६) Corona radiata. (७) Ovolemma, Zona radiata or Zona pallucida. (८) Perivitelline space. (९) Cytoplasm. (१०) Deutoplasm. (११) Nucleus or Germinal vesicle. (१२) Nucleolus or Germinal spot.

जस्य च प्रश्लथबीजपीठिकाकोषाणुभिर्विमुक्तस्य विसारिमण्डलमण्डितस्य पुटकद्रवेण सह बहिरुदर्यामहाकोषे निक्षेपः। सेयं बीजगर्भपुटकानां परिपाकक्रिया पुटकविदरणात् बीजनिर्गतिश्च बीजागमपदाभिधाना साकल्येन। तत्र परिपक्वानि पुटकानि बाल्येऽपि लभ्यन्ते, किन्तु पुटकविदरणात् बीजनिर्गतिस्तु प्रायः प्राप्तयौवनाया एव दृष्टा।

एवं निक्षिप्तञ्च स्त्रीबीजं प्रायेणाह्रियते बीजवाहिस्रोतसो मुखे, बीजकुल्याचेष्टनबलेन बीजवाहिस्रोतोरोम्णां गतिवेगाज्जनिताभिरुदर्यामहाकोषलसीकाद्रववीचिभिर्वाऽन्तर्नीयमानम्। अनाहृतानां तु महाकोष एव विलोपः। बीजवाहिनीपथेन च त्रिचतुर्दिवसेषु सप्तदिनेषु वा गर्भाशयप्रवेशः पुम्बीजेन संसृष्टस्य दैवयोगादसंसृष्टस्य वा स्त्रीबीजस्य। तत्र पुम्बीजसंसृष्टस्य प्रायेण गर्भाशयेऽवस्थानं तदसंसृष्टस्य तु रजःकाले रजसा सह योनिमुखान्निर्गमः।

बीजनिगमानन्तरञ्च विदीर्णपुटकस्य तथा रोहणं भवति यथा स्वल्पतमं व्रणलक्ष्म सम्पद्येत। तत्र विदीर्णपुटकं पुटकद्रवस्य बीजस्य च सहसा निःसरणात् व्यपगतोत्तंसनं पुटककञ्चुकाबहिःस्तरस्य पेशीसूत्राणामाकुञ्चनेन प्रपीडितञ्च ह्रस्वायते, पूर्य्यते च पुटककञ्चुकान्तःस्तररक्तवाहिनीनां परिस्रुतेन रक्तेन। कदाचित्तु रक्तातिस्रवो जायमानो रक्तस्रुतिलक्षणान्यपि जनयति, विशेषेण च शूलम्। आयतनह्रासाच्च कणिनी स्तरिका सह पुटककञ्चुकान्तःस्तरेण प्रशिथिला सती वलीराजिसंवलिता सञ्जायते। विदारमुखसमीपे च पुटककञ्चुकाबहिःस्तरः सङ्कुचितः सन् पश्चात्कृष्टो पुटककञ्चुकान्तःस्तरं कणिनीं स्तरिकां चोद्वर्त्तयति। परिस्रुतं रक्तञ्च स्कन्दति।

ततश्च पुटककञ्चुकान्तःस्तरस्य कणिकाधराः संयोजकतन्तुकोषाणवो विभज्य बहुशो वर्धमानाः सह केशिकाङ्कुरैरन्तः प्रसरन्ति। कणिन्याः

---

बीजागमः Ovulation.

स्तरिकायाः कोषाणवश्चापि प्रोच्छूना भवन्ति। सर्वे चैते कोषाणवः सम्प्रति पीतपदार्थकणवच्चिद्रसाः पीतवर्णत्वात् पीतकोषाणुसंज्ञाः। सोऽयं पीतकोषाणुमयः स्तरो बाह्यतः पुटककञ्चुकयाऽवरुद्धगतिः केवलमन्तरेव वर्धमानः, प्रशिथिलत्वाच्च वलीराजिभिरुपलक्षितः पीडयति मध्यगतं रक्तस्कन्दम्, पूरयति च पुटकगर्तं पक्षावधिना कालेन। रक्तस्कन्दश्च शनैः शनैरन्तर्लीयते। एवं परिणतस्य च निर्बीजपुटकस्य सम्प्रति पीतपिण्डम्, बीजकिणपुटमिति वा संज्ञानम्।

अत उत्तरञ्चैतत् पीतपिण्डं भाविपरिणामायापेक्षते गर्भस्याधानमनाधानं वा। तत्राऽसति गर्भाधाने पूर्णोत्कर्षं गतस्य पीतपिण्डस्यापकर्षः प्रारभते द्वित्रदिनात् प्राक् भाविन्या रजःस्रुतेः। अपकर्षस्तु तावत् कोषाणूनां चित्केन्द्रविलोपः, स्वरूपहानिः स्वच्छशुक्लपदार्थे परिणतिश्चेति। ततश्च शनैः शनैः सौत्रिकतन्तुरूपतामधिगच्छतोऽवशीर्यमाणस्य च कियता कालेन (द्वित्रमासं यावत्) स्वल्पतने मध्यनिम्ने व्रणलक्ष्मणि परिणामः। श्वेतपिण्डमिति च तत्संज्ञानम्।

सति गर्भाधाने तु आतृतीयमाचतुर्थं वा मासं पूर्णोत्कर्षावस्थमेव बीजकिणपुटं तिष्ठति वर्धते वा परमपि स्तोकेन। ततश्च पूर्ववदेवापकर्षः श्वेतपिण्डनिर्माणञ्च, मन्दतरमिति तु विशेषः। एवञ्च प्रसवात् परं द्वित्रमासं यावदपि क्षीणशक्तिकस्य पीतपिण्डस्योपस्थितिर्ज्ञातुं शक्या।

कार्यदृष्ट्या च पीतपिण्डस्यान्तररसः पोषणकग्रन्थेः पूर्वपिण्डान्तररसेन भ्रूणान्तररसेन च प्रेर्यमाणः सम्पादयति कार्यजातमेतत्। तद्यथा—

---

पीतपदार्थः Lutein substance. पीतकोषाणवः Lutein Cells. पीतपिण्डं बीजकिणपुटं वा Corpus Luteum. अपकर्षः Degeneration. स्वच्छशुक्लपदार्थः Hyaline substance. श्वेतपिण्डम् Corpus albicans.

आर्त्तवनिरोधः, गर्भतल्पनिर्माणे साहाय्यम्, गर्भस्थैर्यसम्पादनम्, स्तनयोः स्तन्योत्साहः, अतिवान्तिनिरोधः, प्रसवकाले परिहीणशक्तितया प्रसवनिर्वृत्तावानुकूल्यम् अपरिहीणशक्तितया वा कदाचित् कालातीतस्थापन्नं गर्भस्येति।

## बीजविपाकः।

विपक्वं स्त्रीबीजमेव गर्भोत्पादने क्षमम्, एवं पुम्बीजमपि। बीजस्यायतनवृद्धिः क्षयविभजनमक्षयविभजनञ्चेति पाकस्वरूपम्। विपाककाले बीजस्य चित्केन्द्रे चिद्रसे च परिवर्त्तनानि जायन्ते। चित्केन्द्रे वर्णपदार्थः परिवर्त्तते। वर्णपदार्थश्च वर्णतन्तुरूपः। मानवशरीरे प्रतिकोषाणु वर्णतन्तूनामष्टचत्वारिंशत् संख्या नियता। वंशगुणानुवृत्तिश्च वर्णतन्तूनधिकृत्य वर्त्तते, एवं स्त्रीत्वपुंस्त्वरूपलिङ्गजननमपि वर्णतन्तुहेतुकमेवेति नव्याः। स्त्रीबीजगतानां ४८ वर्णतन्तूनां मध्ये तन्तुद्वयं लिङ्गजनकं 'क्ष'-शब्दवाच्यं च।

तत्र पुरा वर्णतन्तवो वृद्धिं गच्छन्ति, ततः प्रत्येकं तन्तुर्द्वितीयेन तन्तुना मिलित्वा तन्तुसंख्यामर्धयति। एवं मेलनाच्च चतुर्विंशतितन्तवः सम्पन्नाः। तेष्वेकः 'क्ष'तन्तुः 'क्ष'तन्तुद्वयमेलनप्रभव इति विशेषः। इयं तन्तुमेलनक्रिया च सम्पत्स्यमानस्य क्षयविभागस्य पूर्वोपक्रमभूता ज्ञेया। चिद्रसपरिवर्त्तनेन च बीजकोषाणोर्भृशमायतनवृद्धिः पोषकयल्कपदार्थनिचयश्च।

एवं वृद्धिं गतं स्त्रीबीजन्तु साम्प्रतमुद्युङ्क्ते प्रविभागाय। विभागकाले च युग्मीभूता वर्णतन्तवो बीजस्योर्ध्वध्रुवदेशसमीपे व्यवस्थिता द्विधा भज्यन्ते। तेषामेकोऽर्धं ऊर्ध्वध्रुवदेशगतो ध्रुवदेशामुद्गमयति, अपरोऽर्धश्च मध्यगभागं प्रति प्रतिष्ठते। चिद्रसोऽपि विभज्यमानो ध्रुवदेशे क्षोदी-

---

बीजविपाकः Maturation of the ovum आयतनवृद्धिः Increase in size. क्षयविभजनम् Heterotypical or Reduction division. अक्षयविभजनम् Homotypical mitosis. वर्णपदार्थः Chromatin. वर्णतन्तवः Chromosomes. लिङ्गजनकतन्तु Sex chromosomes.

-यान् शेषभागो च द्राघीयान् सम्पद्यते । ततश्चोद्गतो भागः २४ वर्णतन्तुयुक्तः स्वल्पच्छिद्रसात्मको मूलभागात् पृथग् भवति परिबीजावकाशदेशे

[ १७ चित्रम् ]

स्त्रीबीजविपाकप्रक्रिया ।




I—न्यूनविभजनम् । II—अन्यूनविभजनम् । १—प्राथमिकं स्त्रीबीजम् । २—द्वैतीयकं स्त्रीबीजम् । ३—प्रथमं ध्रुवगात्रम् । ४ परिपक्वं स्त्रीबीजम् । ५—ध्रुवगात्राणि ।

च सन्तिष्ठते । सोऽयं पृथग्भूतो लघुभागः 'प्रथमं ध्रुवगात्रम्' शेषो मूलभागश्च द्वैतीयकस्त्रीबीजमिति संज्ञायते । आद्यस्त्रीबीजगतानां ४८ वर्णतन्तूनां संख्यार्धन्यूनयाच्चैष न्यूनविभागक्रमः ।

---

प्रथमं ध्रुवगात्रम् First polar body. द्वैतीयकं स्त्रीबीजम् Secondary Oöcyte.

ततश्च द्वितीयकस्त्रीबीजे पुनरपि तथैव व्यवस्थिताः २४ वर्णतन्तवः पूर्ववदेव चिद्रसेन सह द्विधा विभज्य पृथग्भूता द्वितीयं ध्रुवगात्रं निर्मान्ति। शेषो बृहत्तरमूलभागस्तु सम्प्रति परिपक्वस्त्रीबीजसंज्ञः। द्वैतीयकस्त्रीबीजगतानां २४ वर्णतन्तूनां संख्याया अक्षयाच्चैष अक्षयविभागक्रमः।

प्रथमं ध्रुवगात्रमपि प्राय एवमेवाक्षयविभागं प्राप्नोति। इत्थञ्चैकेन स्त्रीबीजकोषाणुना चत्वारो बीजकोषाणव उत्पन्नाः। तेषां परिपक्वस्त्री-

[ १८ चित्रम् ]

वर्द्धितायतनं पुम्बीजम्।




१—शिरः। २—ग्रीवा। ३—गात्रम्। ४—पुच्छम्।

बीजाख्यस्य कोषाणुविशेषस्यैव गर्भारम्भकत्वं नत्वन्येषामिति विशेषः। सर्वञ्चैतत् पुटकविदरणात्पूर्वमेव निष्पद्यत इत्येके। अक्षयविभजनं तु पुटकविदारणान्निर्गतबीजे जायत इत्यन्ये।

पुम्बीजविपाकोऽपीदृगेव। पुम्बीजन्तु वृषणग्रन्थेः परिणतः कोषाणुविशेषश्चतुरङ्गः। शिरो, ग्रीवा, गात्रं, पुच्छञ्चेति च तदङ्गानि। शुक्रे तु शुक्रकीटाणुरूपाणि पुम्बीजानि सहस्रशः समुपलभ्यन्ते। पुच्छबलेन चैतेषां महच्चाञ्चल्यम्, अतएव योनितो गर्भाशये गर्भाशयाच्च बीजवहस्रोतसि रोम्णां प्रतिप्रवाहमप्येषां प्रवेशः। बीजवाहिन्या स्रावश्च पुम्बीजेभ्यो विशेषेण रोचते। सोऽयं रागविशेष एव

---

द्वितीयं ध्रुवगात्रम् Second polar body. परिपक्वस्त्रीबीजम् Mature ovum. पुम्बीजम् Spermatozoon or Male gamete.

शुक्रकीटाणूनां बीजवहस्रोतोऽभिमुखीकरणे हेतुरिति साम्प्रतिकाः । अनुकूलदशायां तु पुम्बीजानां कतिपयदिवसान् यावत् प्राणवत्त्वं गर्भोत्पादनसामर्थ्यञ्च प्रसिद्धम् । पुम्बीजविपाकस्य चेदं वैशिष्ट्यम्—

( १ ) चित्केन्द्रगतानां ४८ वर्णतन्तूनां मध्ये यल्लिङ्गजनकं तन्तुद्वयं, तयोरेकः 'क्ष'शब्दवाच्य इतरस्तु 'ज्ञ'शब्दवाच्यः । तन्तुमेलनावसरे च 'क्ष''ज्ञ'योरनयोः संयोगः । ( २ ) क्षयविभजनक्रमे चिद्रसः समानप्राय एव

[ १९ चित्रम् ]

**पुम्बीजविपाकप्रक्रिया ।**




I—क्षयविभजनम् । II—अक्षयविभजनम् । १—प्राथमिकं पुम्बीजम् । २—द्वैतीयकपुम्बीजद्वयम् । ३,४—परिपक्वपुम्बीजचतुष्कम् ।

भागद्वये भज्यते न तु विषमे। युग्मीभूतस्य 'न्न''ज्ञ'वर्णतन्तुद्वयस्य पृथग्भा-वाच्चैकस्मिन् भागे 'न्न'तन्तुरपरस्मिंश्च भागे 'ज्ञ'तन्तुरवस्थितो भवति। एवञ्च २४ वर्णतन्तुमती द्वे द्वैतीयकपुम्बीजे प्राथमिकपुम्बीजात्प्रभवतः। तत्रैकं 'न्न'तन्तुमत्, इतरच्च 'ज्ञ'तन्तुमदिति विशेषः। (३) अन्त्यविभज-नक्रमे तु प्रत्येकं द्वैतीयकपुम्बीजात् तत्सदृशे एव द्वे परिपक्वपुम्बीजे जायेते।

एवञ्च प्राथमिकात् पुम्बीजादेकाच्चत्वारि परिपक्वपुम्बीजानि समुत्प-न्नानि, द्वे 'न्न'तन्तुयुक्ते द्वे च 'ज्ञ'तन्तुयुक्ते। सर्वेषां चैतेषां गर्भारम्भकत्व-मिति विशेषः।

# पञ्चमोऽध्यायः ।

## अथातो रजोविज्ञानीयमध्यायं व्याख्यास्यामः ।

रजोभावो हि नाम चक्रक्रमः परिवर्त्तनानां स्त्रीशरीरे, यः पुनः प्रतिमासं नियमेन यौवनादारभ्य रजोनिवृत्तिं यावत् रजःस्रावरूपतया बहिर्लक्ष्यतेऽन्यत्र गर्भकालात्स्तन्यकालाच्च । स्तन्यकाले रजोलोपस्तु प्रायिकः । रजस्तु तावच्छ्लेष्मसंम्मिश्रं रक्तमेव गर्भाशयाच्च्यवमानम् । यदुच्यते सङ्ग्रहकारेण "रक्तमेव स्त्रीणां मासि मासि गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्त्तमानमार्त्तवमाहुः" इति । आर्त्तवं शोणितं पुष्पमसृक् बीजरक्तं रजश्चेत्यनर्थान्तरम् । कश्यपश्चापि—

..................स्त्रीणां गर्भाशयोऽष्टमः ॥
रजोवहाः सिरा यस्मिन् रजः प्रविसृजन्त्यतः ।
पुष्पभूतं हि तद्दैवान्मासि मासि प्रवर्त्तते ॥
हीनयोन्यास्तु बालायाः कायं गच्छति शोणितम् ।
अथ पूर्णस्वभावायाः कायं योनिञ्च गच्छति ॥
धातुषु प्रतिपूर्णेषु शरीरे समवस्थिते ।
सञ्चितं रुधिरं योनिः पुनः कालेन मुञ्चति ॥ इति ।

(स्वसंहितायां रक्तगुल्मविनिश्चयाध्याये)

तदिदं रजः प्रथमं प्रवर्त्तमानं नार्या गर्भधारणयोग्यतां प्रजननक्षमत्वञ्च क्रियाविज्ञानदृष्ट्या सूचयति नतु शरीररचनाविज्ञानदृशा । प्रवृत्तिवयस्तु पुना रजोदर्शनस्य व्यक्तिजातिदेशाहारविहारभेदतो बहुधा भिद्यमानमपि

---

रजोभावः Menstruation, Menses, Catamenia, Monthly periods. गर्भकालः Pregnancy. स्तन्यकालः Lactation. रजः Menstrual blood.

प्रायशो देशेऽस्मिन् त्रयोदशे चतुर्दशे वा वर्षे समायाति। उपचीयमाने च रजस्यन्येषामपि जातोत्तरवैशेषिकभावानामभिव्यक्तिः। यदुक्तं सुश्रुतेन—"रोमराज्यादयश्च विशेषा नारीणाम्, रजसि चोपचीयमाने शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति" (सूत्र० १४)। शरीरदृष्ट्या तु गर्भधारणे प्रजनने च क्षमा पूर्णषोडशवर्षा भवतीति प्राच्या विंशतिवर्षप्रायेति च प्रतीच्या यथादेशदर्शनं निरणैषुः। उच्यते चात्र—

( १ ) पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे।
समत्वागतवीर्य्यौ तु जानीयात् कुशलो भिषक्॥

—सु० सू० ३५।

( २ ) ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते॥
जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्॥

—सु० शा० १०

( ३ ) पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिल हृदि॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा॥

—वा० शा० १

( ४ ) अथ खलु पुमानेकविंशतिवर्षः कन्याम्......द्वादशवर्षदेशीयाम्......विधिनोद्वहेत्। तस्यां षोडशवर्षायां पञ्चविंशतिवर्षः पुरुषः पुत्रार्थं प्रयतेत। तदा हि तौ प्राप्तवीर्य्यौ वीर्यान्वितमपत्यं जनयतः। इति।

—संग्रहशा० १

---

(३) प्रायिकञ्चैतत्, अर्वागपि साधुगर्भदर्शनादित्यरुणदत्तः।

(५) अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत्, पित्र्य-
धर्मार्थकामप्रजाः प्राप्स्यतीति । (सु० शा० १०)

रजःस्रावकालः—मासि मासि त्रिरात्रं पञ्चरात्रं सप्तरात्रं वा रज उद्भूततयाऽनुबध्नातीति सिद्धान्तः, प्रायशश्च पञ्चरात्रम् । अथ नव्या अपि दिनद्वयान्न्यूनं दिनाष्टकादधिकञ्च प्रवर्त्तमानं रजो न प्रकृतिरिति वदन्ति ।

आर्त्तवान्तरकालः—मासि मासि रजः स्रवतीति मासिकोऽयमार्त्तवान्तरकालः । मासीत्युपलक्षणम्, तेन द्वित्रदिनानां न्यूनाधिक्यमपि सम्भवति । रजोदर्शनदिवसादारभ्य आपुनारजोदर्शनदिवसं कालपरिगणनेति व्यवहारः । कालस्यास्य स्वकालेऽवस्थानं प्रकृतिर्विकृतिश्च पुनरतोऽन्यथा । श्रूयते च धर्मशास्त्रे न्यूनतमकाल एकविंशतिदिवसमितो दृष्ट इति । तद्यथा—

अष्टादशदिनादूर्ध्वं स्नानप्रभृतिसंख्यया ।
यद्रजस्तु समुत्पन्नं तत्कालोत्पन्नमुच्यते ॥ इति ।

रजःक्षयः—आयुषो वर्षपञ्चाशत इतस्ततो हि रजः सहसा क्रमशो वा निवर्त्तते । क्षीणे रजसि प्रायो गर्भधारणशक्तेरपि परिक्षयः । विधवानामायाससेविनीनां दुःखशीलानामचिरेण, सधवानां बहुप्रजानामलसानाञ्च चिरेण रजोनिवृत्तिर्दृष्टा । निवृत्तरजस्कायाश्च पुनः परिवर्त्तन्ते शारीरमानसा भावा अपि, तद्यथा—

---

(५) अत्र 'एकविंशतिवर्षाय' इति 'षोडशवर्षाम्' इति वा पाठं परिवर्त्यायुषो विरोधः परिहर्त्तव्यः । एवञ्च वैद्यके वरवध्वोर्वयोभेदो नववर्षमितो दृश्यते । जयमङ्गलाकारो यशोधरस्त्वाह—"चतुर्थादष्टमं यावत् कनिष्ठां वत्सरे वरात् । कन्यां परिणयेच्छ्रुस्तां नेतरातिवयाश्च या" इति ।

रजःस्रावकालः Period of flow or Menstrual habit. आर्त्तवान्तरकालः Inter-menstrual period or Menstrual type. रजःक्षयः Menopause (Climacteric).

स्तनयोनि धराबीजग्रन्थीनां शीर्णता, क्षयः।
वृद्धिर्वा मेदसो धातो, वैस्वर्य, विग्नचित्तता, ॥
रोमोद्गमो मुखे रौक्ष्यमिति रूपविपर्ययः ॥
निद्राक्षयो भ्रमः कम्पोऽरोचको बद्धविट्कता।
हृत्स्पन्दोऽपस्मृतिर्ध्मानमिति लिङ्गान्यपि क्वचित् ॥

**आर्त्तवादर्शनम्**—रजोदर्शनाद् रजःक्षयं यावत् यदन्तराऽन्तरा रजसो निरोधः, सोऽयमार्त्तवादर्शनसंज्ञः। उपलभ्यते च तद् विशेषतो गर्भकाले स्तन्यस्रावकाले च।

**असृग्दरः**—रजःस्रावकाले तदतिरिक्तकाले वा योनिमुखादतिप्रसङ्गेन प्रवर्त्तमाने रुधिरे संज्ञेयं प्राचां व्यवह्रियते। उक्तञ्चापि—

(१) तदेवातिप्रसङ्गेन प्रवृत्तम् अनृतावपि।
असृग्दरं विजानीयात्, अतोऽन्यद्रक्तलक्षणात् ॥

—सु० शा० २

---

आर्त्तवाऽदर्शनम् Amenorrhoea. असृग्दरः Menorrhagia and Metrorrhagia.

[ Menorrhagia :—This denotes excessive bleeding at the menstrual periods, and is a relative term. Metrorrhagia :—This signifies a discharge of blood from the uterus independent of menstruation.—Bland-sutton & Giles. ]

(१) अतिप्रसङ्गेन—अतिप्राचुर्य्येण दीर्घकालानुबन्धेन वा। अनृतौ अल्पमपि अदीर्घकालमपि प्रवृत्तम् असृग्दरं विजानीयादित्यत्र डल्हणः। विप्रतिपद्यन्ते चात्र केचित् "अनृतावल्पमप्यदीर्घकालमपि प्रवृत्तमसृग्दरं विजानीयादिति डल्हणोक्तिस्तु न समीचीना, चरकोक्तप्रदरलक्षणे प्रमाणाधिक्यस्य मुख्यलक्षणत्वेनोक्तत्वात् प्रमाणाधिक्यस्वल्पकालानुबन्धित्वयोश्च परस्परमसङ्गतत्वा"दिति। तन्न। (क)नहि चरके ऋत्वनृतुकृता भेदविवक्षा दृश्यते, न चापि डल्हणेन

(२) "अतिप्रसङ्गेनानृतावृतौ वा तदेवासृग्दरं प्रदरम्
व्याप‌द्ञ्च रक्तयोनिसंज्ञां लभते" इति ।

—सङ्ग्रहशा० १

(३) ..............................कुपितोऽनिलः ॥
रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः सिराः ।
रजोवहाः समाश्रित्य रक्तमादाय तद्रजः ॥
यस्माद् विवर्धयत्याशु रसभावाद्विमानता ।
तस्मादसृग्दरं प्राहुः, एतत्तन्त्रविशारदाः ॥

—च० चि० ३०

---

'अपि'शब्दद्वयं प्रयुञ्जता प्रमाणाधिक्यं दीर्घकालानुबन्धित्वञ्च निषिद्धम् । यत्र प्रमाणाधिक्यं तत्र दीर्घकालानुबन्धित्वमपीति तु न नियमः । (ख) अथ च ऋतौ स्वभावेन रजः प्रवर्तते नानृतौ, तथा च ऋतुस्वभावादपि प्रवर्तमानं रजो यथाविधं प्रमाणाधिक्यमृतुकालजेऽसृग्दरे दर्शयति न तथाविधमनृतुकालप्रवृत्तेऽसृग्दरे । एवञ्च ऋतुकालप्रमाणसापेक्षा हि तत्राल्पप्रमाणता ज्ञेया । (ग) अन्यच्चापि, असृग्दरो हि लक्षणमात्रम् नतु व्याधिः । तत्रर्तुप्रवृत्तोऽसृग्दरः प्रायेण प्रकृतिकोपनिमित्तजः, अनृतुप्रवृत्तोऽसृग्दरस्तु नियतं विकृतिविशेषनिमित्तज एव ( Menorrhagia is an exaggeration of a physiological phenomenon, and may be of functional origin; but metrorrhagia is always due to some organic condition, and is essentially pathological :—Bland-sutton & Giles ). तथा च यथाविकारं तत्र स्वल्पाधिकप्रमाणत्वं दीर्घादीर्घकालानुबन्धित्वञ्च दृष्टमित्यलं विस्तरेण । ( ऋतुशब्दश्चात्र अप्रशस्तर्तुपरः, एवञ्चानृतुशब्देनेह स्वाभाविकरजःस्रावकालाद् भिन्नः कालो विवक्षित इत्यवधेयम् )

## उक्तार्थे चात्र श्लोकाः—

(१) रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते ।
तद्वर्षाद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥

( सु० सू० १४ )

तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुनः ।
जरापक्वशरीराणां याति पञ्चाशतः क्षयम् ॥

( सु० शा० ३ )

(२) मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चशतः क्षयम् ॥

( वा० शा० १ )

(३) मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥

( च० चि० ३० )

(४) रजः सप्तदिनं यावदृतुश्च भिषजां वर ।

( हारीतः )

आर्त्तवचक्रम्—रजसो हि सूक्ष्मप्रवृत्ति-सञ्चय-निर्हृतिभेदेनावस्थात्रयम्, यथाक्रमञ्चासां पुनः पुनरावृत्तिदर्शनाच्चक्रसंज्ञा । तत्र प्रशस्तर्तुकाले सूक्ष्मत्वेनानुद्भूततया प्रवर्त्तमानं शोणितं 'नवशोणितम्', ऋतुकालोत्तरकाले च क्रमशः सञ्चीयमानं 'जीर्णशोणितम्' इत्यभिधीयते । उपचितञ्च पुनस्तद् अप्रशस्तर्तुकाले बहिरुद्भूततया स्रवति । अतः परं पुनः पूर्ववदित्येष क्रमः । फलितञ्चैतदपि यद् द्विविधं हि रजः उद्भूतम् ( बहिःपुष्पम् ) अनुद्भूतम् ( अन्तःपुष्पम् ) चेति । तत्रोद्भूतं नाम

---

(२) द्वादशादिति प्रायिकमेतत् एकादशवार्षिकाणामपि स्त्रीणां रक्तप्रवृत्तिदर्शनात् । पञ्चाशतः क्षयमित्यत्राप्येवमेव चिन्त्यमित्यरुणदत्तः । आर्त्तवचक्रम् Menstrual cycle.

यत्स्रावकाले ( अप्रशस्तर्तुकाले ) प्रवर्त्तते । अनुद्भूतं च तद्यत् प्रशस्तर्तु-कालमनुबध्नाति । अथ चानुद्भूतस्यैव रजसः पुंसङ्गमे विसर्पतः शुक्र-संसर्जनेन गर्भारम्भकत्वमिति प्राञ्चः । यथाह चक्रपाणिः—( मासान्नि-ष्पिच्छदाहार्त्तीत्यादिश्लोकव्याख्यावसरे ) "पञ्चरात्रानुबन्धीति, उद्भूततया पञ्चरात्रमनुबध्नातीति पञ्चरात्रानुबन्धि, द्वादशरात्रानुबन्धित्वादार्त्तव-कालस्य, किंवा द्वादशरात्रपर्यन्तं गर्भारम्भकत्वमार्त्तवस्य न तु प्रवृत्ति"रिति । मधुकोशकारोप्याह—"पञ्चरात्रानुबन्धीति, पञ्चरात्रं प्रभूतप्रवृत्त्याऽनु-बध्नातीत्यर्थः । अल्पप्रवृत्त्या पञ्चरात्रात्परतोऽप्यनुबध्नाति" इति । उक्तञ्च घृतपिण्डो यथैवाग्निमित्यादिश्लोकव्याख्यानकाले डल्हणेनापि— "ननु पुराणमार्त्तवमुपचयाद्दिनत्रयं स्रुत्वा स्वयमेव निवृत्तं, नूतनं त्वल्पं स्त्यानीभूतमिव प्रवर्त्तितुमक्षमम्, तत्कथमार्त्तवसञ्चारो येन तत्सृष्टं शुक्रं गर्भजननसमर्थं भवतीत्याशङ्क्याह—

> घृतपिण्डो यथैवाग्निमाश्रितः प्रविलीयते ।
> * विसर्पत्यार्त्तवं नार्यास्तथा पुंसां समागमे ॥" इति ।

नव्यैस्तु पुनर्गर्भाशयकलायास्तत्तत्स्वरूपमवेक्ष्य चक्रमिदञ्चतुर्धा विभक्तं विश्रान्तिकालः, स्रावपूर्वकालः, स्रावकालः, स्रावोत्तरकालश्चेति । तत्र—

**विश्रान्तिकालः**—षड्रात्रमितः । गर्भाशयकला चात्र अपरिवर्त्तित-रूपा स्वां प्रकृतिमनुवर्त्तते ।

**स्रावपूर्वकालः**—रजःस्रावकालात्प्राक् चतुर्दशदिवसमितोऽयं कालः । गर्भाशयस्य श्लष्मधरा कला चात्र द्विगुणस्थूला ( $\frac{1}{4}$" ) बीजरक्तप्रपूरिता

---

* पुरुषसमागमो बीजागमक्रियाम् ( वक्ष्यमाणाम् ) उद्दीपयति, तेन च नियतकालात्पूर्वमपि स्त्रीबीजस्यागम इत्याधुनिकैरपि स्वीक्रियते । विश्रान्तिकालः Quiescent interval—the resting phase. स्रावपूर्वकालः Pre-menstrual or pregestational congestion—the constructive phase.

श्लेष्मानुलिप्ता च भवति। सोऽयं प्राचां सञ्चयकालः। धृतगर्भायाश्चातः परमियमेव कला चतुर्गुणस्थूला जायते। 'गर्भधरा कला' इति च तत्संज्ञानम्। विश्वामित्रश्चात्र—

सूक्ष्मकेशप्रतीकाशा बीजरक्तवहाः सिराः।
गर्भाशयं पूरयन्ति मासाद्बीजाय कल्पते॥ इति।

स्रावकालः—चतुष्पञ्चदिवसमितः। अत्र बीजरक्तेनातिप्रपूरिताः कलाभागा यत्र तत्र विच्छिद्यन्ते, निःसरति च ततः कलाविदारस्थलेभ्यो ग्रन्थिमुखेभ्यश्च बीजरक्तम्। ग्रन्थिमुखेभ्यः श्लेष्मापि च्यवते। निर्गच्छति च तदेव बीजरक्तं विच्छिन्नकलाभागान्वितं श्लेष्ममिश्रञ्च रजःस्रावरूपेण योनिमुखात्। कला चात्र पुनस्तनुतामुपैति।

आदिमध्यान्तभेदेन च स्रावकालस्य त्रैविध्यम्। तत्रादिकालः कतिपयहोरामितः श्लेष्मस्रुतिलक्षणः। मध्यकालो द्विचतुर्दिनात्मकः शोणितस्रावरूपः। शेषोऽन्तकालश्च दिनैकमानो दिनद्वयमानो वा शनैः शनैर्हीयमानशोणितस्रावतया पुनरावृत्तश्लेष्मस्रुतिलक्षणः। भवन्ति चात्र स्रावकाले—

वैचित्यमरतिं, ग्लानिः, शीतकम्पः क्वचिच्, श्रमः।
गौरवं पक्ष्मवैवर्ण्य, मिति लिङ्गानि प्रायशः॥

सोयं प्राचां निर्हरणकाल ऋतुरप्रशस्तो नाम। सुश्रुतश्चात्र—

मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत्॥ इति। (शा० ३)

स्रावोत्तरकालः—अयमपि चतुष्पञ्चदिवसमितः। काले चास्मिन् विच्छिन्ना गर्भाशयकला शनैः शनैः प्रकृतिभावमापद्यते। सोऽयं कालो विश्रान्तिकालेन सहितः प्राचां प्रशस्त ऋतुः सूक्ष्मप्रवृत्तिलक्षणः।

---

गर्भधरा कला Decidua. स्रावकालः Actual menstruation or period of active blood loss—The destructive and bleeding phase. स्रावोत्तरकाल: Postmenstrual—the reparative phase.

रजोभावहेतुः—वयःपरिणामकालस्वभावात् सूक्ष्मं स्थितस्य रजसः कालेऽभिव्यक्तिरिति प्राञ्चः । यथाह कश्यपो जातिसूत्रीयशारीरे—"यथा च पुष्पमध्ये फलमनिर्वृत्तं सुसूक्ष्ममस्ति नचोपलभ्यते, यथाचाग्निर्दारुषु सर्वगतः प्रयत्नाभावान्नोपलभ्यते, तथा स्त्रीपुंसयोः शोणितशुक्रे कालावेत्ते स्वकर्मावेत्ते च भवतः । षोडशवर्षयोर्हि शोणितशुक्रयोर्मध्ये प्रभवतः; अर्वागपि यदाहारविशेषादारोग्याच्च पूर्णो भवत इति परिषत्" इति ।

नव्यास्तु बीजग्रन्थितः समुद्भूयमानं सूक्ष्मान्तःस्रावद्वयं रजोभावे हेतुरिति वदन्ति । बीजग्रन्थ्योः क्रियाशीलता च पोषणकग्रन्थेः पूर्वपिण्डाज्जायमानं सूक्ष्मान्तःस्रावयुगलमपेक्षते । केचित्तु बीजग्रन्थिशासनकर एक एव पोषणकग्रन्थिपूर्वपिण्डान्तररस इत्यामनन्ति । पोषणकग्रन्थिरपि च स्वकर्मार्थं बाह्यतः प्रेरणां लभते । सा च रसपाकविधिना सह सम्बद्धा, विशेषेण च सुधारसपाकविधिना । स्त्रीणां रसपाकविधिस्तु ( सुधाद्रव्यविषयकश्च प्राधान्येन) प्रतिमासं चयापचयवानिति प्रामाणिकाः । दृश्यते च प्रतिमासं गर्भार्थमुपचीयमानः सुधाराशिरसति गर्भधारणे रजोद्वारेण बहिष्क्रियत इति । एवञ्च सुधारसपाककारिणोश्चुल्लिकाधिवृक्कग्रन्थ्योरपि पोषणकग्रन्थिप्रेरकत्वेन कार्येऽस्मिन् कारणता सिद्धा ।

तत्रैको बीजग्रन्थिस्रावः परिपच्यमानबीजपुटकसम्भवः पीतपिण्डसम्भवश्च गर्भाशयस्य रक्तचयकरः स्तोकेन श्लैष्मिककलाया अभिवृद्धिकरश्च प्रसिद्धः । 'ऋतुसञ्जननरस' इति च तत्संज्ञानम् । अन्यो बीजग्रन्थिस्रावस्तु पीतपिण्डकोषाणूद्भवो रजःस्रावपूर्वकाले जायमानगर्भाशयपरिवर्त्तनानां प्रधानो हेतुरभिमतः । 'क्षेत्रसञ्जननरस' इति च तत्संज्ञा ।

---

पोषणकग्रन्थिः Pituitary gland. रसपाकविधिः Metabolism. सुधारसपाकविधिः Calcium Metabolism. चुल्लिकाग्रन्थिः Thyroid gland. अधिवृक्कग्रन्थिः Supra-renal gland. ऋतुसञ्जननरसः Oestradiol, Oestrin or Oestrogenic hormone. क्षेत्रसञ्जननरसः Progestin or Progesterone.

अथैवं पूर्वपोषणिकास्रावयोरन्यतरः सम्पादयति बीजपुटकपाकभेदक्रियाम्, उद्दीपयति च ऋतुसञ्जननरसोत्पत्तिम् । इतरस्तु पीतपिण्डस्य पीतकोषाणूनां कार्योत्तेजकः क्षेत्रसञ्जननरसस्रुतिमुदीरयति । 'गर्भबीजानुगुणो रस' इति च तयोः संज्ञानम् । स्रावैकवादिनस्तु पुनराहुः—एक एव पूर्वपोषणिकान्तररसो गर्भबीजानुगुणरससंज्ञः स्त्रीधातुशोणिते वर्त्तमानो यथास्वमानं तत्तत् कार्यजातं निष्पादयति । तत्र हीनमानो बीजपुटकपाकभेदक्रियामृतुसञ्जननरसस्रुतिञ्च समुद्दीपयति, प्रवृद्धमानस्तु पुनः स एव पीतकोषाणूत्तेजकः सन् क्षेत्रसञ्जननरसनिर्माणं साधयतीति ।

इमौ चात्र विशेषौ सततं स्मरणीयौ—( १ ) बीजग्रन्थेः पूर्वपोषणाकग्रन्थेश्च विचित्रैव काचित् अन्योन्यानुग्राहिता दृष्टा । तत्र प्रवृद्धमान ऋतुसञ्जननरसः पूर्वपोषणिकाया गर्भबीजानुगुणरसस्रुतिमवसादयति, स चावसन्नो रसो बीजग्रन्थिं प्रत्यवसाद्य ऋतुसञ्जननरसक्षयं कुरुते, क्षीणमानश्च पुनरेष एव रसः पूर्वपोषणिकां समुत्तेज्य नूतनगर्भबीजानुगुणरसस्रुतिमुदीरयति, स चोदीरितो रसो बीजग्रन्थिं प्रत्युदीर्य नवीनर्त्तुसञ्जननरसाय कल्पते । अतः परं पुनः पूर्ववदेव क्रियाक्रमः । ( २ ) पूर्वपोषणिकाया गर्भबीजानुगुणरसस्य बीजग्रन्थेरुपरि यादृशः पूर्णाधिकार इह वर्णितः सोऽगृहीतगर्भाया एव परिज्ञेयः, गृहीतगर्भायास्तु पुनः सोऽधिकारः संसृष्टबीजस्य पोषकस्तरात् अपराया बहिर्जरायूत्तानस्तराच्च जायमानेन तादृशस्वभावेन आन्तररसविशेषेण ( आन्तररसविशेषाभ्यां वा ) भूम्नाऽपह्रियते । 'भ्रूणान्तररस' इति च तत्संज्ञानम् । तादृशस्वभावोऽप्ययं रसो भृशं पीतकोषाणू-

---

गर्भबीजानुगुणो रसः Gonadotropic hormone. अन्योन्यानुग्राहिता Reciprocal action. संसृष्टबीजस्य पोषकस्तरः Trophoblast of the fertilised ovum. अपराया बहिर्जरायूत्तानस्तरः Chorionic epithelium of the placenta. भ्रूणान्तररसः Internal secretion produced by the young ovum.

त्तेजको भवति, न च तद्वत् हीनाधिकमात्रया कार्यद्वयकर इति विशिष्यते। यथा यथा च निर्मीयमाणयाऽपरया सह बहिर्जरा-यूत्तानस्तरस्याभिवृद्धिस्तथा तथा ह्यस्यान्तररसस्यापि परिमाणवृद्धिर्जा-यते। कार्यतस्तु रसोऽयम् आर्त्तवनिरोधाय पीतपिण्डस्य पूर्णोत्कर्षाव-स्थानाय च प्रभवति।

एवञ्च रजःस्रावकालादनन्तरं पुना रजःप्रवृत्तिं यावत् सततमुपचीयमा-नस्य ऋतुसञ्जननरसस्य स्त्रीशरीरे यः क्रियापरिणामः स आर्त्तवान्तरका-लोत्तरार्द्धे जायमानक्षेत्रसञ्जननरसस्य क्रियापरिणामेन लब्धबलो भवति। तत्क्रियापरिणामस्वभावाच्च गर्भाशयस्य क्षेत्रीकरणक्रिया सम्पद्यते। तत्र सति गर्भाधाने भ्रूणान्तररसबलेन पीतपिण्डम् पूर्णोत्कर्षमेव सन्तिष्ठते, न च विच्छिद्यते तथाभूतात् पीतपिण्डात् क्षेत्रसञ्जननरसनिर्माणसन्ततिः। अविच्छिन्नप्रवाहश्च क्षेत्रसञ्जननरसो गर्भाशयपेशीनां प्रचेष्टनबलं सविशेषमवसादयन् गर्भस्थैर्य्यकरो भवति। असति गर्भाधाने तु भ्रूणान्तररसबलाभावेन पीतपिण्डस्यापकर्षारम्भः क्षेत्रसञ्जननरसनिर्मा-णसन्ततेर्विच्छेदश्च। सहैव च पूर्वोक्तान्योन्यानुग्राहिताऽनुसारम् ऋतुसञ्जननरसस्यापि कालप्राप्तो मानक्षयः। एवञ्च रजःप्रवृत्तेर्दिनै-कपूर्वं दिनद्वयपूर्वं वा बीजग्रन्थिस्रावद्वयस्य स्त्रीशोणितधातौ सहसा परिक्षयात् बीजरक्तप्रपूरिता गर्भाशयकला विच्छिद्यते। 'निमित्तापाये नैमित्तिकस्याप्यपायः'।

रजःस्वरूपम्—रजस्तु तावच्छ्लेष्मसम्मिश्रं रक्तमेव गर्भाशयाच्च्य-वमानमित्युक्तं प्राक्। निर्माणतः—पुनस्तत् रसजं पाञ्चभौतिकमाग्नेयञ्च। वर्णतः—शशासृग्लाक्षारसादिवत् आरक्तवर्णमीषत्कृष्णं वा। वर्णभेदश्चा-र्त्तवे प्रकृति (वातादि) भेदादेव भवतीति चक्रपाणिः। आद्यन्तयोश्च तनुस्रावरूपतया ईषत्पीतमिव संलक्ष्यत इति विशेषः। स्पर्शतो—निष्पि-च्छम्, नातिपिच्छिलमिति यावत्; ईषत् मृत्स्नं तु भवत्येव श्लेष्मणो योगात्। गन्धतो—विगन्धम्, विशिष्टगन्धयुतं दुर्गन्धरहितं वेति यावत्। लक्षणतो—

दाहार्त्तिशून्यम् । परिमाणतश्च—अष्टतोलकतः षोडशतोलकं यावत् प्रमितम् । पञ्चतोलकता विंशतितोलकं यावदित्यपि केचित् ।*

न चेदं धातुशोणितवत् स्त्यायति, क्षारस्वभावञ्च भवति । तत्र सुधाराशिप्राचुर्यं रक्तस्कन्दकवस्तुनाऽभावश्चेति धातुशोणितादस्य वैशिष्ट्यम् । तच्च गर्भाशयश्लेष्मधरकलाप्रभावमूलम् । रक्तस्कन्दकवस्तुनोऽभावादेव रजो न स्कन्दते । कदाचिदुपलभ्यमानं रजःस्कन्दनं तु ग्रन्थिभूतार्त्तवरूपा विकृतिरेव । अन्ये त्वाहुः—"गर्भाशये रजः स्कन्निमेव वर्त्तते, शनैः शनैश्च तदेवाभिद्रुतं योनिमुखान्निर्गच्छति । तत्र स्कन्दने विच्छिन्नगर्भाशयकलाभागेभ्य उत्पन्नः स्कन्दकवस्तुविशेषः, स्कन्दद्रवणे च गर्भाशयकलाग्रन्थीनां श्लेष्मस्रावे वर्त्तमानो द्रावकवस्तुविशेषः कारणम्" इति ।

भवन्ति चात्र—

शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम् ।
तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् ॥

—सु० शा० २ अ० ।

मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखान्नुदेत् ॥

—वा० शा० १ अ० ।

गुञ्जाफलसवर्णञ्च पद्मालक्तकसन्निभम् ।
इन्द्रगोपकसङ्काशमार्त्तवं शुद्धमादिशेत् ॥
मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥

—च० चि० ३० अ० ।

---

* अतएव ( अनिश्चितपरिमाणत्वादेव ) चरके मानविशेषमनुक्त्वा "नैवातिबहुलात्यल्पम्" इति सामान्याभिधानमेत्र कृतम् ।

क्षारस्वभावम् Alkeline in reaction. रक्तस्कन्दकवस्तु Fibrin ferment. स्कन्दकवस्तुविशेषः Thrombokinase. द्रावकवस्तुविशेषः Fibrolysin.

*आर्त्तवं शोणितं त्वाग्नेयम्, अग्नीषोमीयत्वाद्गर्भस्य ।

—सु० सू० १४ अ० ।

सौम्यं शुक्रमार्त्तवमाग्नेयम्, इतरेषामप्यत्र भूतानां

सान्निध्यमस्त्यणुना विशेषेण, परस्परोपकारात्

परस्परानुग्रहात् परस्परानुप्रवेशाच्च ।

—सु० शा० ३ अ० ।

द्वावञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः ।

—वा० शा० ३ अ०

रजःकार्यम्— त्रिविधं हि रजःकर्म स्त्रीशरीरस्य विशोधनम्, गर्भाशयस्य क्षेत्रीकरणम्, गर्भकृत्त्वञ्च । तत्र विशोधनं नाम निकृष्टतमरक्तनिर्गमात्, गर्भपोषणार्थं सञ्चितस्य सुधाराशेः प्रयोजनाभावेन परित्त्यागाच्च स्त्रीधातुशोणितस्य संशोधनम् । क्षेत्रीकरणं पुनर्गर्भाशयस्य तत्कलास्थौल्येन संसृष्टबीजं यथा स्थिरमुप्तञ्च भवेत्तथाऽस्य प्रसाधनम् । गर्भकृत्त्वं तु तावत् पुंसङ्गमे विसृष्टेन शुक्रेण संसृष्टस्याऽस्य स्पष्टमेव । यथाक्रमञ्चैषां रजःकर्मणां निर्ह्रियमाणेन, सञ्चीयमानेन, सूक्ष्मं प्रवर्त्तमानेन च रजसा सहान्वयो बोद्धव्यः । आहुश्च प्राञ्चः—

नवे तनौ च सञ्जाते विगते जीर्णशोणिते ।

नारी भवति संशुद्धा पुंसा संसृज्यते तदा ॥

---

* आर्त्तवं शोणितं त्वाग्नेयमिति—सौम्येऽपि रसे तज्जमार्त्तवं धातुशोणितं चाग्नेयमिति तु शब्दार्थः । अन्ये तु 'आर्त्तवशोणितम्' इति पठित्वाऽऽर्त्तवमेवाग्नेयम्, धातुशोणितञ्च पुनरनुष्णाशीतमित्यभ्युपगच्छन्ति । बीजाधारग्रन्थितो निर्गतं स्त्रीबीजमप्याग्नेयमित्यष्टाङ्गशारीरकृतां वारियरमहोदयानामभिप्रायः । उक्तञ्च तैः—

पुंबीजवद् बलासीयं स्त्रीबीजं पित्तयोगिना ।

पीतयल्केन पूर्णं स्यादत आग्नेयमुच्यते ॥ इति ।

रजः प्रसेकान्नारीणां मासि मासि विशुद्ध्यति।
सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः॥
( डल्हणोद्धृतौ तन्त्रान्तरश्लोकौ )

'रक्तलक्षणमार्त्तवं गर्भकृच्च' सु० सू० १५ अ०।

नव्यास्तु वस्तुतः परिपक्वस्त्रीबीजस्यैव पुंबीजेन संसृष्टस्य गर्भकृत्त्वमित्यामनन्ति। केचित्तु प्राचामुद्भूतानुद्भूतभेदमुपेक्ष्य रजस उद्भूतस्यापि यथाकथञ्चिद् गर्भकारित्वं साधयन्त्येव। तद्यथा—"प्रत्यक्षतोऽस्य गर्भकृत्त्वाऽभावेऽपि शोणितमार्त्तवं बीजागमक्रियया सह सम्बद्धम्, उभयञ्चैकयोनिकम्, अन्योन्यापेक्षञ्चेत्युपलक्षणतया क्षेत्रीकरणक्रियाजनकत्वेन वा तस्य गर्भकृत्त्वम्" इति।*

अथ प्रसङ्गानुरोधाद् रजसो रसजत्वाभिधाने स्वारस्यं प्रदर्श्यते प्राचीनदिशा—

ननु ऋतुकाले योनितः प्रवर्त्तमानं रक्तमेव रजःसंज्ञकं भवतीत्युक्तं प्राक्। रक्तञ्च खलु रसादेवाभिनिर्वर्त्तते। यथोच्यते "रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते" इति। तत्पुनरत्र "रसादेव स्त्रिया रक्तं रजः संज्ञं प्रवर्त्तते," "मासि मासि रजःस्त्रीणां रजसं स्रवति त्र्यहम्" इत्यादिभी रसजत्वाभिधानस्य किं प्रयोजनमिति चेत्? उच्यते—

(१) रजो हि रसादाहाररसात्परिणामतो जातमिति रसजं न तु रसधातोर्जातमिति बोधनार्थमिह रसजत्वाभिधानमित्यरुणदत्तः।

(२) केदारकुल्यान्यायपक्षे हि सर्वसम्मते न केवलं रज एव अपि तु रक्तमप्याहाररसजमेवेति नात्र शङ्काऽवसरोऽपीत्यरुचिं प्रदर्शयन्तो निर्वृत्तिकालभेदज्ञापनार्थं पुनरुक्तिरियमिति केचिद् भाषन्ते। अयञ्च तेषामभि-

* एकयोनिकत्वञ्च तयोर्बीजाधारग्रन्थिमूलकत्वेन सिद्धम्। बीजाधारग्रन्थिरहिताया उभयमपि नोत्पद्यत इति सुपरीक्षितं नव्यैः। अन्योन्यापेक्षिता च न नियता, अन्वयव्यतिरेकाऽभावात्; रजोदर्शनं विनाऽपि बीजागमो दृष्टः, एवं सत्यपि रजोदर्शने न बीजागमः।

प्रायः—एतच्च रजोरूपं रक्तं रसजन्यमपि धातुशोणितवन्न शीघ्रं जायते किन्तु शुक्रवन्मासेनैवेति । यथोक्तं सुश्रुतेन "स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश च कला एकैकस्मिन् धाताववतिष्ठते, एवं मासेन रसः शुक्रीभवति स्त्रीणाञ्चार्त्तवम्" इति ।

( ३ ) अन्ये तु रजसो रक्तवत् सप्ताहेनैवोत्पत्तिं मन्यमाना आर्त्तवं नाम रसस्योपधातुरिति ख्यापनार्थमुक्तिरियमिति व्याख्यानयन्ति । उक्तञ्चापि —

रसात्स्तन्यं तथा रक्तमसृजः कण्डराः सिराः ।
मांसाद्वसा त्वचः षट् च मेदसः स्नायुसन्धयः ।। इति ।

स्तन्यादयश्च न धातुपदवाच्यास्ते हि शरीरं धारयन्त्येव न तु किञ्चित् पुष्णन्ति । उक्तं हि भोजे—

सिरास्नायुरजःस्तन्यत्वचो गतिविवर्जिताः ।
धातुभ्यश्चोपजायन्ते तस्मात्त उपधातवः ।। इति ।

अथाऽत्र केचिदाहुः—"एवं मासेन रसः शुक्रीभवति, स्त्रीणाञ्चार्त्तवम्" इत्यत्रार्त्तवशब्दः स्त्रीशुक्र एव वर्त्तते न तु रजसीति । तन्न । तत्रार्त्तवशब्दस्य रजोवचनत्वेनाप्युपपत्तेः । तद्यथा, तत्र मासेनार्त्तवस्य भवनमुपचयेोऽभिप्रेतः प्रकाशश्च । यथाह शिवदासाचार्यः—"वस्तुतस्त्वार्त्तवस्य रक्तरूपता यद्यपि मासादर्वाग् भवति तथापि तस्यार्त्तवरूपता गर्भाशयप्राप्त्यैव । प्राप्तिस्तु मासेनैव भवतीति कृत्वा मासेनार्त्तवं भवतीति सुश्रुतेनोक्तम्" इति ।

---

# षष्ठोऽध्यायः ।

## अथात ऋतुकालविज्ञानीयमध्यायं व्याख्यास्यामः ।

ऋतुकाल ऋतुर्वा नाम रजसोपलक्षितः कालविशेषो गर्भधारण-योग्यः स्त्रियाः पुनर्दृष्टार्त्तवाया अभिमतः । सोऽयं रजःसमयः शरदा-द्यृतुसाधर्म्याद् ऋतुशब्देनोच्यते । ऋतुसाधर्म्यञ्च यथर्त्तावुप्तानि बीजानि प्ररोहन्ति तथाऽर्त्तवदर्शनादृतौ शुक्ररूपं बीजमुप्तम्भवतीति । ऋतुर्हि द्विविधः प्रशस्तोऽप्रशस्तश्चेति । तत्रोद्भूतरजःसमयोऽप्रशस्तऋतुः, अनुद्भूतनव-शोणितकालश्च प्रशस्त ऋतुः । प्रायेण च ऋतुशब्दस्य प्रशस्तर्त्तावेव व्यवहारः । "ऋतुर्बीजकालमवेक्षते"—इति कश्यपः ( जातिसूत्रीय-शारीरे )। अथ चेन्दुः—"ऋतुश्च निषिक्तस्य बीजस्य फलप्रसवानुगुणः कालः" इति । डल्हणश्चापि—"ऋतुरङ्गनाया रजःसमयः" इति ।*

सोऽयमृतू रजोदर्शनदिवसादारभ्य षोडशरात्रमितो गण्यते । आद्यं स्रुतिदिनत्रयं योनिसङ्कोचदिनञ्च षोडशं न गणनीयमिति द्वादशरात्रमित इत्यपरे । प्रशस्तर्त्तौ तु तेषां तात्पर्यम् । मासं यावदपीत्यन्ये, ऋतुकाला-दनन्तरमपि गर्भधारणायाः क्वचिद् दृष्टत्वात् । तत्र कदाचित् स्त्रीबीजागम एव विलम्बेन भवति, कदाचिच्च निर्गतस्यापि स्त्रीबीजस्य पुम्बीजेन सह विलम्बेन संसर्जनमिति चात्र हेतुवादः । स्त्रीबीजस्य च विसारिमण्डलकोपा-णुस्नेहेन बीजवाहिन्यास्त्रावेण वा परिपुष्यमाणस्य कतिपयदिवसान् यावत्

---

ऋतुकाल: Genetic period or Ovulation time. *"ऋतुर्नाम शोणित-दर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः"—कुल्लूकभट्टः ( मनु-स्मृतिः ) । "स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः काल ऋतुः"—विज्ञा-नेश्वरः ( याज्ञवल्क्य-स्मृतिः ) ।

गर्भजननशक्तिर्न क्षीयत इति तु सिद्धम्। अथ तद्वद्दृष्टार्त्तवोऽप्यस्तीत्येके रजोदर्शनबीजागमयोः (बहिःपुष्पान्तःपुष्पयोः) सहकालभावित्वस्याऽनियतत्वात्। कुमार्या रजोदर्शनेन विनाऽपि गर्भधारणा दृष्टा; सूतिका चाऽपि कदाचित् पुनरार्त्तवदर्शनात् पूर्वमेव गर्भिणी भवति; नष्टार्त्तवायाः पाण्ड्वादिरोगिण्या अप्याधीयते गर्भः; निवृत्तरजस्कायाश्चापि क्वचिद् गर्भसम्भव इत्येवञ्चात्र हेतूनुदाहरन्ति

तत्र प्राय आर्त्तवदर्शनदिवसात् परं द्वादशादिसप्तदशान्तदिवसानामन्यतमेष्वेव स्त्रीबीजागम—इत्येष एव कालो गर्भग्रहणयोग्य इति सुपरीक्षितं नव्यैः। षष्ठादात्रयोदशं बीजागमकाल इत्यपि केचित्। अन्ये तु बीजागमकालो न नियतः, उदरविपाटनाऽवसरे आर्त्तवान्तरकालस्य प्रतिसमयं बीजग्रन्थौ भेदोत्सुकबीजपुटकानां बहुभिर्दृष्टत्वादित्याहुः।

आहुश्च प्राञ्चः—

ऋतुस्तु द्वादशरात्रं दृष्टार्त्तवो भवति। षोडशरात्रमित्यन्ये। शुद्धयोनिगर्भाशयार्त्तवाया मासमपीति केचित्। तद्वद्दृष्टार्त्तवोऽप्यस्तीत्यपरे।* (सङ्ग्रहशा० १)

ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः। तद्वददृष्टार्त्तवोऽप्यस्तीत्येके भाषन्ते। (सु० शा० ३)

"स्त्रीणामृतुर्भवति षोडशवासराणि"। (विदेहः)

"वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि।
अन्तःपुष्पं भवत्येव पनसोदुम्बरादिवत्॥" (कश्यपः)

अन्यच्चापि—

ध्रुवं चतुर्णां सान्निध्याद् गर्भः स्याद्विधिपूर्वकः।
ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा॥

---

* इति मतचातुर्विध्यं, गर्भस्यानियतदर्शनादितीन्दुः।

नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा।
ऋतौ व्यतीते नार्यास्तु योनिः संव्रियते तथा ॥*

—सु० शा० २, ३ अ०।

जलकर्षणबीजर्त्तुसंयोगात् सस्यसम्भवः।
युक्तिः षड्धातुसंयोगाद्गर्भाणां सम्भवस्तथा ॥

—च० सू० ११ अ०।

पद्मं सङ्कोचमायाति दिनेऽतीते यथा यथा।
ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ॥

—वा० शा० १।

ऋतुमती च नाम विगतजीर्णशोणिता नवरजस्का हि नारी ऋतुलक्षणयुता। यदुच्यते—

"गते पुराणे रजसि नवे चावस्थिते शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुमतीमाचक्ष्महे" इति—च० शा० ४।

पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम्।
नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्धजाम् ॥
स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम्।
हर्षौत्सुक्यपरां चापि विद्यादृतुमतीमिति ॥

—सु० शा० ३ अ०।

क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम्।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥

—वा० शा० १ अ०।

---

* योनिशब्देन चात्र गर्भाशयग्रीवाऽभिप्रेता। ऋतुकाले योनिरपावृता तिष्ठतीति निदर्शकानि वचनान्यपि प्रसङ्गान्तरे दृश्यन्ते, तद्यथा—

स्त्रीणां चार्त्तवकाले तु प्रतिकर्म तदाचरेत्।
गर्भासना सुखं स्नेहं तदादत्ते ह्यपावृता ॥ ( च० सि० ९ )
स्त्रीणामार्त्तवकाले तु योनिर्गृह्णात्यपावृतेः ॥ ( वा० सू० १९ )

## ऋतुकालचर्या गर्भाधानविधिश्च ।

### स्रावकालव्यवस्था ।

(१) ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत्। किं कारणम्? दिवास्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनाद् दुःखशीलः, तैलाभ्यङ्गात्कुष्ठी, नखापकर्त्तनात्कुनखी, प्रधावनाच्चञ्चलः, हसनाच्छ्यावदन्तौष्ठतालुजिह्वः, प्रलापी चातिकथनात्, अतिशब्दश्रवणाद्बधिरः, अवलेखनात् खलतिः, मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत् ।

दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमहविष्यभोजिनीं च त्र्यहं भर्त्तुः संरक्षेत् ।

तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति, यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते प्राणैः, द्वितीयेऽप्येवं सूतिकागृहे वा; तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति; चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति ।

---

(१) ब्रह्मचारिणीति, ऋतुदर्शनात्पूर्वं मासं ब्रह्मचर्यस्य वक्ष्यमाणस्य ( अतः परं मासादुपेयादित्यनेन ) विशिष्टप्रजोत्पादनं प्रयोजनम्। अस्मिंश्च ऋतुदर्शने दिनत्रयं ब्रह्मचर्यस्य स्वयमेवाचार्योऽग्रे प्रयोजनं कथयिष्यति ( तत्र प्रथमे दिवसे मैथुनगमनमनायुष्यं पुंसां भवतीत्यादिना ) इत्यत्र डल्हणः ।

उन्मत्तो = वातलः शीघ्रकोपी उग्रस्वभाव इति वा यावत् । दिवास्वप्नादीनां स्वापशीलादीनां च परस्परं यः कार्यकारणभाव इह प्रदर्शितस्तस्य सोपपत्तिकं निर्धारणं तु न सुकरम्। स्त्रीणां मनोदशा भाविनमपि गर्भं प्रभावयतीति तु सुनिश्चितम् । यथाह चक्रपाणिः—"दृष्टश्च मानसानामपि भावानां भूतविशेषकरणे शक्तिविशेषः" इति ( शा० २ )। हविष्यं = सघृतशाल्योदनादि; क्षीरसंस्कृतं यवान्नमित्येके। स प्रसवमानो विमुच्यते प्राणैः = मृतगर्भजन्म (still born) इत्यर्थः । सूतिकागृहे वा = दशदिवसाभ्यन्तरं प्राणैर्विमुच्यत इति ।

न च प्रवर्त्तमाने रक्ते बीजं प्रविष्टं गुणाकरं भवति, यथा नद्यां प्रतिस्रोतः प्लाविद्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मान्नियमवतीं त्रिरात्रं परिहरेत् । अतः परं मासादुपेयात् ।

—सु० शा० २ अ० ।

( २ ) ततः पुष्पात् प्रभृति त्रिरात्रमासीत ब्रह्मचारिण्यधःशायिनी पाणिभ्यामन्नमजर्जरात पात्राद् भुञ्जाना च । न च काञ्चिन्मृजामापद्येत ।

—च० शा० ८

( ३ ) ततः पुष्पदर्शने प्रथमदिवसात् ब्रह्मचारिणी स्नानाद्यलङ्काररहिता दर्भसंस्तरशायिनी त्रिरात्रमासीत । पर्णशरावकरतलान्यतमेन यावकं पयसा सिद्धमल्पं कर्शनार्थमश्नीयात् । तीक्ष्णोष्णाम्ललवणानि च वर्जयेत् ।

—सङ्ग्रहशा० १

---

गुणाकरम् = गर्भाधानकरं रूपवत्त्वसत्त्ववत्त्वचिरायुष्ट्वादिगुणाकरं वा ।

कश्यपोपि जातिसूत्रीयशारीरे निजगाद—"रजस्वलायाश्चेत् प्रथमेऽहनि गर्भ आपद्येत तं वातगर्भमाचक्षते विकलं वातपुष्पमिवोद्भिदानां; द्वितीयेऽहनि चेत् स्रंसते च्यवते वा; तृतीयेऽहनि सूतिकासने म्रियते, न वा दीर्घायुर्भवति, हीनाङ्गश्च जायते; अत ऊर्ध्वमृतुर्द्वादशाहं ब्राह्मणीनाम्, एकादशाहं क्षत्रियाणाम्, दशाहं वैश्यानां, नवरात्रमितरासाम्" इति ।

(२) मृजामिति, मृजा = अङ्गसंस्कारः स्नानादिकः । (३) कर्शनार्थमिति, कर्शनेन रक्तशुद्धिर्मार्गशुद्धिर्नियतं गर्भधारणा पुत्रोत्पत्तिश्च सम्भाव्यते । मातुः पुष्टिकार्श्ययोर्गर्भधारणेन सह सम्बन्धविशेषोऽस्तीति तु नव्या अपि मन्यन्ते । दृश्यते च पशुलोके यत् गोमहिषीप्रभृतीनामृतुकाले यदि गर्भस्थितिर्न स्यात्तदा द्वितीयर्त्तुकाले द्वित्रदिनमल्पाहारप्रदानेन वृषभादिसंयोगे सति नियतं गर्भधारणेति । "कर्शनं रक्तशुद्धये मार्गशुद्धये चे"तीन्दुः । नियतं गर्भधारणा पुत्रोत्पत्तिश्चे-

( ४ ) ततः पुष्पेक्षणादेव कल्याण्ध्यायनी ह्यहम् ।
मृजालङ्कारहिता दर्भसंस्तरशायिनी ॥
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्शनम् ।
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥ —वा० शा० १

## स्नानोत्तरकालव्यवस्था ।

( १ ) ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससां समलङ्कृतां कृतमङ्गल-स्वस्तिवाचनां भर्त्तारं दर्शयेत् । तत्कस्य हेतोः ?—

---

त्याधुनिकाः । स्मृतिश्चापि—"एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् । सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान्" इति ( याज्ञवल्क्यस्मृतिः ) । अत्र मिताक्षराकारो विज्ञानेश्वरोऽप्याह—"क्षामता च तस्मिन् काले रजस्वलाव्रतेनैव भवति । अथ चेन्न भवति तदा कर्तव्या क्षामता पुत्रोत्पत्त्यर्थमल्पाऽस्निग्धभोजनादिना" इति । तीक्ष्णोष्णाम्ललवणानि च वर्जयेदिति, रक्ताऽशुद्धि-भयादितीन्दुः, गर्भाशयरक्ताधिक्यकारितया गर्भाऽनवस्थानप्रसंगादिति च नव्याः ।

( १ ) शुद्धस्नातामिति—शुद्धा जीर्णशोणितापगमेन, अनन्तरं स्नातेति डल्हणः । तत्र जीर्णशोणितापगमेनान्तःशुद्धिः स्नानेन च बहिःशुद्धिर्भवतीति ज्ञेयम् । श्रूयते चापि—रजस्वलायाः स्त्रिया रक्ते रजोविषं भवति, स्वेद-स्तन्यमार्गाभ्याञ्च तदुत्सर्गः । अतएव रजस्वलाया हस्ते धृतं पुष्पमचिरेणैव म्लायते, स्तन्यमपि च शिशोः कष्टकरं भवतीति । स्मृतयश्चात्र—

"रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला"—मनुः ।
"साध्वाचारा न तावत् स्याद्रजो यावत्प्रवर्त्तते ।
रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि" ॥—पाराशरः ।
"स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते ।
गम्या निवृत्ते रजसि नानिवृत्ते कथञ्चन" ॥—आपस्तम्बः ।
"शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति" ॥
—विज्ञानेश्वरोद्धृतम् स्मृत्यन्तरम् ।

पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।
तादृशं जनयेत्पुत्रं भर्त्तारं दर्शयेदतः ॥
ततो विधानं पुत्रीयमुपाध्यायः समाचरेत् ।
कर्मान्ते च क्रमं ह्येनमारभेत विचक्षणः ॥

ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिरभिविश्वास्य; विकल्प्यैवं चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्याञ्चोपेयादिति पुत्रकामः । अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्रीकामः । त्रयोदशीप्रभृतयो निन्द्याः ।

एपूत्तरोत्तरं विद्यादायुरारोग्यमेव च ।
प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै ॥
आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ।
स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥

---

ततो विधानं पुत्रीयमिति = पुत्रीयविधानन्त्वनुपदमेव चरकवचनैर्व्याख्यास्यते गयदासोक्तिर्वा अत्रैव डल्हणव्याख्याने द्रष्टव्या । मासं ब्रह्मचारीति = "निन्द्यास्वष्टासु चान्यासु, स्त्रियो रात्रिषु वर्जयन् । ब्रह्मचार्य्येव भवति तत्र तत्राश्रमे वसन्" ॥ इति मनुः । मासं ब्रह्मचारिणीमिति = पुंसो मासब्रह्मचारित्वेन स्त्रिया अपि ब्रह्मचारित्वे लब्धे मासं ब्रह्मचारिणीमिति यदुक्तं तन्मनःसङ्कल्पमात्रस्यापि निराशार्थमिति डल्हणः । एकादश्याञ्चेति = वाग्भटेऽष्टाङ्गसङ्ग्रहे धर्मशास्त्रे चैकादशमहो निन्दितम् । यदुच्यते "ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रोऽथ निन्दिताः । एकादशी च"—वा० शा० १ । "एकादशीत्रयोदश्योस्तु नपुंसकम्"—संग्रहे । 'तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः"—मनुः । चक्रपाण्युद्धृतो हारीतस्त्वाह—"चतुर्थीषष्ठ्यष्टमीद्वादशीषु गुणवन्तमायुष्मन्तं पुत्रं जनयति । पञ्चमीनवम्येकादशीषु कन्या गुणवतीः । सप्तम्यां दुर्भगां कन्यामिति ।"

देवताब्राह्मणपराः शौचाचारहिते रताः।
महागुणान् प्रसूयन्ते विपरीतास्तु निर्गुणान् ॥
एवञ्जाता रूपवन्तः सत्त्ववन्तश्चिरायुषः।
भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिताः ॥

—सु० शा० २, ३।

(२) ततश्चतुर्थेऽहन्येनामुत्साद्य सशिरस्कं स्नापयित्वा शुक्लानि वासांस्याच्छादयेत्, पुरुषञ्च। ततः शुक्लवाससौ स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसेतामिति ब्रूयात्। स्नानात् प्रभृति युग्मेष्वहःसु संवसेताम् पुत्रकामौ, अयुग्मेषु दुहितृकामौ। न न्युब्जां पार्श्वगतां वा संसेवेत। न्युब्जाया वातो बलवान् स योनिं पीडयति। पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा स च्युतः पिदधाति गर्भाशयम् ( गर्भमिति पाठान्तरम् )। वामे पित्तं पार्श्वं तदस्याः पीडितं विदहति रक्तशुक्रम्। तस्मादुत्ताना बीजं गृह्णीयात्। तस्या हि यथास्थानमवतिष्ठन्ते दोषाः। पर्याप्ते चैनां शीतोदकेन परिषिञ्चेत्।

तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्त्ता क्रुद्धाऽन्यञ्च पुमांसमिच्छन्ती मैथुने चातिकामा वा न गर्भं धत्ते। विगुणां वा प्रजां जनयति। अतिबालामतिवृद्धां दीर्घरोगिणीमन्येन वा विकारेणोपसृष्टां वर्जयेत्। पुरुषेऽप्येत एव दोषाः। अतः सर्वदोषवर्जितौ स्त्रीपुरुषौ संसृज्येयाताम्। सञ्जातहर्षौ मैथुने चानुकूलाविष्टगन्धं स्वास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनमशित्वा नात्यशितौ दक्षिणपादेन पुमान् वामपादेन स्त्री चारोहेत्। तत्र मन्त्रं प्रयुञ्जीत—

अहिरसि आयुरसि सर्वतः प्रतिष्ठाऽसि धाता त्वा।
दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेदिति ॥

---

(२) उत्साद्य = उद्वर्त्य। न्युब्जाम् = अधोमुखीम्। पर्याप्ते = समाप्ते। परिषिञ्चेत् = एनां कृतरमणां स्त्रियं मैथुनश्रमोष्मप्रशमार्थं शीतोदकेन मुखनयनादिषु योनिषु च परिषिञ्चेत् ( गंगाधरः )।

ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाऽश्विनौ।
भगोऽथ मित्रावरुणौ पुत्रं वीरं दधातु मे ॥

इत्युक्त्वा संवसेताम्।

सा चेदेवमाशासीत—बृहन्तमवदातं हर्यक्षमोजस्विनं शुचिं सत्त्वसम्पन्नं पुत्रमिच्छेयमिति, शुद्धस्नानात्प्रभृत्यस्यै मन्थमवदातयवानां मधुसर्पिर्भ्याम् संसृज्य श्वेताया गोः सरूपवत्सायाः पयसाऽऽलोड्य राजते कांस्ये वा पात्रे काले काले सप्ताहं सततं प्रयच्छेत् पानाय। प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिर्भिः पयोभिर्वा संसृज्य भुञ्जीत। तथा सायमवदातशरण-शयनासनयानवसनभूषणा च स्यात्। सायं प्रातश्च शश्वत् श्वेतं महान्तं वृषभमाजानेयं हरिचन्दनाङ्गदं पश्येत्। सौम्याभिश्चैनां कथाभि-र्मनोऽनुकूलाभिरुपासीत। सौम्याकृतिवचनोपचारचेष्टाँश्च स्त्रीपुरुषानि-तरानपि चेन्द्रियार्थानवदातान् पश्येत्। सहचर्यश्चैनां प्रियहिताभ्यां सतत-मुपचरेयुः, तथा भर्त्ता। न च मिश्रीभावमापद्येयाताम्। इत्यनेन विधिना सप्तरात्रं स्थित्वाऽष्टमेऽहन्याप्लुत्य सशिरस्कं भर्त्रा सहाऽहतानि वस्त्राण्या-च्छादयेदवदातानि। अवदाताश्च स्रजो भूषणानि बिभृयात्।

तत ऋत्विक् प्रागुत्तरस्यां दिश्यागारस्य प्राक्प्रवणमुदक्प्रवणं वा देशम-भिसमीक्ष्य गोमयोदकाभ्यां स्थण्डिलमुपलिप्य प्रोक्ष्य चोदकेन वेदीमस्मिन्

---

अवदातम् = गौरवर्णम्। हर्यक्षम् = सिंहविक्रमम्। काले २ = सायं प्रातः। मन्थः = जलालोडितसक्तवः। शरणम् = गृहम्। शश्वत् = प्रतिदिनम्। आजानेयम् = कुलीनाश्वम्। हरिचन्दनम् = श्वेतचन्दनम्। अङ्गदोऽङ्गरागो बाहुभूषणं वा। इन्द्रियार्थानिति = इन्द्रियार्थाश्चाक्षुषा एव, पश्येदित्युक्तेः, किंवा पश्येदुपलभेत तेन श्रोत्रमनोभ्यामपि अवदातत्वग्रहणं लभ्यते। सप्तरात्रम् = न स्नानात्, किन्तु रजःप्रवृत्तित एव। प्रवणम् = निम्नम्, प्लवनमित्यपि पाठः। स्थण्डिलम् = पूजास्थानम्।

स्थापयेत् । तां पश्चिमेनानाहतवस्त्रसञ्चये श्वेतार्षभे वाऽप्यजिन उपविशेन् ब्राह्मणप्रयुक्तः, राजन्यप्रयुक्तस्तु वैयाघ्रे चर्मण्यानडुहे वा, वैश्यप्रयुक्तस्तु रौरवे वास्ते वा । तत्रोपविष्टः पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय, कुशैः परिस्तीर्य, परिधिभिश्च परिधाय, लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपाकिरेत् । तत्र प्रणीयोदपात्रं पवित्रं पूतम्, उपसंस्कृत्य सर्पिराज्यार्थम् यथोक्तवर्णानाजानेयादीन् समन्ततः स्थापयेत् । ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमुपविश्यानुलभेत सह भर्त्रा यथेष्टं पुत्रमाशासाना । ततस्त्वस्या आशासानाया ऋत्विक् प्रजापतिमभिनिर्दिश्य योनौ तस्याः कामपरिपूरणार्थम् काम्यामिष्टिं निर्वपेत्, विष्णुर्योनिं कल्पयत्वित्यनया ऋचा । ततश्चैवाज्येन स्थालीपाकमभिघार्य त्रिर्जुहुयात्, यथाम्नायं चोपमन्त्रितमुदपात्रं तस्यै दद्यात् सर्वोदकार्थान् कुरुष्वेति ।

ततः समाप्ते कर्मणि पूर्वं दक्षिणपादमभिहरन्ती प्रदक्षिणमग्निमनु परिक्रामेत् । ततो ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्राऽऽज्यशेषं प्राश्नीयात् पूर्वं पुमान्, पश्चात् स्त्री । नचोच्छिष्टमवशेषयेत् । ततस्तौ सह संवसेतामष्टरात्रम् । तथाविधपरिच्छदावेव स्याताम् । तथेष्टपुत्रं जनयेताम् ।

---

ताम् = वेदीम् । अजिनम् = चर्म । उपसमाधाय = वेद्यामग्निं संस्थाप्य । परिस्तीर्य = चतुर्दिक्षु कुशानास्तीर्य । परिधिभिः = बृहत्पलाशदण्डैश्चतुर्भिः । परिधाय = वेष्टयित्वा । पवित्रं = स्वभावतो विशुद्धम् । पूतं = मन्त्रपूतम् । आज्यम् = होमार्हघृतम् । उपसंस्कृत्य = मन्त्रैः संस्कृत्य । अनुलभेत = ऋत्विक्प्रयुक्ता ऋत्विग्विधानमनुकुर्यात् । उपवेश्येति पाठे तु यथा पूर्वेणाग्निर्दक्षिणेन च ब्राह्मणः स्यात्तथा ब्राह्मणं ब्रह्माणमुपवेश्य । अभिनिर्दिश्य = अभिमन्त्र्य । योनौ = अग्नौ । इष्टिम् = यागम् ( कामेष्टिः = पुत्रेष्टिः ) निर्वपेत् = कुर्यात् । स्थालीपाकम् = चरुम् । अभिघार्य = मिश्रीकृत्य । प्रदक्षिणम् = दक्षिणावर्तेन । अनु = ऋत्विजः ( पतेश्च ) पश्चात् । अष्टरात्रम् = अष्टमाहमारभ्याष्टरात्रं पञ्चदशरात्रं यावत् ।

या तु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुञ्च पुत्रमाशासीत, या वा कृष्णं कृष्णमृदुकेशं शुक्लाक्षम् शुक्लदन्तं तेजस्विनमात्मवन्तम्। एषोऽनयोरपि होमविधिः, किन्तु परिबर्हो वर्णवर्जं स्यात्। पुत्रवर्णानुरूपस्तु यथाशीः परिबर्होऽन्यः कार्यः।

शूद्रा तु नमस्कारमेव कुर्यात् देवाग्निद्विजगुरुतपस्विसिद्धेभ्यः। या या च यथाविधं पुत्रमाशासीत तस्यास्तस्यास्तान्तां पुत्राशिषमनुनिशम्य ताँस्तान् जनपदादीन् मनसाऽनुपरिक्रामयेत्।ताननुपरिक्रम्य या या येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत सा सा तेषां तेषां जनपदानामाहारविहारोपचारपरिच्छदाननुविधत्स्वेति वाच्या स्यादित्येतत्सर्वं पुत्राशिषां कर्म व्याख्यातं भवति ॥

—च० शा० ८

( ३ ) चतुर्थेऽहन्युद्वर्त्तिता शीतसलिलस्नानानुलिप्तालङ्कृता शुक्लमाल्याम्बरा कृतमङ्गलस्वस्त्ययनैवंविधमेव भर्त्तारं पश्येदनन्यमनाः। तदा हि यादृशमेव पश्यति चिन्तयति वा तादृशं प्रसूत इति।

ततः स्नानात्पुनरपि गुणवत्पुत्रार्थी त्रिरात्रमुपेक्षेत। पुष्पदर्शनात् सप्तरात्रम्। अथाष्टम्यां दशम्यां द्वादश्यां वा रात्रौ पुत्रकामः संवसेत्। पञ्चम्यां सप्तम्यां नवम्यां वा दुहितृकामः। तासूत्तरोत्तरमायुरारोग्यैश्वर्यसौभाग्यबलवर्णेन्द्रियसम्पदपत्यस्य भवति। अतः परन्तूत्तरोत्तरमेवायुरादीनां ह्रासः।

---

परिबर्हः = शयनासनपुष्पादिपरिच्छदः। यथाशीः = यथाकामम्। नमस्कारमेव = शूद्राया मन्त्रे होमे चानधिकारात्। पुत्राशिषम् = पुत्रकामनाम्। अनुनिशम्य = ऋत्विक् श्रुत्वा। अनुपरिक्रामयेत् = मनसा चिन्तयितुं ऋत्विक् वदेदित्यर्थः। (३) तादृश प्रसूत इति-अत्राह चरकः—'गर्भोपपत्तौ तु मनः स्त्रिया यं जन्तुं व्रजेत्तत्सदृशं प्रसूते'' इति ( शा० २ )।

अथोपाध्यायः पुत्रीयं विधानमाचरेत् । शूद्रायास्तु मन्त्रवर्जितम् । यादृशञ्च पुत्रमाशासीत तद्रूपवर्णचरितान् जनपदाननुचिन्तयेति स्त्री वाच्या । तज्जनपदाहारविहारोपचारपरिच्छदांश्चानुविदधीत ।

कर्मान्ते च पुमान् मासं ब्रह्मचारी सर्पिःक्षीराभ्यां शाल्योदनमभिप्राश्य नात्याशितः सुखी स्रग्वी सुमनाः प्रीणितांगः शुक्लनिवसनो मौहूर्तिकानुमते रात्रिभागे कल्याणानि चिन्तयानस्तदभिकामः स्वास्तीर्णं शयनं दक्षिणेन पादेन प्रागारोहेत् । तद्विधैव च प्रमदा कर्शिताङ्गी तैलमाषोत्तराहारा पूर्वं वामपादेन पुरुषस्य दक्षिणतः शय्यामधिरोहेत् । तत्र मन्त्रं प्रयुञ्जीत—आयुरसि सर्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेति । ब्रह्मा बृहस्पतिर्विष्णुस्सोमस्सूर्यस्तथाश्विनौ । भगोऽथ मित्रावरुणौ वीरं दधतु मे सुतम्" । इति ।

ततः परस्परं सामभिरभिसान्त्व्य सहर्षमनुकूलं संविशेताम् । पर्य्याप्ते चैनां शीतोदकेन सहसा परिषिञ्चेत् ।

तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्त्ता क्रुद्धातिमेदुरान्यकामा व्यवायकामा वा न गर्भं धत्ते विगुणं वा । तथा पुरुषोऽपि । नचासावधस्तिष्ठेत् । तथाहि स्त्रीचेष्टः पुमान् जायते पुंश्चेष्टा वा स्त्री । न च न्युब्जां पार्श्वगतां वा सेवेत । न्युब्जाया वातो बलवान् स योनिं पीडयति । दक्षिणपार्श्वगतायाः श्लेष्मा पीडितच्युतः पिदधाति गर्भाशयम् । वामपार्श्वगतायास्तद्वत् पित्तं विदहति रक्तशुक्ले । तस्मादुत्ताना बीजं गृह्णीयात् । तथा हि यथास्थानमेव तिष्ठन्ति दोषाः ।

—संग्रह शा० १

(४) चतुर्थेह्नि ततः स्नात्वा शुक्लमालाम्बरा शुचिः ।
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् ॥
उपाध्यायोऽथ कुर्वीत पुत्रीयं विधिवद्विधिम् ।
नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम् ॥
अवन्ध्य एव संयोगः स्यादपत्यञ्च कामतः ।

सन्तोऽप्याहुरपत्यार्थं दम्पत्योः सङ्गतं रहः ॥
दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ।
इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तौ ॥
चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ।
कर्मान्ते च पुमान् सर्पिः क्षीरशाल्योदनाशितः ॥
प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ।
आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ॥
तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ।

"अहिरसीत्यादि"

सान्त्वयित्वा ततोऽन्योन्यं संविशेतां मुदान्वितौ ।
उत्ताना तन्मना योषित्तिष्ठेदङ्गैः सुसंस्थितैः ॥
तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।

—चा० शा० १

(५) अथ शुद्धस्नातां ( ता ) स्त्रियं ( स्त्री ) चतुर्थेऽहनि स्नानगृहे श्वेतेन एवान्येन वाससाऽवगुण्ठ्यानवलोकयन्ती शुचिर्देवगृहं प्रविश्योद्घटाग्निं प्रज्वलन्तं घृताक्ततेनाभ्यर्च्य ब्राह्मणमीश्वरं विष्णुं स्कन्दं च सम्प्रेक्ष्याभिवाद्य, निष्क्रम्य सूर्यचन्द्रमसाविति, न तु प्रेतपिशाचरक्षांसि, शुद्धस्नातमात्रा हि स्त्री यं वा पश्यति मनसा वाऽभिध्यायति तादृशाचारवपुषं प्रायेण जनयति; तस्माद्देवगोब्राह्मणगुरुवृद्धाचार्यान् सतः पश्येत्, कल्याणमनाश्च स्यात् । न तु सन्ध्ययोः स्नानं मैथुनं वोपेयान्नान्यमना इति ॥

तत ऋत्विक् पुत्रीयमिष्टिं निर्वपेत् । सिद्धमांसौदना वातन्नौ ( ? ) वाऽऽज्यभागौ, यवमयः पुरोडाशोऽष्टाकपालो, व्रीहिमयश्चरुः, उभौ वागायुर्युतौ प्रजायेते; नत्वदे......क्षे, 'आब्राह्मन् ब्राह्मण' इति यजमानभागम-

परिच्छदो मनुजगवाश्वधनधान्यवस्त्रालङ्काररत्नरथायुधगृहोद्यानवीणापणवगायनशय्यास्तरणादिः ( अरुणदत्तः ) ।

भिमन्त्र्य शेषं दम्पती प्राश्नीयाताम् । श्वेत ऋषभोऽश्वो वा हिरण्यं वा भिषजे सैव दक्षिणा, सैवमनाहिताग्नेः, शालाग्नौ नित्यं होमं हुत्वा, तेनैव मन्त्रेण हुतशेषं तौ प्रा( श्नीतः )। शयनीये मृदुस्वास्तीर्णोपहितेऽस्यै भर्त्ता......त्र लक्ष्मणामद्भिरालोड्य, 'सोमः पवत' इत्येतेन शतजप्तेन सावित्र्या व्याहृतिभिः 'अयो देवीरुपसृज' इति मन्त्रेण नस्यं दत्वा वामदेव्यं जपित्वा, दक्षिणेन पार्श्वेन स्त्रियं शाययीत, वामपार्श्वेन पुमानूर्ध्वोत्तरेणोपशयीत । शनैः प्रजार्थं चाचरेत् । बीजेऽवसिक्ते विधार्यावसर्पेत् । शीतोदकेन च शौचं कुर्यात् । तत ऊर्ध्वमग्निकर्मप्रतापायासव्यायामशोकादिवर्जनमिति ॥

सा चेदिच्छेद्गौरमोजस्विनं शुचिमायुष्मन्तं पुत्रं जनयेयमिति, तस्या एवं शुद्धस्नानात् प्रभृति शुक्लयवसक्तूनां मधुघृताभ्यां श्वेतायाः श्वेतपुंवत्सायाः गोः क्षीरेण संसृज्य मन्थं राजते पात्रे कांस्ये वा सदा पाययेत्, शालिगौरयवक्षीरदधिघृतप्रायं च काले मात्रया अश्नीयात्, पुष्पाभरणवासांसि च शुक्लानि बिभृयात्, सायं प्रातश्च श्वेतमश्वं वृषभं वा पश्येत् सौम्यप्रियकथाभिरासीत, अनुकूलपरिवारा च स्यादिष्टमपत्यं जनयति । या तु श्यामं लोहिताक्षं व्यूढोरस्कं पुत्रमिच्छेत् कृष्णं वा तत्र तादृगुपचारो भोजनवसनकुसुमालङ्काराणां, तादृग्देशानुचिन्तनं चेति । यवागूं तु कन्यार्थिनीभ्यो दद्यात्; क्षीरोदकतिलसिद्धास्तु वर्ण्याः । गौरश्यामकृष्णेभ्योऽन्ये वर्णा निन्दिताः ॥

—जातिसूत्रीयशारीरे कश्यपः ।

अथ विशेषः—*

अथाप्येतौ स्त्रीपुंसौ स्नेहस्वेदाभ्यामुपपाद्य, वमनविरेचनाभ्यां संशोध्य क्रमात् प्रकृतिमापादयेत् । संशुद्धौ चास्थापनानुवासनाभ्यामुपाचरेत् ।

---

* विशेषश्चायं श्रेयसीं प्रजामिच्छद्भ्यां पूर्वमनुसर्त्तव्यः, ततश्च ऋतुचर्याविधिः । क्रमात् = संसर्जनक्रमात् ।

उपाचरेच्च मधुरौषधसंस्कृताभ्याम् घृतक्षीराभ्यां पुरुषम्, स्त्रियं पुनस्तैल-माषाभ्याम्। इति।

—च० शा० ८

अथ शुद्धशुक्लार्त्तवमरोगं मिथोऽनुरक्तं मिथुनमुपस्नेह्य विधिवत् संशोध्यास्थापनानुवासनाभ्यामुपाचरेत्। विशेषतस्तु घृतक्षीरवद्भिर्मधुरौषधसंस्कारैः पुरुषम्, तैलेन नारीं पित्तलैश्च मांसैः। एवं हि समानगुणतया शुक्रार्त्तवमाप्यायते। इति।

सङ्ग्रहशा० १

# प्रथमोऽध्यायः ।

## अथातो गर्भावक्रान्तिविज्ञानीयमध्यायं व्याख्यास्यामः ।

### यस्मिंश्च गर्भसंज्ञा ।

गर्भो हि नाम शुक्रशोणितजीवसंयोगः, आत्मप्रकृतिविकारसम्मूर्च्छना-विशेषश्चेतनाधिष्ठितो महाभूतानां विकारविशेषो वा कुक्षिगतः । पुम्बीजेन संसृष्टं हि स्त्रीबीजं गर्भाशयकलायां संस्थितमिति यावत् । यदुच्यते—

( १ ) शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति ।*

—च० शा० ४ ।

---

गर्भः Fertilized ovum or Embryo. * सम्यग्योगः संयोगः, तेन जीवस्यातिवाहिकशरीरेण योगो गृह्यते न त्वात्मनो व्यापकत्वेन योगः; किंवा विभुरात्मा सर्वगतत्वेन न याति तथापि यत्रास्य कर्मवशान्मनो याति तत्रैव चैतन्योपलब्धेरात्मापि गत इति व्यपदिश्यते । नव्यास्तु पुनः—शुक्रे शोणिते च यौ पुम्बीजस्त्रीबीजरूपौ सूक्ष्मदेहधरौ जीवौ तयोः कुक्षिगते संयोगे गर्भसंज्ञा भवतीति व्याख्यानयन्ति । न चात्मा कुतश्चित् बाह्यत आगत्य शुक्रशोणित-संसर्गमवक्रामति, किन्तर्हि विश्वरूपस्य तस्य शुक्रे शोणिते च बीजरूपेण प्रारम्भत एव विद्यमानस्य गर्भबीजयोः सम्मूर्च्छने संयुक्तचिरकेन्द्रनिर्माणरूपा-वस्थान्तरगमनमात्रं जीवावक्रमणपदेन चेतनाधिष्ठानपदेन च सर्वत्राभि-प्रेतमिति तेषामभिप्रायः । शुक्रार्त्तवे हि विश्वरूपस्यात्मनो रूपद्रव्ये । यदुक्तं चरके—'चरतो विश्वरूपस्य रूपद्रव्यं यदुच्यते' इति ( चि० २ अ० ४ पा० ) । शुक्रं चेह प्रकरणगतत्वेनोक्तम्, तेनार्त्तवमप्यात्मनो रूपद्रव्यं ज्ञेयमिति चात्र चक्रपाणिः । एवञ्च सूक्ष्मशरीरिणो जीवस्य मातृपितृगतौ द्वावंशौ भवत इति सिद्धम् ।

(२) शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्च्छितं गर्भ इत्युच्यते।

—सु० शा० ५।

(३) गर्भस्तु खलु अन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः। एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधिष्ठानभूतः। स ह्यस्य षष्ठो धातुरुक्तः।

—च० शा० ४।

## यथा चानुपूर्व्याऽभिनिर्वर्त्तते कुक्षौ।

गर्भावक्रान्तिस्तु गर्भस्यावतरणक्रमस्तदभिनिर्वृत्तिप्रकारो वा। तत्र स्त्रीपुंसयोः संयोगे योनौ विसृष्टस्य शुक्रस्य गतिविशेषशालिनः पुम्बीजाख्या बीजभागा गर्भाशयमुखं प्रविश्य गर्भाशयकलारोम्णां बहिर्मुखचेष्टनशीलानां प्रतिप्रवाहमूर्ध्वमेव प्रसरन्ति, प्रविशन्ति च पुनः स्त्रिया बीजवाहिस्रोतसो मुखम्। अमी च शुक्रकीटाणवः प्राकृतशरीरोष्मणि गर्भाशयबीजवाहिन्योर्मदुक्षारस्वभावे आस्रावे च प्रायो दिवसानामाचतुर्दशं प्राणवन्तो दृष्टाः। प्रजननशक्तिः पुनर्ह्रीयते नवेति तु सन्दिग्धम्। प्रवृद्धशरीरोष्मा तीक्ष्णाम्लक्षारद्रव्याणि चैषामुपघाताय कल्पन्ते। तत्र पञ्चादि दशान्तप्रपलमिते काले प्राङ्गुलमानमार्गमेते प्रक्रामन्ति; प्राङ्गुलस्याष्टभागैकमानं वा प्रपलेनेति च परीक्षकाः।

---

गर्भावक्रान्तिः (Process of the fertilization & development of the foetus) :—गर्भस्यावक्रान्तिर्मैलक उत्पत्तिरिति यावत्—चक्रपाणिः। तस्य (गर्भस्य) अवक्रान्तिः, उपगमनम् अवतरणमिति यावत्—डल्हणः। तस्य (गर्भस्य) अवक्रमणं प्राप्तिः, स्वरूपलाभः—इन्दुः। गर्भस्यावक्रान्तिरवक्रमणं सम्प्राप्तिः। यथाऽगर्भो गर्भता सम्पद्यत इत्यर्थः—अरुणदत्तः। शुक्रकीटाणवः (पुम्बीजानि वा) Spermatozoa प्रपलम् One minute

स्वभावतश्च तत्रैव स्रोतसः पुष्पितप्रान्तस्यान्तिके बीजग्रन्थितो यथा-कालमागतं सिद्धं स्त्रीबीजं स्रोतोगतैरनेकशुक्रकीटाणुभिराक्रान्तमपि प्रबल-तमेनैकेनैव पुम्बीजेन प्रायः संसृज्यते । संसजनप्रकारश्चेत्थम्—शुक्र-कीटाणुर्हि स्वेन तीक्ष्णशिरःपिधानकेन विनष्टविसाग्निमण्डलस्य स्त्रीबीजस्य बीजावरणं निभिद्य आगात्रभागमन्तर्विष्टस्तच्चित्केन्द्रेण चैकतां गतः प्रजनन-केन्द्रमेकं निर्माति । पुच्छभागस्त्वस्य बहिःशिष्टो विनश्यति लुप्यते च । एवं संसर्जनाच्च स्त्रीबीजे वर्णतन्तूनां संख्यामानं पुनरप्यष्टचत्वारिंशत्प्रमाण-मभिजायते । तत्र 'त्व'तन्तुमता पुम्बीजेन संयुक्तं स्त्रीबीजं कन्यां, 'ज्ञ'-तन्तुमता युक्तञ्च पुत्रं जनयति । स्त्रीबीजन्तु सर्वदा 'त्व'तन्तुमदेव ।

## जननस्तरनिर्वृत्तिः ।

पुम्बीजेनेत्थं संसृष्टस्य संक्षुब्धचैतन्यस्य च स्त्रीबीजस्य सकेन्द्रश्चिद्रसः पुरुषोपहिता क्षुब्धप्रकृतिरिव परिणमन् द्विधा चतुर्धाऽष्टधा षोडशधा चेत्येवं क्रमशो विभज्य कोषाणुसङ्घातरूपः सम्पद्यते । सेयं कललावस्था नाम गर्भस्य । कोषाणुसमूहश्च बीजावरणाभ्यन्तर एव तद्वे-ष्टितः सन्तिष्ठते । अतः परं परिणामतश्च शनैः (गर्भाशयस्थापनादीषत्पूर्वकालं यावत्) बीजावरणविलोपः कायमानवृद्धिश्च ।

[ २० चित्रम् ]

कललम् ।



ततः कललमध्येऽवकाश उत्पद्यते द्रवपूर्णः । बुद्बुदावस्था चेयं गर्भस्य । कोषाणुसमूहश्च द्रवसम्पीडितस्तनुपरिमरीयभागे, पिण्डीभूयैकताऽवस्थितं स्थूलसंहतान्तर-

---

सिद्धम् Mature. तीक्ष्णशिरःपिधानकम् Head Cap or Sharp perforatorium. प्रजननकेन्द्रम् (संयुक्तकेन्द्रं वा) Segmentation or Conjugation Nucleus. जननस्तरनिर्वृत्तिः Formation of the Germinal Layers. कललावस्था Mulberry mass or Morula बुद्बुदावस्था Blastocyst or Blastodermic Vesicle.

भागं च द्वेधा विभज्यते। कतिपयकोषाणवश्च विरलावस्थानत्वाद्द्रवे प्लवमाना उभयोरन्तरालमधितिष्ठन्ति। तत्र वेष्टनभूतस्तनुपरिसरीयभागः पोषकस्तरः सामान्यबहिःस्तरो वा, स्थूलसंहतान्तरभागश्च आन्तरपिण्डिका उत्पादपिण्डिका वेति संज्ञायते। अन्तरालगतस्य विरलकोषाणुवृन्दस्य तु प्राथमिकमध्यस्तरः सामान्यमध्यस्तरो वेति संज्ञानम्। ( २३ चित्रम )

[ २१ चित्रम् ]

बुद्बुदम्।




१—पोषकस्तरः। २—आन्तरपिण्डिका। ३—बुद्बुदावकाशः।

अतः परं परिणामतश्चामी विशेषा अभिनिर्वर्त्तन्ते, तद्यथा—

( १ ) पोषकस्तरः स्तरिकाद्वये परिणमति। तत्रान्तरस्तरिका सावरणकोषाणुमयी बाह्यस्तरिका च निरावरणकोषाणुमयीति विशेषः। पोषकस्तरादेव च शनैः शनैर्जरायुकोरकाणां प्रादुर्भावः।

( २ ) स्थलद्वयेऽन्तर्द्रवनिचयात् आन्तरपिण्डिकायां द्रवगर्भावकाशद्वयं निष्पद्यते। तत्रोत्तानमवस्थितोऽवकाशो गर्भकोषसंज्ञया, गभीरमवस्थि-

---

पोषकस्तरः सामान्यबहिःस्तरो वा Trophoblast or Extraembryonic Ectoderm. आन्तरपिण्डिका उत्पादपिण्डिका वा Inner or formative Cell mass, Embryonic Cell mass, or Enclosed Ectoderm. प्राथमिकमध्यस्तरः सामान्यमध्यस्तरो वा Primary or Extraembryonic Mesoderm. सावरणकोषाणुमयी पोषकस्तरिका Cytotrophoblast ( Langhans' Layer ). निरावरणकोषाणुमयी पोषकस्तरिका Plasmodial trophoblast ( Syncytium ). गर्भकोषः Amniotic Cavity, Ectodermal or Amnioembryonic Vesicle.

तोऽवकाशश्च यल्ककोषसंज्ञया प्रथितः । उभयोः पर्यवकाशीया कोषाणुश्रेणी च यथाक्रमं कौषिको बहिःस्तर इति, कौषिकोऽन्तःस्तर इति च व्यपदिश्यते। अस्यैव च बहिःस्तरस्य गर्भकोषतलभूमिभूतो भागो

[ २२ चित्रम् ]

बुद्बुदस्य परिणामविशेषाः ।




१—पोषकस्तरः कोरकाविर्भावश्च । २—कौषिको बहिःस्तरः । ३—गर्भकोषः । ४—बहिर्जननस्तरः । ५—यल्ककोषः कौषिकान्तःस्तरप्राचीरः । ६—बुद्बुदावकाशः ।

बहिर्जननस्तरसंज्ञया, अन्तःस्तरस्य च यल्ककोषच्छदिभूतो भागः अन्तर्जननस्तरसंज्ञयाऽभिधीयते ।

( ३ ) प्राथमिकमध्यस्तरोऽपि स्तरद्वये संविभक्त एकेन सावरणकोषाणुमयीं पोषकस्तरिकामन्तरावृणोति, अपरेण च पूर्वोक्तकोषद्वय-

---

यल्ककोषः Yolk Sac, Entodermal Vesicle, or Archenteron. कौषिको बहिःस्तरः Amniotic Ectoderm. कौषिकोऽन्तःस्तरः Archenteronic Entoderm. बहिर्जननस्तरः Embryonic Ectoderm. अन्तर्जननस्तरः Embryonic Entoderm.

मास्तृणुते । पारिधो मध्यस्तरः कौषिको मध्यस्तरश्चेति च यथाक्रमं तयोः संज्ञानम् । स्तरद्वयान्तरालस्तु द्रवपूर्णो महावकाशसंज्ञः । अथ च कौषिकमध्यस्तरस्यैकदेश एव पूर्वोक्तजननस्तरयोरन्तराले प्रसृतो द्वैतीयकमध्यस्तरसंज्ञां मध्यजननस्तरसंज्ञां वा लभते ।

[ २३ चित्रम् ]

मध्यस्तरस्तत्परिणतिश्च ।



१—गर्भकोषस्य निर्माणोपक्रमः । २—पोषकस्तरः । ३—प्राथमिकमध्यस्तरः । ४—गर्भवृन्तम् । ग—गर्भकोषः । य—यल्ककोषः ।

एवञ्च त्रयोऽपि जननस्तरा एकत्र सान्निध्येनावस्थिता इति सिद्धम् । अस्य च सन्निहितजननस्तरत्रयप्रदेशस्य भाविगर्भशरीरनिर्माणायतनभूतत्वात् गर्भस्थलीति संज्ञानम् । सेयं बुद्बुदावस्था नाम गर्भस्य सम्यग्व्याख्याता ।

यथा यथा च महावकाशो वर्धते तथा तथा मध्यस्तरोपि आन्तरपिण्डकायाः ( कोषद्वयपरिणतायाः ) पोषकस्तरस्य च मध्ये प्रविशति निर्मोति च

---

पारिधमध्यस्तरः Somatopleur कौषिको मध्यस्तरः Splanchnopleur. महावकाशः Magma Cavity or Extraembryonic Coelome. द्वैतीयकमध्यस्तरो मध्यजननस्तरो वा Secondary or Embryonic Mesoderm. गर्भस्थली Embryonic Area or Shield.

पुनर्गर्भस्थल्याः पश्चिमप्रान्तस्य पोषकस्तरस्य चान्तराले विशेषेण पुञ्जीभूय भावि गर्भवृन्तम् । (गर्भवृन्तम् आन्तरपिण्डकाकोषाणुनिर्मितमिति तु केचित्)। गर्भवृन्तमेव चाग्र रक्तप्रणालिकाविष्करणेन नाभिनाले परिणमति ।

[ २४ चित्रम् ]

**गर्भवपनप्रक्रिया ।**




१—गर्भित स्त्रीबीजम् । २—गर्भधरा कला ।

एवं विपरिणमच्च स्त्रीबीजं शनैः शनैः स्रोतोमार्गमनुगच्छत् सप्ताहेन दशाहेन वा क्षेत्रीकृतप्रायं गर्भाशयं प्राप्नोति । गर्भाशये च प्रायस्तदुत्तर-भागस्य पूर्वे पश्चिमे वा प्राचीरे कलायां स्वेनैव (जरायुकारकाणां धातुविलायकशक्तिबलात्) निखातस्य मातृरुधिराभिप्लुतस्य वपनगर्त्त-

---

गर्भवृन्तम् Belly stalk or Abdominal pedicle धातुविलायक-शक्तिः Histolytic Action वपनगर्त्तम् Implantation Cavity.

स्यान्तर्निविशते, स्थिरीभवति च पुनर्गर्भधरकलावरणाज्जरायुकोरकसन्निवेशाच्च।

## वचनानि चात्र—

( १ ) ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदं भवति, अर्धमासाभ्यन्तरे पिण्डो भवति, मासाभ्यन्तरे कठिनो भवति।

—गर्भोपनिषत्।

( २ ) प्रथमेऽहनि रेतश्च संयोगात् कललञ्च यत्।
जायते बुद्बुदाकारं शोणितञ्च दशाहनि॥
घनं पञ्चदशाहे स्यात् विंशाहे मांसपिण्डकम्।
पञ्चविंशत्तमे प्राप्ते पञ्चभूतात्मसम्भवः॥
मासैकेन च पिण्डस्य पञ्चतत्त्वं प्रजायते॥

—हारीतः ( स्वसंहितायाम् )।

( ३ ) अव्यक्तः प्रथमे मासि सप्ताहात् कललो भवेत्।

—वा० शा० १।

अत ऊर्ध्वं गर्भस्थल्यां गर्भशरीरस्य विकासपद्धतिस्तु गर्भावक्रान्तिशारीरतो ज्ञेया। तन्त्रान्तरविषयत्वान्नेह प्रपञ्चिता। गर्भावक्रान्तिशारीरं हि प्रचुरविज्ञेयत्वात् दुरूहत्वाच्च पृथगेव तन्त्रमामनन्ति भिषजः। दृश्यन्ते चारम्भत एव गर्भविकसने विभक्तिपक्तिक्लित्तिसंहतिवृद्धिरूपाः पञ्च व्यापारप्रक्रियाः। यथोक्तं सुश्रुतेन—"तं चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्ति, आकाशं विवर्धयति; एवं विवर्धितः स यदा हस्तपादादिभिरंगैरुपेतस्तदा शरीरमिति संज्ञां लभते" इति ( शा० ५ )। जननस्तरत्रयादभिनिर्वर्त्तमानान् भावविशेषाँस्त्वनुपदमेव वर्णयिष्यामः। इदन्त्ववधेयम्—

प्रारम्भिको हि भ्रूणो यल्ककोषपृष्ठेऽवस्थितश्चिपिटशराविकाकृतिः संलक्ष्यते । गर्भकोषश्च ततो गर्भोदकवृद्ध्या संवर्धमानो भ्रूणशरीरं पूर्वापरतः पार्श्वयोश्च तथा सम्पीड्य वेष्टयति यथेदं द्विगुणीभूय अपावृतोदरा नलिकेव सञ्जायते । द्विगुणीभावकाले च भ्रूणनलिका तदेवापावृतमुदरं द्वारीकृत्य सन्निकृष्टं यल्ककोषैकदेशमपि स्वान्तर्नीत्वा क्रोडी करोति । अन्ततो गत्वा च भ्रूणविग्रहः सर्वथैव गर्भकोषस्याङ्के पतित आच्छाद्यतेऽन्यत्र यल्ककोषभ्रूणनलिकयोर्मिथोऽनुबन्धस्थलात् । एवमाच्छाद्यमाने च महावकाशस्याप्येकदेशो भ्रूणान्तर्नीतो व्यवच्छिद्यते शेषभागेन, निर्मीयते च तेन भ्रूणस्य उरस्योदर्योऽवकाशः । शेषो महावकाशस्तु शनैः शनैर्जरायुद्वयमेलनात् विलुप्यते ।

[ २५ चित्रम् ]

भ्रूणस्य द्विगुणीभावः ।




१—अन्तर्जरायुः । २—बहिर्जरायुः । ३—गर्भवृन्तम् । ४—अलिन्थः । ग—गर्भकोषः । य—यल्ककोषः ।

भ्रूणान्तर्गतेन यल्ककोषैकदेशेनैव च आन्यन्नवहस्रोतो गर्भस्य निर्मीयते । शेषो यल्ककोषस्तु गर्भकोषवृद्ध्याऽपसार्यमाणो गर्भवृन्तस्यान्तिके नीतस्तदङ्गतां गच्छति, उपलभ्यते च गर्भनाभिनाले तदवयवभूतो हेतोरत एव । नालपुटकमिति च तत्संज्ञानम् । अनुबध्यते चैतत् भ्रूणान्तर्गतभागेन सह यल्कवाहिनीसंज्ञया तनुदीर्घप्रणालिकया । प्रणालिका चेयं यल्ककोषस्यैव आकृष्य तनूकृतो ग्रीवाभागः ।

---

चिपिटशराविका Flat disc. अपावृतोदरा नलिकेव Like a tube open along its lower side भ्रूणनलिका Embryonic tube. उरस्योदर्योऽवकाशः Pleuroperitoneal Cavity नालपुटकम् Umbilical Vesicle. यल्कवाहिनी Vitelline duct.

[ २६ चित्रम् ]

भ्रूणस्य द्विगुणीभावः।




१—अलिन्थः। २—भ्रूणान्तर्गतो यल्ककोषः ( भ्रूणान्त्रम् )। ३—नालपुटकम्। ४—यल्कवाहिनी। ५—गर्भकोषः। ६—भ्रूणान्तर्नीतो महावकाशैकदेशः।

भ्रूणान्तर्गतयल्ककोषस्य च पश्चिमैकदेश उद्गत्य गर्भवृन्तान्तः प्रविशति गोस्तनाकारः,न चोर्ध्वं पोषकस्तरेण सङ्गच्छते इत एव समाप्यमानः। अलिन्थ इति च तत्संज्ञानम्। भ्रूणान्तर्गतोऽलिन्थभागस्तु स्फारीभूतो गर्भवस्तिं निर्मिमीते। वस्तेरूर्ध्वं मध्यरेखायामानाभिप्रसृता वस्तिबन्धनिका च पुनरेतस्यैव विशुष्को भागः, सम्यक् लक्षयति च वस्तिनाभिनालयोः प्राक्कालिकं सम्बन्धविशेषम्।

अलिन्थः Allantois. वस्तिबन्धनिका Urachus.

अथेदमपि—गर्भकोषस्य वृतिभूता कोषाणुश्रेणिरेव अन्तर्जरायुकलां निर्माति । सा च वृतिराभ्यन्तरतः कौषिकबहिःस्तरमयी बाह्यतश्च कौषिक-मध्यस्तरमयी । एवं बहिर्जरायुरपि बाह्यतः सामान्यबहिःस्तरेण, आभ्य-न्तरतश्च पारिधमध्यस्तरेण निर्मीयते । उभयत्र बहिर्मध्यस्तरयोरवस्थान-विपर्यय इति वैशिष्ट्यम् । यथा यथा च गर्भकोषस्याभिवृद्धिस्तथा तथा तदभिव्याप्यमानस्य महावकाशस्य विलोपः, जरायुद्वयस्य मध्यस्तरयोर्मिथो-मेलनादेकीभावश्च ।

## जननस्तरत्रयादभिनिर्वर्त्तमाना भावविशेषास्त्वित्थम्, तत्र -

**बहिःस्तरात्** —
- बहिस्त्वक्, मेदोग्रन्थिस्वेदग्रन्थिस्तनग्रन्थीनामुत्तानकलास्तरिका, केशा, नखानि च ।
- दन्तच्छदलालाग्रन्थयः ।
- अक्षिकर्णयोरुत्तानकलास्तरिका ।
- दृष्टिमणिः, तारामण्डलपेशीसूत्राणि च ।
- मुखनासयोर्गुदान्तभगयोश्चोत्तानकलास्तरिका, अधरगुदञ्च ।
- समग्रं नाडीतन्त्रम्, ज्ञानेन्द्रियाणां नाडीतन्त्रात्मका भागः, पोषणिकाग्रन्थिश्च ।

**मध्यस्तरात्** —
- संयोजकधातुः. रुधिरम्, अस्थीनि, तरुणास्थीनि, दन्ताश्च ।
- स्नैहिककला ( उदर्या, उरस्या, हृदयधरा कला च ) ।
- रक्तवहसंस्थानम्, रसवहसंस्थानञ्च ।
- तारामण्डलपेशीसूत्राण्यतिरिच्य निखिलाः शारीरपेश्यः ।
- प्लीहा, अधिवृक्कग्रन्थेर्बहिर्वस्तु च ।
- अन्तर्जननाङ्गानि, गर्भबीजानि, वृक्कौ, गवीन्यौ च ।

अन्तःस्तरात् —
- अन्नवहस्रोतसः श्लेष्मलकला, तदनुबद्धग्रन्थीनाम्
- यकृदग्न्याशयप्रभृतीनामुत्तानकलास्तरिका च ।
- चुल्लिकापचुल्लिकाबालग्रन्थीनामुत्तानकलास्तरिका ।
- मूत्राशयमूत्रमार्गयोः समग्रप्राया ( वस्त्यन्तरीयं त्रिकोणं मूलाधारिकमूत्रप्रसेकं च परिवर्ज्य ) उत्तानकलास्तरिका ।
- श्वसनयन्त्रस्य ( फुस्फुसौ, श्वासनलिका, स्वरयन्त्रञ्च ) उत्तानकलास्तरिका ।

## गर्भधरा कला ।

अथैवमवस्थिते गर्भे गर्भाशयश्लेष्मलकला पोषकस्तरस्य प्रवृद्धधातुविलायककर्मणा भृशमुद्बोधिता प्रतिकुर्वाणेव गर्भधरकलायां परिवर्तते । प्रतिक्रिया चेयं परितो बीजवपनस्थल समुत्थिता क्रमेण निखिलामपि गर्भाशयकलामभिव्याप्नोति । तत्रार्त्तवचक्रस्य द्वादशादिसप्तदशान्तदिवसानामन्यतमो हि प्रायेण बीजागमकाल इति वर्णितचरम् । तथा च कालेऽस्मिन्नागतं संसृष्टं च स्त्रीबीजं यदा गर्भाशयमवाप्नोति तदा पूर्वत एव रजःस्रावपूर्वकालिकीमवस्थां गतां ( क्षेत्रीकृतप्रायां, यथाकालमाजिगमिषोर्गर्भस्यातिथ्याय पूर्वतः सन्नद्धां वेति यावत् ) श्लेष्मलकलां पश्यति, उद्बोधयति च तां तदन्तर्वर्त्तमानं गर्भधरकलानिर्माणाय । दृष्टश्च कदाचिन्नियतकालात् प्रागपि बीजागमः । सति त्वेवं गर्भधृता अकालप्राप्तस्यातिथेरातिथ्यमिव सर्वथा नूतन एवायं गर्भधरकलानिर्माणोपक्रम इति विशेषः ।

### एष च तावत् गर्भधरकलायाः स्वरूपविशेषः—

( १ ) कलायाः संयोजकधातुकोषाणवो ( क्षेत्रवस्तुकोषाणव इति यावत् ) बृहत्पीताभचित्केन्द्रवत्सु महत्कोषाणुषु परिवर्त्तन्ते । गर्भधरकला-

---

गर्भधरा कला Decidua. गर्भधरकलाकोषाणवः Decidual Cells.

कोषाणव इति च तेषां संज्ञानम् । धात्वाहारस्य पोषकस्तरस्य क्रियाप्रतिरोधिभूताश्चामी कोषाणवः शोणितप्रणालिकामर्माणि परितः प्राधान्येन पुञ्जीभूय तान्यभिरक्षन्ति ।

( २ ) कलाग्रन्थयस्तु विशेषेण वृद्धिं गता व्यात्तमुखा विकसितग्रीवा विस्फारिताद्गराश्च सञ्जायन्ते । नलिकाकृतयो ग्रन्थयश्चैते विवर्धनात् दीर्घीभूता गभीरभागेषु पूर्वापरतो द्विगुणीभूय स्वात्मनः सङ्गमयन्ति यथास्थानम् ।

( ३ ) कलायाः केशिकाश्च रक्तसञ्चारवृद्ध्या रक्तातिपूर्णा विशेषेण स्फारीभवन्ति ।

( ४ ) समग्रैव च कला स्थूलशूना प्रजायते प्राङ्गुलार्धवेधा च । अति प्रगल्भायास्तु पुनः पादोनप्राङ्गुलवेधः प्राङ्गुलाष्टभागसप्तकवेधो वा दृष्टः । आचतुर्थमासं च गर्भकलाया अभिवृद्धिकालः ।

( ५ ) दृश्यते चानुलम्बच्छेदे कलाया गभीरभागो ग्रन्थिविस्फारितोद्गावकाशबहुल उत्तानभागस्तु ग्रन्थिग्रीवामुखसन्धारणो गर्भधरकलाकोषाणुसङ्कुलः । यथाक्रमं चानयोः शुषिरस्तरो निबिडस्तरश्चेति संज्ञानम् ।

संस्थानविशेषाच्च गर्भकलायास्त्रिविधः संज्ञानभेदो दृष्टः । तद्यथा—

वपनगर्त्तस्य तलभूमिगता कला ( शुषिरस्तरमात्रावशेषा ), यामधिश्रित्य गर्भो वर्त्तते साऽऽधारकला तलदैशिकी नाम; या च प्रवेशरन्ध्रमुपरुन्धाना गर्त्ताविष्टं गर्भं सम्यगाच्छाद्य पिदधाति सा पिधानकला कौषिकी नाम; या च पुनरवशिष्टा सा पतनकला साधारणी परिसरीया वा नाम । ग्रीवासरण्याः श्लेष्मलकला तु गर्भधरकलायां न परिवर्त्तते । ( २७ तमम्, २८ तमञ्च चित्रम् )

---

शुषिरस्तरः Spongy layer. निबिडस्तरः Compact layer. तलदैशिकी Decidua Basalis or Placentalis. कौषिकी Decidua Capsularis. साधारणी परिसरीया वा Decidua Vera or Parietalis.

[ २७ चित्रम् ]

**गर्भो गर्भधरा कला च ।**




१—उपरुद्धं प्रवेशरन्ध्रम् । २—कोरकाः । ३—तलदैशिकी गर्भधर-कला । ४—कौषिकी गर्भधरकला । ५—गर्भाशयगुहा । ६—साधारणी गर्भधरकला ।

तत्र तृतीये मासि कौषिकी कला गर्भवृद्ध्याऽभिवर्धमाना तनूकृता च साधारणया गर्भकलया संसज्यते । कला च साधारणी चतुर्थात् परं वर्धमानगर्भेण भृशं सम्पीडनात् क्रमशोऽवशीर्यमाणा तनुतामुपयाति । कार्यतस्तु गर्भधरा कला गर्भतल्पनिर्माणम्, बालगर्भपोषणम्, खादतः पोषकस्तरात् गर्भाशयपेश्यादिसंरक्षणञ्च प्रसाधयति ।

[ २८ चित्रम् ]

गर्भो गर्भधरकला च ।




१—कौषिक्या गर्भधरकलयाऽऽच्छादितो गर्भः । २— साधारणी गर्भधरकला । ३—अन्तर्मुखम् ४—बहिर्मुखम् ।

## प्राञ्चस्तु पुनर्गर्भावक्रान्तिमधिकृत्य विशेषमाहुः—

(१) पुरुषस्यानुपहतरेतसः, स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्ग ऋतुकाले यदा चानयोस्तथैव युक्ते च संसर्गे शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतं जीवोऽवक्रामति सत्त्वसम्प्रयोगात् तदा गर्भोऽभिनिर्वर्त्तते ।

— च० शा० ३ ।

---

(१) सत्त्वसम्प्रयोगः — आत्मनि नित्यानुबन्धस्य मनसो जवः । यदुच्यते—"युक्तस्य मनसा तस्य निदिश्यन्ते विभोः क्रिया" इति, "अस्ति खल्वपि सत्त्वमौपपादुकं यज्जीवं स्पृकशरीरेणाभिसम्बध्नाति" इति च ।

( २ ) यथा चानुपूर्व्याऽभिनिर्वर्त्तते कुक्षौ तदनुव्याख्यास्यामः—गते पुराणे रजसि नवे चावस्थिते शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुमतीमाचक्ष्महे । तया सह तथाभूतया यदा पुमानव्यापन्नबीजो मिश्रीभावं गच्छति तदा तस्य हर्षादुदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात्सम्भवति । स तथा हर्षभूतेनात्मनोदीरितश्चाधिष्ठितश्च बीजरूपो धातुः पुरुषशरीरादभिनिष्पत्योचितेन पथा गर्भाशयमनुप्रविश्यार्त्तवेन संसर्गमेति ।

तत्र पूर्वं चेतनाधातुः सत्त्वकरणो गुणग्रहणाय प्रवर्त्तते । स हि हेतुः कारणं निमित्तमक्षरं कर्त्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्मा विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यो गुणी ग्रहणं प्रधानमव्यक्तं जीवो ज्ञः पुद्गलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति ।

स गुणोपादानकालेऽन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते; यथा प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूतः सत्त्वोपादानः पूर्वतरमाकाशं सृजति,

---

( २ ) हर्षात् = हर्षादित्युपलक्षणम्, तेन हर्षादय अष्टावपि भावा गृह्यन्ते । यदुच्यते—

हर्षात्तर्षात्सरत्वाच्च पैच्छिल्याद्गौरवादपि ।
अणुप्रवणभावाच्च द्रुतत्वान्मारुतस्य च ॥
अष्टाभ्य एभ्यो हेतुभ्यः शुक्रं देहात् प्रसिच्यते ॥

—च० चि० २ ।

परः = सारः परकालोत्पन्नो वा । शरीरधात्वात्मा = शरीरधातुरूपः । शुक्रभूतः = शुक्रस्वरूपः । सम्भवति = व्यज्यते नतूत्पद्यते । गुणग्रहणायेति = अत्र गुणशब्देन गुणगुणिनोरभेदोपचारात् गुणवन्ति भूतान्युच्यन्ते । किंवा, गुणोऽप्रधानम्, प्रधानञ्चात्मा, तद्व्यतिरिक्तानि च भूतानि गुणाः । स हीत्यादि = हेत्वादयश्चात्मनः प्राधान्यख्यापकाः पर्यायाः । पूर्यते गलति चेति पुद्गलः ( पृषोदरादित्वात्साधुः ) । स गुणेत्यादि = अयञ्च भूतग्रहणक्रम आगमसिद्ध एव, नात्र युक्तिस्तथाविधा हृदयङ्गमाऽस्तीति चक्रपाणिः ।

ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादींश्चतुरः; तथा देहग्रहणेऽपि प्रवर्त्तमानः पूर्वतरमाकाशमेवोपादत्ते, ततःक्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकाँश्चतुरः। सर्वमपि तु खल्वेतद् गुणोपादानमणुना कालेन भवति ।

—च० शा० ४ ।

( ३ ) स आत्मा गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मानम् ।

—च० शा० ३ ।

( ४ ) तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति। ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन। ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता

---

( ४ ) तेजः = हृदयोत्तेजनात् समुद्भूता शक्तिः, जननाङ्गेषु विशेषेणाभिव्यज्यमाना । वायुः = कामकेन्द्राधिष्ठानः क्रियाशीलः पवनः । रतिकाले च पञ्चेन्द्रियाणां स्वस्वविषये व्यापृतत्वेऽपि त्वगिन्द्रियं स्वविषये विशेषेण व्यापृतं सद् वायुमुद्दीपयति । वचनञ्चापि—"स्पर्शनेऽभ्यधिको वायुः स्पर्शनञ्च त्वगाश्रितम्" इति । तेजोऽ·····च्युतमिति = सुरतलक्षणव्यायामजोष्मविलीनविद्रुतमनिलाच्च्युतमिति । योनिमभिप्रतिपद्यते = योनिमभितः सर्वतः प्रतिपद्यते, तेन योनेस्तृतीयावर्त्तावस्थितगर्भशय्या प्रतिपद्यत इत्यर्थः। अन्ये तु 'गर्भाशयमनुप्रतिपद्यते' इत्यग्रे दर्शनात् योनिरत्रान्तर्भगम् न तु गर्भाशय इति व्याख्यानयन्ति, अभ्युपगच्छन्ति च योनावेव शुक्रशोणितसंसर्गम्। तदपरे न सहन्ते, अन्तर्गर्भाशयगतस्य शुक्रशोणितसंसर्गस्यैव गर्भकारणत्वात्। यथाह चक्रपाणिः (६७ पृष्ठे एकाङ्कितसन्दर्भस्य व्याख्यानकाले)—अन्तरित्यनेन गर्भाशयबाह्यगत संसर्गमकारणं गर्भस्य निषेधयतीति । भावमिश्रोऽप्याह—"तत्संसृत्य व्यात्तमुखं याति गर्भाशयं प्रति । तत्र शुक्रवदायातेनार्त्तवेन युतं

वक्ता यः कोऽसावित्येवमादिभिः पर्यायवाचकैर्नामभिरभिधीयते, दैवसङ्गा-द्क्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहाऽन्वक्षं सत्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्यमाणो गर्भाशयमनुप्रविश्याऽवतिष्ठते ।

—सु० शा० ३ ।

(५) गते पुराणे रजसि नवेऽवस्थिते शुद्धे गर्भस्याशये मार्गे च बीजात्मना शुक्लमविकृतमविकृतेन वायुना प्रेरितमन्यैश्च महाभूतैरनुगत-मार्त्तवेनाभिमूर्च्छितमन्वक्षमेव रागादिक्लेशवशानुवर्त्तिना स्वकर्मचोदितेन मनोजवेन जीवेनाऽभिसंसृष्टं गर्भाशयमुपयाति ।

—सङ्ग्रहशा० २ ।

(६) शुद्धे शुक्रार्त्तवे सत्त्वः स्वकर्मक्लेशचोदितः ।
गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥

---

भवेत् ॥" इति । गर्भाशयमनुप्रतिपद्यते' इत्यस्य पौनरुक्त्यं तु 'अनुर्भागेऽर्थे' इति कृत्वा ससृष्ट शुक्रार्त्तवं गर्भाशयस्यांशविशेषं ( वपनस्थलमिति यावत् ) प्रपद्यते प्राप्नोतीति निर्वचनेन परिहरणीयम् । यः कोऽसाविति—'यः कः' इति सर्वनामपदद्वयं तस्य दुर्बोधत्वज्ञापनार्थम् । असाविति सर्वनामपदं तस्य सर्वगतत्वं सद्गुरूपदिष्टत्वं च ज्ञापयति । दैवसङ्गात् = दैवस्य प्राक्तनजन्म-कर्मणो धर्माधर्माभिधानस्य सम्बन्धात् । भूतात्मना = भौतिकशरीरेण सूक्ष्मेण लिङ्गशरीरेणेत्यर्थः । वायुना = मनोजवेन । (५) अन्यैश्च महाभूतैरिति = अन्यैश्च सूक्ष्मस्वरूपैर्मनःसहचारिभिस्तन्मात्राख्यैर्महाभूतैरिति ।

(६) सत्वः = जीवः । कर्माणि = पूर्वजन्मार्जितानि शुभाशुभानि क्लेशाः = अविद्यास्मितारागद्वेषाभिनिवेशाः । तत्र, अतथावस्तुनि तथेतिख्या-तिरविद्या; शरीराद्व्यतिरिक्त आत्मा नास्तीत्येवं प्रत्यय अस्मिता, आत्मनो बुद्धेश्चाभेदग्रहो वाऽस्मिता; सुखानुशायी रागः, अनुभूतसुखस्य तत्स्मृत्या तत्कारणप्राप्तौ गृद्धी राग इति वा; दुःखानुशायी द्वेषः, अनुभूतदुःखस्य तद्ग्र थनेषु तात्कालिकी जिघांसा वा द्वेषः; अभिनिवेशो मोहः । गर्भः सम्पद्यते =

तेजो यथाऽर्करश्मीनां स्फटिकेन तिरस्कृतम् ।
नेन्धनं दृश्यते गच्छत् सत्वो गर्भाशयन्तथा ॥

—वा० शा० १ ।

( ७ ) जीवस्तु खलु भो सर्वगतत्वादीश्वरगुणसमन्वितः पूर्वशरीराच्चाव-क्रामति परशरीरं चोपक्रामति युगपत्, न कदाचिदपि बीजशोणितवाय्वा-काशादिमनोबुद्धिभिर्वियुक्तपूर्वः, सर्वगतत्वाच्च न कस्याञ्चिद् योनौ नोपपद्यते स्वकर्मफलानुभावादिति ।

—गर्भावक्रान्तिशारीरे कश्यपः ।

एतेन शुक्रार्त्तवयोः शुद्धिः ( स्वाभाविकी औपाधिकी वा ), ऋतुका-लाऽभिगमनम्, स्त्रीपुरुषयोरपत्योत्पत्तिहेतुकर्मपरिणामादपत्यस्य जन्मग्रह-णहेतुकर्मपरिणामाच्च जीवावक्रमणमिति गर्भनिदानसम्पदोऽपि व्याख्याता भवन्ति । भवन्ति चात्र—

( १ ) ध्रुवं चतुर्णां सान्निध्याद्गर्भः स्याद्विधिपूर्वकः ।
ऋतुक्षेत्राम्बुबीजानां सामग्र्यादङ्कुरो यथा ॥

—सु० शा० २ ।

( २ ) यथोक्तेन विधिनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोस्तु मिश्रीभाव-मापन्नयोः शुक्रं शोणितेन सह समेत्याव्यापन्नमव्यापन्नेन योनावनुपहता-यामप्रदुष्टे गर्भाशये गर्भमभिनिर्वर्त्तयत्येकान्तेन । यथा निर्मले वाससि सुपरिकल्पिते रञ्जनं समुदितगुणमुपनिपातादेव रागमभिनिर्वर्त्तयति, तद्वत् । यथा वा क्षीरं दध्नाऽभिपुतमभिपवनाद्विहाय स्वभावमापद्यते दधिभावं, शुक्रं तद्वत् ।　　　　　　—च० शा० ८ ।

---

शुक्रार्त्तवेऽधिष्ठानभूते गर्भत्वेन परिणमति । युक्तिवशात्—सकलसामग्रीसद्भावा-दिति भावः । अथ च न केवल दृश्यत्वादृश्यत्वाभ्यां वस्तुसद्भावासद्भावौ व्यवस्थाप्येते, किन्तर्हि तत्कार्याऽन्यथानुपपत्त्याऽपि वस्तुसद्भावो व्यवस्थाप्यत एवेति तात्पर्यम् ।

## अथ लिङ्गभेदहेतुः।

तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री, साम्यादुभयोर्नपुंसकम्, युग्मायुग्मदिनेषु च स्वभावत एव शुक्रार्त्तवयोर्बाहुल्याल्पीभावौ, एकादशी-त्रयोदश्योश्च साम्यमित्यस्ति सर्वजनविश्रुतो राद्धान्त आयुर्वेदस्य। योन्या भागविशेषे पतितं शुक्रम्, रतिकाले शुक्रार्त्तवयोः पूर्वापरविसर्गश्चापि हेतुत्वेन प्रोक्तः। बाहुल्याल्पीभावौ च गर्भबीजयोः संसर्जनकाले तन्नि-ष्ठवीर्यशक्त्या ज्ञेयौ नतु राशिना। वचनानि चात्र—

(१) कार्याणाञ्च कारणानुविधायित्वात् तत्सभागतां प्रतिपद्यते। तत एव च शुक्रस्य बाहुल्यात् पुमानार्त्तवस्य बाहुल्यात्स्त्री तयोः साम्येन नपुंसकम्।

—सङ्ग्रहशा० २।

(२) तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री, साम्यादुभ-योर्नपुंसकमिति। (सु० शा० ३)

(३) रक्तेन कन्यामधिकेन पुत्रं, शुक्रेण .....। बीजात् समांशादु-पतप्तबीजात् स्त्रीपुंसलिङ्गी......। (च० शा० २)

(४) कारणानुविधायित्वात् कार्याणां तत्सभागता।
नानायोन्याकृतीः सत्वो धत्तेऽतो द्रुतलौहवत्॥

---

(१) कार्यं हि कारणस्य स्वरूपमनुगच्छति, तथा च तिलेभ्यस्तिला एव जायन्ते न माषाः। अत एव च कारणानुविधायित्वादेव पुंस्कारणस्य शुक्रस्य बाहुल्यात् पुमान् जायत इतीन्दुः।

(२) यथा हि बीजमनुपतप्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्वा व्रीहित्वं यवो वा यवत्वं तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागमनुविधीयत इति डल्हणः।

(४) शुक्रस्य बाहुल्याद् बहुत्वात् सामर्थ्यलभ्यत्वाच्च। पुंरेतो हि बल-वदल्पं स्त्रीरजोऽभिभूय पुङ्गर्भस्य कारणतां यातीत्यरुणदत्तः।

अत एव च शुक्रस्य बाहुल्याज्जायते पुमान् ।
रक्तस्य स्त्री तयोः साम्ये क्लीबः........... ॥

—वा० शा० १ ।

(५) युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला ।
पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत् ॥

—सु० शा० ३ ।

तत्र युग्मासु रात्रिष्वल्पीभवत्यार्त्तवमयुग्मास्वाप्यायते ।
तस्मात्तासु क्रमात् पुत्रस्य दुहितुश्च जन्म ॥

—सङ्ग्रहशा० १ ।

युग्मेषु तु दिनेष्वासां भवत्यल्पतरं रजः ।
संयोगं तत्र या गच्छेत् सा पुमांसं प्रसूयते ॥
अयुग्मेषु दिनेष्वासां भवेद् बहुतरं रजः ।
संयोगं तत्र या गच्छेत् सा तु कन्यां प्रसूयते ॥

—विदेहः ।

अथ व्यवस्थितेऽप्येवं युग्मायुग्मदिवसकृतः कालप्रभावोऽपि नोपेक्ष्यो भवति, तत्प्रभावदर्शनात् । यदुच्यते—

"यदि त्वाहारानुरोधादयुग्मासु शुक्रस्याधिकता युग्मासु च न्यूनता स्यात्, ततः पुमान् स्त्र्याकृतिर्दुर्बलो हीनाङ्गो वा जायते, स्त्री च पुरुषाकृतिर्दुर्बला हीनाङ्गा वा । एकादशीत्रयोदश्योस्तु नपुंसकम्"

—सङ्ग्रहशा० १ ।

(६) मनोभवागारमुखेऽबलानां तिस्रो भवन्ति प्रमदाजनानाम् ।
समीरणा चान्द्रमसी च गौरी विशेषमासामुपवर्णयामि ॥
प्रधानभूता मदनातपत्रे समीरणा नाम विशेषनाड़ी ।
तस्या मुखे यत्पतितं तु वीर्यं तन्निष्फलं स्यादिति चन्द्रमौलिः ॥

या चापरा चान्द्रमसी च नाड़ी कन्दर्पगेहे भवति प्रधाना ।
सा सुन्दरी योषितमेव सूते साध्या भवेदल्परतोत्सवेषु ॥
गौरीति नाड़ी यदुपस्थगर्भे प्रधानभूता भवति स्वभावात् ।
पुत्रं प्रसूते बहुधाङ्गना सा कष्टोपभोग्या सुरतोपविष्टा ॥

—भावमिश्रः ।

( ७ ) स्त्रीपुंसयोः सुरयोगे यद्यादौ विसृजेत् पुमान् ।
शुक्रं ततः पुमान् वीरो जायते बलवान् दृढः ॥
अथ चेद्वनिता पूर्वं विसृजेद्रक्तपूर्वकम् ।
ततो रूपान्विता कन्या जायते दृढसंहता ॥

—दारुवाही ( अरुणोद्धृतः ) ।

नव्यास्तु पुनराहुः—

( क ) 'ज्ञ'तन्तुमद्धि पुम्बीज स्त्रीबीजेन संयुक्तं सत् पुत्रं जनयति, कन्याञ्च 'त्व' तन्तुमत् । तथा च शुक्रबाहुल्यं नाम गर्भबीजयोः संसर्गकाले स्त्रीबीजस्य 'ज्ञ'तन्तुमता शुक्रकोटेन योगः । 'त्व'तन्तुमता योगे त्वार्त्तवस्यैव बाहुल्यम्, स्त्रीबीजानां नियमेन 'त्व'तन्तुमत्त्वादित्येके ।

( ख ) अन्ये तु पुनः स्त्रीबीजस्यैव लिङ्गजनकत्वं सङ्गिरन्ते । तत्र दक्षिणबीजग्रन्थिनिर्गतानि स्त्रीबीजानि पुस्त्वकराणि, वामबीजग्रन्थिभवानि तु स्त्रीत्वकराणि । अथ च यदुच्यते चरकशारीरद्वितीये—

सव्याङ्गचेष्टा पुरुषार्थिनी स्त्री स्त्रीस्वप्नपानाशनशीलचेष्टा ।
सव्यात्तगर्भा न च वृत्तगर्भा सव्यप्रदुग्धा स्त्रियमेव सूते ॥
पुत्रं त्वतो लिङ्गविपर्ययेण······ ······················इति ।

तत्र 'सव्यात्तगर्भा' ( सव्येन पार्श्वेन आत्तो गृहीतो गर्भो यया सा ) इति पदम् एतदभिप्रायपरकमेव किमु !

( ग ) अपरे त्वाचक्षते कालविशेषसमागमे लिङ्गविशेष इति । तत्राद्यनवदिनेषु पुत्रम्, ततो दशादिचतुर्दशान्तदिवसेषु कन्याऽथवा पुत्रम्,

पञ्चदशादित्रयोविंशत्यन्तदिवसेषु कन्या. अतः परं गर्भधारणे तु पुनः पुत्रमेव ।

( घ ) इतरे त्वाहुः—द्विविधा हि शुक्रकीटाणवः, सबला निर्बलाश्च । तत्र सबलानामेव पुत्रोत्पादकत्वम् । अत एव च पुत्रकामेन योनिमुख एव शुक्रपातो विधेयो न तु गर्भाशयमुखमिति तदनुयायिनो भाषन्ते । तथा सति प्रायेण प्रबला एव शुक्रकीटाणवो विदूरं विघ्नबहुलं च योनि-गर्भाशयमार्गं प्रक्रम्य स्त्रीबीजेन सह संसर्जने समर्था भवन्ति । नाऽयं वादो भावमिश्रोक्तनाडीविचारेण सह संवदति ।

---

# द्वितीयोऽध्यायः ।

## अथातो गर्भोपादानविज्ञानीयमध्यायं व्याख्यास्यामः ।

### यद्विकारश्च गर्भो, यतश्च गर्भः सम्भवति ।

गर्भस्तु खलु पञ्चमहाभूतशरीरिसमवायः, आत्मप्रकृतिविकारसम्मूर्च्छितः, त्रिधातुको वा चेतनाविष्टः, मात्रादिषड्भावसमुदायसम्भवो वा निगद्यतेऽनया दिशा । तद्यथा—

पञ्चमहाभूतशरीरिसमवायो गर्भः—शुक्रं पाञ्चभौतिकम्, शोणितञ्च । जीवश्चापि लिङ्गशरीरोपलक्षितः सत्त्वसम्प्रयुक्तोऽतिसूक्ष्मैस्तन्मात्राख्यभूतैः सह शुक्रशोणितसंसर्गमवक्रामति । वर्धते च गर्भो मातुराहाररसेन पाञ्चभौतिकेनैव । एवञ्च चतुर्धा भूतसंसर्गो गर्भशरीरे दृष्टः—शुक्रजः, शोणितजः, आत्मजः, रसजश्चेति । तत्रायं विशेषः—विभु निष्क्रियञ्चाकाशं देहान्तरानुगमने न परिगण्यते सर्वत्रोपलब्धेरतस्तदेकविधम्, शेषाणि पुनश्चत्वारि विकारभावात् सक्रियाणि देहान्तरानुगमने परिगण्यमानानि शुक्रजादिभेदेन षोडशविधानि चतुर्विधानि वा भवन्ति समूह्य संख्यानात् विभागशः संख्यानाच्च । तत्र भूमिरुपादानम्, इतरभूतानि तूपष्टम्भकानि । वैशेषिकी चेयं दिक् । तथा च षड्धात्वात्मको गर्भ इति सिद्धम् । षष्ठो धातुश्चात्मा समनस्क इहाभिप्रेतः ।

### भवन्ति चात्र—

( १ ) अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते ।

—सु० सू० १ ।

( २ ) गर्भस्तु खलु अन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः । एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधिष्ठानभूतः, स ह्यस्य षष्ठो धातुरुक्तः । —च० शा० ४ ।

( ३ ) खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः ।

—च० शा० १ ।

( ४ ) रसात्ममातापितृसम्भवानि भूतानि विद्याद्दश षट् च देहे ।
आप्यायते शुक्रमसृक्च भूतैर्यैस्तानि भूतानि रसोद्भवानि ॥
चत्वारि तत्रात्मनि संश्रितानि स्थितस्तथात्मा च चतुर्षु तेषु ।
भूतानि मातापितृसम्भवानि रजश्च शुक्रञ्च वदन्ति गर्भे ॥
भूतानि चत्वारि तु कर्मजानि यान्यात्मलीनानि विशन्ति गर्भम् ।
सबीजधर्मा ह्यपरापराणि देहान्तराण्यात्मनि याति याति ॥
भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात् ।
कर्मात्मकत्वान्नतु तस्य दृश्यं दिव्यं विना दर्शनमस्ति रूपम् ॥
स सर्वगः सर्वशरीरभृच्च स विश्वकर्मा स च विश्वरूपः ।
स चेतनाधातुरतीन्द्रियश्च स नित्ययुक् सानुशयः स एव ॥
अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तरूपः ।
न कर्मणा नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः ॥
रजस्तमोभ्यां हि मनोऽनुबद्धं ज्ञानाद्विना तत्र हि सर्वदोषाः ।
गतिप्रवृत्त्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म ॥

—च० शा० २ ।

( ५ ) बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात् कुक्षौ विवर्धते ॥

—वा० शा० १ ।

( ६ ) महागुणमयेभ्यश्च खपवनतेजोजलभूम्याख्येभ्यो महाभूतेभ्यश्चेतनाधिष्ठितेभ्योऽभिनिर्वृत्तिरङ्गस्य । भूतानामेव च दृष्टादृष्टविविधकर्मवशादनेकरूपात् सन्निवेशविशेषादाकृतिप्रमाणस्नेहदीप्तिस्वरादीनां सारूप्यमसारूप्यं वा सूक्ष्मस्थूलतारतम्यभेदभिन्नमतिबहुप्रकारं निष्पद्यते ।

—सङ्ग्रहशा० ५ ।

( ९ ) रूपाद्धि रूपप्रभवः प्रसिद्धः कर्मात्मकानां मनसो मनस्तः।
भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमस्तत्र च कर्म हेतुः॥
—च० शा० २।

## षड्धातुजानि त्वस्य :—

आन्तरिक्षास्तु—शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता च ( सु० ) तत्रास्याकाशात्मकम्, शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च ( च० )

वायव्यास्तु—स्पर्शः स्पर्शेन्द्रियं सर्वचेष्टासमूहः सर्वशरीरस्पन्दनं लघुता च ( सु० ) वाय्वात्मकम्, स्पर्शः स्पर्शनं रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्यः। ( च० )

तैजसास्तु—रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्ष-स्तैक्ष्ण्यं शौर्यञ्च। ( सु० ) अग्न्यात्मकम्, रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यञ्च ( च० )। पित्तं मेधा चेति संग्रहे-ऽधिकम्।

आप्यास्तु—रसो रसनेन्द्रियं सर्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च ( सु० )। अबात्मकम्, रसो रसनं शैत्यं मार्दवः स्नेहः क्लेदश्च ( च० ) श्लेष्मा च मेदश्च रक्तं च मांसं चेति वृद्धजीवकीयेऽधिकम्।

पार्थिवास्तु—गन्धो गन्धेन्द्रियं सर्वमूर्त्तसमूहो गुरुता चेति ( सु० )। पृथिव्यात्मकम्, गन्धो घ्राणं गौरवं स्थैर्यं मूर्तिश्च ( च० ) धैर्यमिति सङ्ग्रहेऽधिकम्।

चेतना: ( ससनस्कात्मजाः )—तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिमनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः। सात्त्विकास्तु—आनृशंस्यं संविभागरुचिता तितिक्षा सत्यं धर्म आस्तिक्यं ज्ञानम्

बुद्धिर्मेधा स्मृतिर्धृतिरनभिषङ्गश्च ( सु० ) शौचम् कृतज्ञता दाक्षिण्यं व्यवसायः शौर्यं गाम्भीर्यं शुक्लवत्सरुचिः भक्तिस्त-मोगुणवैपरीत्यञ्चेति सङ्ग्रहेऽधिकम् । राजसास्तु—दुःखबहु-लताऽटनशीलताऽधृतिरहङ्कार आनृतिकत्वमकारुण्यं दम्भो मानो हर्षः कामो क्रोधश्च ( सु० ) दुरुपचारताऽनार्यं शौर्यं मात्सर्य-ममितभाषित्वं लोलुपत्वञ्चेति सङ्ग्रहेऽधिकम । तामसास्तु विषादित्वं नास्तिक्यमधर्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्मेधस्त्व-मकर्मशीलता निद्रालुत्वञ्चेति (सु०) । प्रमादः तृष्णा शोको मात्सर्यं विप्रतिपत्तिः परातिसन्धानं सत्त्वगुणवैपरीत्यं चेति सङ्ग्रहेऽधिकम् ।

प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।
इन्द्रियान्तरसञ्चारः प्रेरणं धारणञ्च यत् ॥
देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।
दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥
इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥ (च०)

—सु० शा० १ । च० शा० १, ४ ।

तत्र खात्खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ।
वातात्स्पर्शस्त्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥
आप्या जिह्वा रसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।
चैतन्यं चित्तमक्षाणि नानायोनिषु जन्म च ॥
सात्त्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः ।
राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः ॥
तामसं भयमज्ञानं निद्रालस्यं विषादिता ।
इति भूतमयो देहः.................................. ॥

—वा० शा० ३ ।

**आत्मप्रकृतिविकारसम्मूर्च्छितो गर्भः**—आत्मप्रकृतिविकारसम्मूर्च्छितश्चायं चतुर्विंशतितत्त्वात्मको गर्भो भवति सांख्यदिशा। अत्र पुरुषो नाम पञ्चविंशः सूक्ष्मशरीरोपलक्षितः शुक्रशोणितसंसर्गमवक्रामति। सूक्ष्मशरीरञ्च मनोबुद्ध्यहङ्कारदशेन्द्रियैः समन्वितं तदाधारभूतैः पञ्चतन्मात्राख्यैः सूक्ष्मभूतैश्च समुत्थमिति अष्टादशतत्त्वात्मकम्, एकोनविंशश्च पुरुषः; रसमातृपितृसम्भवत्वेन स्थूलभूतसमवायस्तु पूर्ववत् त्रिधेति चतुर्विंशतिः। मूलप्रकृतिश्चेह विकारग्रहणात् पुरुषोपहिता बोद्धव्या, पुरुषसंसृष्टाया एव तस्याः सर्गे प्रवृत्तेः। तथा च शरीरसर्गेऽन्योन्यसंसृष्टयोस्तयोरन्यःपिण्डवदेकीभावादेकं तत्त्वम्, मोक्षाधिकारे प्रकृतिपुरुषयोः पृथग्ग्रहे तु पञ्चविंशतितत्त्वात्मको देहः। किंवा, प्रकृतिरिह विकारग्रहणात् व्यक्ते परिणता न तदतिरिक्ता भवतीति त्रयोविंशतिः, पुरुषस्तु चतुर्विंशः; तत्सङ्घातश्चायं गर्भश्चतुर्विंशतिक एव। भवति चात्र—

ततश्च धातुभेदेन चतुर्विंशतिकः स्मृतः।
मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी॥

—च० शा० १।

**त्रिधातुको वा चेतनाविष्टो गर्भः**—त्रिधातुको वा चेतनाविष्टो भवति गर्भ आयुर्वेददिशा। वायुः पित्तं कफश्चेति त्रयो धातवः। ते च देहधातारोऽन्योन्यसमवेता गर्भबीजयोः सूक्ष्मबीजात्मनाऽवतिष्ठन्ते। शरीरे वर्धमाने तु त एव परिणमन्तो दोषधात्वादिरूपेण प्रत्यक्षतां यान्तीति। वचनञ्चापि—

वातपित्तश्लेष्माण एव देहसम्भवहेतवः*। तैरेवाव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिदं धार्यते, आगारमिव स्थूणाभिस्तिसृभिः; अतश्च त्रिस्थूणमाहुरेके। —सु० सू० २१।

* एवकारो भिन्नक्रमः, तेन सम्भव एवेत्यर्थः। तेनापरेषामपि शुक्रशोणितजीवानां सम्भवहेतुत्वमविरुद्धम्। तत्र वातादयः शुक्रशोणितगताः प्रकृ-

**मात्रादिषड्भावसमुदायसम्भवो वा गर्भः**—गर्भो हि मात्रादिषड्भावसमुदायात् सम्भवति। माता, पिता, आत्मा, सात्म्यं, रसः, सत्वञ्चेति च षट् भावाः। यदुच्यते—

(१) "मातृतः पितृत आत्मतः सात्म्यतो रसतः सत्वत इत्येतेभ्यो भावेभ्यः समुदितेभ्यो गर्भः सम्भवति"।

—च० शा० ४।

(२) "सर्वेभ्य एभ्यो भावेभ्यः समुदितेभ्यो गर्भोऽभिनिर्वर्त्तते, मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च अस्ति च खलु सत्वमौपपादुकमिति"।

(३) "एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदयादभिनिर्वर्त्तते गर्भो यथा कूटागारं नानाद्रव्यसमुदायाद्यथा वा रथो नानारथाङ्गसमुदायात्। तस्मादेतदवोचाम—मातृजश्चायं गर्भ इत्यादि"।

—च० शा० ३।

तत्र माता पिता पुनरवश्यम्भाविकारणत्वात् गर्भोत्पत्तिहेतू उच्येते, नहि मातरं विना नच पितू ऋते (शुक्रशोणिताभ्यां विनेति तात्पर्यम्) गर्भोत्पत्तिः स्यात्, विशेषतश्च जरायुजानाम्।

एवमात्माऽपि गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जायत इति तस्यापि गर्भोत्पत्तौ हेतुत्वम्। यद्यपि तस्य पुनरात्मनोऽनादि-

---

तिस्थतया गर्भसम्भवहेतवो भवन्ति। एतदेव रजःशुद्धौ शारीरे (शा० अ० २) प्रपञ्चेन वक्ष्यति। तथा "द्वितीये मासे शीतानिलोष्मभिरभिपच्यमानो घनः सञ्जायते" (शा० अ० ३) इति वचनात् कफपित्तानिलाना कारणत्वमुक्तम्। अन्ये तु शुक्रशोणितयोः सौम्याग्नेयत्वात् कफपित्ते वायुश्च संयोजक इति सम्भवहेतुता वदन्ति, तत्र शुक्रशोणितेन कफपित्तग्रहणममुख्यग्रहणत्वान्नाद्रियामहे—इति भानुमत्या चक्रपाणिः।

त्वान्न जन्मोपपत्तिस्तथापि सतो ह्यवस्थान्तरगमनमात्रमेव जन्मेति विवक्षितत्वान्न दोषः।

एवं सात्म्यमपि गर्भोत्पत्तौ हेतुत्वेनोपलभ्यते। नह्यसात्म्यसेवित्वमन्तरा स्त्रीपुरुषयोर्वन्ध्यत्वमस्ति, गर्भेषु वाऽप्यनिष्टो भावः।

रसश्चापि सम्यगुपयुक्तो हेतुर्भवति। नहि रसादृते मातुः प्राणयात्रापि स्यात्, किम्पुनर्गर्भजन्म।

अस्ति च खलु सत्वमपि उपपादुकत्वेन हेतुः, यज्जीवं स्पृक्शरीरेणाभिसम्बध्नातीति दिक्।

## मात्रादिजास्तवस्थ—

( १ ) मातृजानि :—त्वक् च लोहितञ्च मांसञ्च मेदश्च नाभिश्च क्लोम च यकृच्च प्लीहा च बुक्कौ च वस्तिश्च पुरीषाधानञ्चामाशयश्च पक्वाशयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपा च वपावहनञ्चेति मातृजानि ( च० शा० ४ )।

मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि ( सु० शा० ४ )। गर्भाशयेति संग्रहे नामाधिक्यम्।

मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम्। ( वा० शा० ३ )

( २ ) पितृजानि :—केशश्मश्रुनखलोमदन्तास्थिशिरास्नायुधमन्यः शुक्रमिति पितृजानि ( च० )।

केशश्मश्रुलोमास्थिनखदन्तसिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि ( सु० )।

पैतृकं तु स्थिरं शुक्रं धमन्यस्थिकचादिकम्। ( वा० )

( ३ ) आत्मजानि :—तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृतिस्वरवर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेत्यात्मजानि ( च० )। इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि ( सु० )।

कामक्रोधलोभभयहर्षधर्माधर्मशीलतेति सङ्ग्रहे चरकादधिकम्।

( ४ ) आरोग्यमनालस्यमलोलुपत्वमिन्द्रियप्रसादः स्वरवर्णबीजसम्पत् प्रहर्षभूयस्त्वञ्चेति सात्म्यजानि ( च० )।

वीर्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि ( सु० )। आयुरोज इति सङ्ग्रहेऽधिकम्।

सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभाबलम्। ( वा० )

( ५ ) शरीरस्याभिनिर्वृत्तिरभिवृद्धिः प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति रसजानि ( च० )।

शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि ( सु० )।

रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता। ( वा० )

( ६ ) भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्यं शौर्यं भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितत्वमित्येवमादयश्चान्ये ते सत्त्वजा विकारा यानुत्तरकाले ( शारीरचतुर्थे ) सत्त्वभेदमधिकृत्योपदेक्ष्याम इति सत्त्वजानि ( च० शा० ३ )।

इत्येवं गर्भस्य मात्रादिजा भावाः सम्यग् व्याख्याताः।

न चैतेषां पक्षाणां विरोधोऽस्ति। मातृजादिव्यपदेशोऽपि पञ्चमहाभूतविकारत्वमविरुद्धमेव। यथोच्यते स्वयमाचार्येण—"तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्वमुक्ता यथावत्, महाभूतविकारप्रविभागेन त्विदानीमस्य तांश्चैवाङ्गानवयवान् कांश्चित् पर्यायान्तरेणापरांश्चानुव्याख्यास्यामः। मातृजादयोऽप्यस्य महाभूतविकाराः। तत्रास्याकाशात्मकम्.............." इत्यादि। ( च० शा० ४ )

एवं त्रिधातुकत्वेऽपि न विरोधः। तत्र वायुः खवाय्वोः प्रतिनिधिः, पित्तं तेजसः, बलासश्च वारिभुवोरिति। किंवा वातादिदोषाणामपि पाञ्चभौतिकत्वेन न दोषः। वचनमपि—"वायुरात्मनैवात्मा, पित्तमाग्नेयं, श्लेष्मा सोम्य इति"—सु० सू० ४२।

चतुर्विंशतिकत्वेऽपि न विप्रतिपत्तिः । तत्रात्मनि बुद्ध्यहङ्कारमनसां, पाञ्चभौतिके शरीरे च भूतेन्द्रियार्थानामवरोधः ।

**यस्मात्तु समुदयप्रभवः सन् स गर्भो मनुष्यविग्रहेण जायते, मनुष्यो मनुष्यविग्रह इत्युच्यते, तद्वक्ष्यामः—**

तत्र जरायुजानामण्डजानां प्राणिनामेते यां यां गर्भकरा भावा योनिमापद्यन्ते, तस्यां तस्यां योनौ तथातथारूपा भवन्ति । तद्यथा—कनकरजतताम्रत्रपुसीसकान्यासिच्यमानानि तेषु तेषु मधूच्छिष्टविग्रहेषु । ते यदा मनुष्यबिम्बमापद्यन्ते तदा मनुष्यविग्रहेषु जायन्ते । तस्मात् समुदायात्मकः सन् गर्भो मनुष्यविग्रहेण जायते, मनुष्यश्च मनुष्यप्रभव उच्यते तद्योनित्वात् ।

यच्चोक्तम्—यदि च मनुष्यो मनुष्यप्रभवः, कस्मान्न जडादिभ्यो जाताः पितृसदृशरूपा भवन्तीति, तत्रोच्यते—यस्य यस्यावयवस्य बीजे बीजभाग उपतप्तो भवति, तस्य तस्यावयवस्य विकृतिरुपजायते, नोपजायते चानुपतापात् । तस्मादुभयोपपत्तिरप्यत्र । सर्वस्य चात्मजानीन्द्रियाणि, तेषां भावाभावहेतुर्दैवम् । तस्मान्नैकान्ततो जडादिभ्यो जाताः पितृसदृशरूपा भवन्ति ॥

—च० शा० ३ ।

कश्यपोऽप्याह—जातौ जातौ खलु स्वभाव एवाकृतिभेदनिर्वर्त्तयिता भवति । स्वभावतो ह्यस्य वायुपरमाणवः संयोगविभागचेष्टाधिकारा आकुञ्चनप्रसारणकोष्ठाङ्गप्रत्यङ्गधातुचेतनास्रोतांसि विभजन्ति । समत्यके धातुरिव निषिक्तः पुरुषः पुरुषमभिनिर्वर्त्तयति गौर्गामश्वोऽश्वमेवमादि ।

—जातिसूत्रीयशारीरे ।

---

# तृतीयोऽध्यायः ।

## अथातोऽपरादिविज्ञानीयमध्यायं व्याख्यास्यामः ।

### अपरा, अमरा, आविला वा ।

अपरा नाम सञ्चरस्थानं मातृशोणितस्य, यतो हि गर्भो गर्भनाभिनालमुखेन पोषणादिमधिगच्छति । गर्भजा चेयमपरा मातृजा च । तत्रास्या गर्भभागः सकोरकबहिर्जरायुणा कोरकान्तरालैश्च मातृशोणितावकाशभूतैर्निष्पद्यते, मातृभागस्तु गर्भधरकलया तलदैशिक्या । एवञ्च, अपरानिर्वृत्तिविज्ञानाय कोरकाणां कोरकान्तरालानां च शोणितावकाशरूपाणां निर्माणविज्ञानं नूनमपेक्ष्यम् ।

तत्र खलु बद्बुदावस्थापन्नस्यैव संसृष्टस्त्रीबीजस्य गर्भाण्डापरपर्यायस्य पोषकस्तरात् समन्ततोऽङ्कुराणीव कोरका नाम लब्धगर्भाणि प्रवर्द्धनानि समुद्भवन्ति । पोषकस्तरस्य स्तरिकाद्वयपरिणामनात् कोरकाणां शरीरमादौ पोषकस्तरिकाद्वयमयम् । परतश्च पोपकस्तरान्तरात्रणत्वेन परिणमतो मध्यस्तरस्य प्रगमा अपि कोरकान्तः प्रविशन्ति 'कोरकसार'भूताः । मध्यस्तरं चास्मिन् संयोजकधातुरूपेण परिवर्त्तिते कालेन रक्तप्रणालिका आविर्भवन्ति गर्भवृन्तवाहिनीभिरनुवृत्ताः । तथा च पूर्णतां निर्वृत्तस्य बहिर्जरायुकोरकस्य अङ्गविभागः क्रमेणेत्थं फलितः—

| | |
|---|---|
| कोरकः । | स्तरिकाद्वयमयः पोषकस्तरः ( बहिःस्तरः ) । |
| | संयोजकधातुरूपः कोरकसारः ( मध्यस्तरः ) । |
| | रक्तप्रणालिकाश्च वृन्तवाहिनीभिरनुगताः ॥ |

---

अपरा Placenta. गर्भभागः Foetal part मातृभागः Maternal part. कोरकाः Chorionic Villi. कोरकसारः Core.

कोरकाश्चैते प्रारम्भत एव तर्षणस्वभावबलेन मातृधातूपस्नेहात् पोषक-पदार्थानाददाना गर्भपुष्टिकरा भवन्ति। वपनगर्तेऽपि च बालगर्भाण्डम् एभिरेव कोरकैस्तरुरिव शाखास्वनेकधा विभज्यमानैर्गर्भधरकलायां निविष्ट-पदं, गर्त्तस्थमातृरुधिरात् रुधिररसाद्वा पोषणाहारमाददानमवतिष्ठते।

एवञ्च मासेन गर्भाण्डस्य समग्रतलदेशः कोरकाञ्चितो रोमश इव लक्ष्यमाणः कोरकैरेभिः कौषिक्यां तलदैशिक्यां च गर्भधरकलायामभितः

[ २९ चित्रम् ]

द्वैमासिकं गर्भाण्डम्।



अत्र बहिर्जरायोर्विकोरकः सकोरकश्च स्थलभागो निदर्शितः।

प्रतिबद्धा दृष्टः। अतः परं तु गर्भाण्डवृद्ध्या यथा यथा कौषिकी कला प्रपाट्यते तथा तथा तदभिमुखाः कोरका अप्यवशीर्यमाणा विलुप्यन्ति। तथा च बहिर्जरायोर्द्विविधः स्थलभागः फलितो विकोरकः सकोरकश्चेति। तत्र कौषिककलाऽभिमुखो भागो विकोरकः, तलदैशिककलाभिमुखो भागश्च सकोरकः। सकोरके च जरायौ विवर्धमानाः कोरकाः पार्श्वयोर्नैकासु शाखासु प्रविभज्य विसंख्यायन्ते गहनीभवन्ति च।

---

तर्षणम् Osmosis. विकोरको बहिर्जरायुः Chorion Laeve or Smooth Chorion. सकोरको बहिर्जरायुः Chorion Frondosum or Shaggy Chorion.

कोरकाश्चामी रक्तप्रणालीगर्भाः शोणितावकाशेषु मन्दं मन्दं सञ्चरति मातृरुधिरेऽवगाहन्ते गर्भरक्तवहाः । एवञ्च गर्भरुधिरमातृरुधिरयोस्तनु-कोरकप्राचीरेण व्यवहितयोरपि भावानामादानप्रदाने सामर्थ्यम् । कतिचि-त्त्वेषां तत्तद्दैशिक्यां गर्भधरकलायां सम्यक् प्रतिबद्धा गर्भस्य स्थैर्यमप्या-वहन्ति । शेषास्तु प्रायेण मातृरुधिरे स्वातन्त्र्येण प्लवमानाः पोषणकर्माणि एव । तथा च 'गर्भपुष्टिकरा' 'गर्भस्थैर्यकरा'श्चेति द्वैविध्यं कोरकाणां भण्यते कार्यदिशा ।

कोरकान्तरालाश्च यथा शोणितावकाशेषु परिणमन्ति तदनुव्याख्या-स्यामः—तत्तद्दैशिकया हि गर्भधरकलया सम्पर्कमागताः कोरका गभीर-पोषकस्तरिकाकोषाणूनां संख्याविवर्धनात् वर्धमानकायमाना गर्भधरकलां निर्भिद्य सम्यक् प्रतिबध्यन्ते । कोरकान्तरालपतितः कलानिविडस्तरस्तु पोषकस्तरयोगविलाय्यमानो विलुप्यतेऽन्यत्र गभीरभागात् प्रतिकुर्वतः संहृत्य स्थितात् । मूलपञ्जिकेति च तत्संज्ञानम् । उत्तानपोषकस्तरिका च कोरकशरीरादभिनिष्पत्य मूलपत्रिकोपरि प्रतता कोरकेतरस्य समानस्त-रिकयाऽनुबध्यते । इत्थञ्च तत्कोरकद्वयान्तराल उत्तानपोषकस्तरिकावृतिकं शोणितावकाशे परिणतः । एवमन्यत्रापि । तथा च बहिर्जरायोर्गर्भधरकला-यास्तत्तद्दैशिक्याश्च मध्यपतितोऽन्तरालः कोरकावच्छिन्नोऽनेकेषु कोरकान्त-रालेषु मिथः सानुबन्धेषु शोणितावकाशेषु च परिवर्त्तते ।

शोणितावकाशाश्चैते आदौ लघुरूपाः पोषकस्तरस्य धातुविलायक-कर्मणा कलाकेशिकानां मुखविवरणात् मातृरुधिरेण पूर्यन्ते रिच्यन्ते च । परतस्तु महावकाशेषु तेषु धातुविलयनात् विवृतमुखाभिर्गर्भाशयधमनीभि-रानीयमानं मातृशोणितं प्रविशति निर्गच्छति च तेभ्यो बहिर्गर्भाशयसि-

---

गर्भपुष्टिकराः Nutritve or terminal. गर्भस्थैर्यकराः Fastening or Anchoring. कोरकान्तरालः Intervillous Space. शोणितावकाशः Blood spce. मूलपत्रिका Basal plate.

राभिः प्रतिनीयमानम्। न चैषु रक्तं प्रवहमानं स्त्यायति। अनुगर्भाशयाश्चेमा रक्तप्रणालिकाः शुषिरकलास्तरं मूलपत्रिकां च निर्भिद्य शोणितावकाशेषु प्रविशन्ति निर्गच्छन्ति वा ततः। मूलपत्रिकां भिन्दन्तीनां चासां पैशिकवृतिनाशात् रक्तकुल्यासु परिणतिः।

[ ३० चित्रम् ]

अपराच्छेदः।



१—कोरकः। २—अनुगर्भाशया रक्तप्रणालिकाः। ३—मूलपत्रिका। ४—शुषिरकलास्तरः। ५—अपरास्तम्भिका। ६—नाभिनालम्। ७—नाभिसिरा। ८—नाभिधमन्यौ। ९—कोरकान्तरालस्य पोषकस्तरवृतिः। १०—अन्तर्जरायुः। ११—बहिर्जरायुः।

अथ च मूलपत्रिकातो बहिर्जरायुं प्रति प्रस्थिताः केचन स्तम्भिकाकारा अवयवाः प्रलम्बन्ते अपरास्तम्भिकासंज्ञाः, ये पुनः शोणितावकाश-

अपरास्तम्भिका Placental septum.

कान्तारम् अनेकासु पिण्डिकासु विभाजयन्ति । परिधिपरिगतस्य शोणितावकाशस्य तु गर्भाशयसिरानुबद्धस्य चक्रकुल्येति विशेषसंज्ञानम् ।

तथा च प्रारम्भे परितो गर्भाण्डमारब्धनिर्माणोपक्रमाऽप्यपराऽनन्तरम् एकदेशे नियम्य निर्मीयत इति सिद्धम् । नियमनञ्चैतत् सार्धमासेन चाक्षुषविषयोभवन् तृतीयमासेन पूर्णं भवति । अधिकुरुते च पूर्णतो निर्वृत्ताऽपरा चतुर्भागैकांशं त्रिभागैकदेशं वा गर्भाशयस्य । प्रायशश्च गर्भाशयस्कन्धे तत्सन्निधौ पूर्वे पश्चिमे वा गर्भाशयप्राचीरेऽपरासंस्थितिर्दृष्टा ।

गर्भधरकला च अपरापरिधौ बहिर्जरायोरधस्तात् स्तोकेन प्रविष्टा अपरासन्धारणाय तत्प्रसरनिरोधाय चापि प्रभवति । अपरा चेयं प्रसवकाले तलदैशिक्या गर्भधरकलायाः शुषिरस्तरात् वियुज्यमाना सच्छिद्रचिटिकापत्राच्चिटिकेव सुखेन पृथग्भवति ।

स्वरूपतस्तु प्रगल्भाऽपरा शरावाकृतिः, प्राङ्गुलमध्यवेधा, षडादिनवान्तप्राङ्गुलव्यासा, तनुतरप्रान्ता ( मध्यप्रान्तयोः समानस्थूला वा कदाचित् ), प्रायेण मध्यलग्ननाभिनाला, षड्भागैकगर्भभारा च ( चत्वारिंशतः षष्टिं यावत् तोलकभारा ) भवति । कायमानभारौ च तस्याः प्रायेण गर्भकायमानभारावनुवर्त्तेते । तत्रास्या अधस्तलं नतोदरम् अन्तर्जरायुवृतत्वात् श्लक्ष्णञ्च । भासन्ते चात्र सर्वत्र प्रततानि गर्भनाभिनाड्याः प्रतानजालानि । ऊर्ध्वतलं पुनर्नैकपिण्डिकासु संविभक्तं विषमं भवति खरशुषिरस्पर्शं कृष्णरक्तवर्णञ्च । दृश्यन्ते चात्र पिण्डिकानां परस्परं विभजन्यो नातिस्फुटाः सीतिकाः । अपराया अनुलम्बच्छेदे तु अधरोत्तरक्रमेणैतेऽवयवाः कर्त्तिता भवन्ति, तद्यथा—

---

पिण्डिकाः Cotyledons or Lobular projections. चक्रकुल्या Marginal or Circular sinus.

[ ३१ चित्रम् ]

अपराया अधरतलम् ।




क—सान्तर्जरायुदेशः । ख—व्यपगतान्तर्जरायुदेशः ।

(१) अन्तर्जरायुः ।

(२) बहिर्जरायुः ।

(३) कोरककाण्डानि ।

(४) कोरकशाखाः ।

(५) शोणितावकाशः ।

(६) शोणितावकाशवृत्तिः ।

(७) तलदैशिको गर्भधरकला च ।

[ ३२ चित्रम् ]

अपराया उत्तरतलम् ।




क—अन्तर्जरायुः । ख—बहिर्जरायुः । ग—नाभिनालम् ।

कर्मतस्तु अपरा नाम—

श्वासोच्छ्वासकरी[1] स्मृता विनिमयाद्वाय्वोः सुपुष्टोरसा,
ग्राह्याग्राह्यग्रहाग्रहान्निगदिता गर्भस्य सम्पोषिणी[2] ।
रोगव्याप्तिनिरोधिनी[3] मलहरी[4], चान्तारसस्राविणी[5],
ओजोद्रव्यनिचायिनीति[6], च मता षट्कर्मिणी ह्याविला ॥

प्राञ्चस्तु पुनराहुः—

---

१ Respiratory. २ Nutritive. ३ Barrier. ४ Excretory.
५ Internal secretory. ६ Glycogenic.

( क ) गृहीतगर्भाणामार्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद् गृहीतगर्भाणामार्त्तवं न दृश्यते। ततस्तदधः प्रतिहतमूर्ध्वमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते। शेषञ्चोर्ध्वतरमागतं पयोधरावभिप्रतिपद्यते, तस्माद् गर्भिण्यः पीनोन्नतपयोधरा भवन्तीति।

—सु० शा० ४।

( ख ) तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यन्ते गर्भेण। तस्मात्ततः परमार्त्तवं न दृश्यते। ततस्तदधः प्रतिहतमपरमपरञ्चोपचीयमानमपरेत्याहुः। जरायुरित्यन्ये। स्थिते रक्ते रोमराजिः प्रादुर्भवति। जरायुशेषञ्चोर्ध्वमसृक् प्रतिपद्यते। तस्मात् पीनकपोलपयोधरता कृष्णोष्ठचूचुकत्वञ्च। स्तनाश्रयमेव च कफोपरञ्जितं स्तन्यतामुपगतं प्रसूतायाः पुनराहाररसेनाप्यायते।

—सङ्ग्रहशा० २।

## जरायुः।

जरायुस्तावत् कलाविशेषो येन वेष्टिताः प्राणिनो जायन्ते जरायुजाः। यथोक्तं डल्हणेन—'जरायुरुल्बाकारो येन वेष्टिताः प्राणिनो जायन्ते' इति। बहिरन्तर्भेदेन च द्विविधो जरायुः। तत्र बहिर्जरायुर्नाम गर्भाण्डस्य बहिस्तनावरणभूता कला कोरकाणां प्रभवभूमिः, या पुनः पोषकस्तरात् तदन्तरावरणभूतात् मध्यस्तराच्च निष्पद्यते। अमरा चापि बहिर्जरायोः सकोरकभागे निर्वर्त्तमाना तदेकदेशलग्नतया 'जरायु'रिति क्वाचित्कीं संज्ञां लभते। अन्तर्जरायुः पुनस्तदन्तःस्थिता गर्भावरणी कला गर्भोदकाशयस्य गर्भकोषस्यारचयित्री, या नाम कोषकबहिःस्तरात् तद्वेष्टनभूतात् मध्यस्तराच्च निष्पद्यते। कला चैषा नाभिनालम् अपराया अधस्तलं च प्रावृणोति। तत्र नाभिनाले दृढं संसक्तेति विशेषः।

---

जरायुः Foetal membranes, ( गर्भवेष्टनचर्मपुटकं जरायुरित्युदयनः ), बहिर्जरायुः Chorion. अन्तर्जरायुः Amnion.

## गर्भोदकम् ।

गर्भोदकं नाम गर्भकोषे सञ्चयशीलः स्वच्छप्राय ईषदाविलो वा लसीकासमस्तरलविशेषः पीताभो ( गर्भमलयोगे तु हरिताभः ) मृदुक्षार-स्वभावो बहुविधलवणान्वितश्च, यस्यान्तर्गर्भः प्लवते । प्रभवश्चास्य मातृरक्तमित्याहुरेके, मातृरुधिरे हि वर्णवद्द्रव्यविलयनप्रक्षेपेण गर्भोदके तद्वर्णदर्शनात् गर्भमूत्रे च तद्वर्णोऽदर्शनात्, मातुर्वृक्करोगनिमित्तजे शोफे गर्भोदकातिरेकदर्शनाच्च । गर्भरक्तमित्यन्ये, अन्तर्मृते गर्भे गर्भोदकपरिमाणवृद्ध्यदर्शनात् । उभयमपि हेतुः ( प्राधान्येन च मातृरक्तम् ) इत्यपरे, अपरानाभिनालाभ्यां प्रस्नुतस्य रसस्य गर्भत्वग्व्यक्ततः कदाचिदुत्सृष्टस्य द्रवस्यापि च गर्भोदकपरिमाणवृद्धिकरत्वेन दर्शनात् ।

तदिदं परिमाणतो दशादिचत्वारिंशतन्तप्रशुक्तिमितमित्याहुरेके, एकादिसार्धद्वयान्तप्रमाणिकामानमित्यपरे, द्व्यादिचतुरन्तप्रमाणिकामितमिति चान्ये । अर्धप्रमाणिकामानतो हीनं प्रमाणिकात्रयमानादधिकञ्च पुनर्विकृतिरेवेत्यामनन्ति भिषजः । आविंशतिप्रमाणिकामानमपि च दृष्टिपथं गतमिति चित्रमेव । सापेक्षगुरुत्वं तु पुनरस्य द्व्यधिकसहस्रान् पञ्चविंशत्यधिकसहस्रं यावद् दृष्टम्, प्रायेण च दशाधिकसहस्राङ्कम् । लभ्यन्ते चास्मिन् मूत्रद्रव्यं, गर्भलोमानि, उल्बांशाः, गर्भत्वगन्तर्जराय्वोर्निर्मुक्तशल्कानि, कदाचिच्च गर्भमलम् ।

---

गर्भोदकम् Amniotic fluid or Liquor Amnii. बहुविधलवणान्वितश्चेति—It contains salts of potassium, sodium, calcium, magnesium, and ammonium; together with traces of albumin, grape-sugar. urea, cholesterin, mucin, and creatin. प्रशुक्तिः An ounce. प्रमाणिका A pint. मूत्रद्रव्यम् Uria. गर्भलोमानि Lanngo. उल्बांशाः Particles of Verinx Caseosa. गर्भत्वन्तर्जराय्वोर्निर्मुक्तशल्कानि Cast off foetal skin and amniotic epithelium. गर्भमलम् Meconeum.

[ ३३ चित्रम् ]

त्रैमासिकगर्भस्य अपरादिप्रदर्शकं चित्रम्।




१—कौपिकी गर्भधरकला। २—गर्भोदकाशयो गर्भकोषः। ३—अपरा ( तलदैशिकी गर्भधरकला )। ४—जरायुः। ५—साधारणी गर्भधरकला। ६—गर्भाशयगुहाऽवकाशः।

प्रयोजनं पुनरस्य तापदुर्वाहकतया समन्ततो गर्भस्य स्थिरोष्मसम्पादनम्, बाह्याभिघाततो गर्भसंरक्षणम्, गर्भचेष्टनसौकर्यम्, गर्भाभिप्रीणनम्, गर्भान्तर्जराय्वोः संसक्तिवारणम्, प्रसवकाले च गर्भाशयग्रीवाविस्फारणम्, संकुचद्गर्भाशयस्य पीडनभराद्गर्भरक्षणम्, अपत्यपथप्रक्षालनञ्चेति ।

## नाभिनाडी नाभिनालं वा ।

नाभिनाडी नाम कनिष्ठापरिणाहस्तर्जनीपरिणाहो वा प्रायोऽष्टादशादिद्वाविंशत्यन्तप्राङ्गुलदीर्घः ( त्रिप्राङ्गुलह्रस्वो द्विनवतिप्राङ्गुलदीर्घश्चापि दृष्टः ) गर्भापरासंयोजनो वृन्तमिव नालविशेषः । कदाचित्त्वपराप्रतिबद्धगर्भे नाभिनालस्य सर्वथैवाऽभावः । एष चात्र नाभिनाड्या अङ्गप्रविभागः—

( १ ) नालकञ्चुकम्, अन्यावयवानामावेष्टनभूतम् । तदिदम् अन्तर्जरायुकृतमित्येके । गर्भत्वक्सम्भवमिति चान्ये ।

( २ ) स्वल्पतनः पिच्छिलसंयोजकधातुराशिः, इतरावयवानां संश्लेषकरः ।

( ३ ) रक्तवाहिन्यः—संवाहिन्यौ नाम धमन्यौ, सिराद्वयमेलनसम्भूता संवाहिनी महासिरा नाम चैका शिरा । आदिमसिरे तु ते तृतीयमासात् परं मिथः संयुज्येते । धमनीद्वयञ्च सिरां प्रदक्षिणमनुवेष्ट्य प्रवामं वा स्थितमिति विशेषः । अत एव नाभिनालं दक्षिणावर्त्तनं वामावर्त्तनं वा वेल्लितमिव संलक्ष्यते ।

( ४ ) यल्कवाहिनी नाभिपुटकञ्च, यल्ककोषावशेषभूतं शीर्णमवयवद्वयम्, अपरानाभिनालयोः संयोगस्थलस्यान्तिके लघुपीतपिण्डमिव क्वचिदु-

---

गर्भाभिप्रीणनम् A source of fluid for the foetal tissues. ( It exerts a slight nutritive function ). नाभिनाड़ी Umbilical cord or Funis.

पलभ्यमानम्। क्वचन तु नाभिपुटकम् अपराया प्रान्तभागे जरायुद्वयान्त-रालगतमुपलभ्यते।

(५) अलिन्थावशेषश्चापि यदा कदाऽन्धनलिकेव स्थितो दृष्टः। प्रायेण तु अलिन्थवल्ककोषावशेषाः कोषाणुसङ्घरूपेणावस्थिताः सूक्ष्मचाक्षुष-परीक्षावेद्या एव।

ऋताऽनृतग्रन्थयश्चात्र बहुधा दृष्टाः। तत्र ऋतग्रन्थयः पाशभूतनाल-मध्यता गर्भनिर्गमात् सम्भवन्ति। अनृतग्रन्थयस्तु सिरास्फोतिकृताः पिच्छिलसंयोजकधातुराशिवृद्धिकृता वा परिज्ञेयाः। दृढं ग्रथिता ऋतग्रन्थ-यस्तु रक्तसंवहनमवरुध्य गर्भोपघातकरा भवन्ति। गर्भरुधिरं हि नाभि-नाडीमाश्रित्य संवहति, विदुष्टं गर्भशरीरतस्त्वमरां धमनीद्वयमार्गेण, विशुद्धश्चामरातो गर्भशरीरं सिरामार्गेण। रक्तसंवहनविधिस्तु गर्भस्यानु-पदमेव (चतुर्थेऽध्याये) विस्तरेण वक्ष्यते।

---

# चतुर्थोऽध्यायः ।

## अथातो गर्भपोषणविज्ञानीयमध्यायं व्याख्यास्यामः ।

### किमाहारश्च वर्त्तयति ?

गर्भो हि विभिन्नविधिना पुष्टिमापद्यते । तत्र आतृतीयसप्ताहं जरायु-कोरकाणामनाविष्कृतशोणितप्रणालिकत्वात् तर्षणबलेनैव पोषणग्रहः । स च बीजवहस्रोतसि स्रोतःकलास्रावेण, गर्भाशये च गर्भधरकलास्रावेण, वपनगर्त्तनिर्माणकाले कलाभागाशनेन, गर्त्तगतमातृरुधिरेण च निष्पद्यते इत्येको विधिः । अतः परञ्च कोरकेषु रक्तप्रणालिकाविर्भावात् गर्भरक्तमेव तथासंवहन्मातृरक्ततः पोषकपदार्थानादाय सर्वत्र गर्भशरीरे वितरति । अयं तु विशेषः—आदौ समग्रबहिर्जरायुतलव्याप्तैरनन्तरन्त्वपरानिर्माण-देशावशिष्टैः कोरकैः कार्यमेतत् सम्पद्यत इति । अपरानिर्वृत्तौ तु तद्द्वारैवार्थनिष्पत्तिरित्यन्यो विधिः । एवं हि परतन्त्रवृत्तिर्मातरमाश्रित्य वर्त्तयत्यन्तर्गतः ।

अथ चारम्भिकदिवसेषु स्वतन्त्रवृत्तित्वमपि गर्भस्य दृष्टम् । स हि तदा स्वनिष्ठपोषकपदार्थैरपि स्वात्मानं वर्त्तयति । संसृष्टबीजान्तर्गतः पोषण-द्रव्यराशिः पुराऽतिसान्द्राऽपि परं द्रवतामुपगतो बुद्बुदावस्थापन्नगर्भस्य यल्ककोषे (महावकाशेऽपि च) शोषणार्हः समुपलभ्यते, आह्रियते च ततो यल्ककौषिकरक्तप्रणालिकाभिरित्यपरो विधिः । रक्तप्रणालिकाश्चे-

---

तर्षणबलेन = By Process of Osmosis. यल्ककौषिकरक्तप्रणालिकाः Vitelline Vessels.

तास्तृतीयसप्ताहे यल्ककोषप्राचीरिकायामाविर्भवन्ति । एवं यल्कनिर्हरणाच्च यल्ककोषस्याप्यवक्षय: । भवति चात्र—

बीजोपनीतैराहारै: प्रथमं गर्भपोषणम् ।
मार्गगर्भाशयादिस्थै रसरक्तैश्च मातृजै: ॥
सर्वं तदपरोत्पत्तौ तद्द्वारैव भविष्यति ॥

—अष्टाङ्गशारीरम् ।

प्राञ्चोऽपि पुनराहु:—

( १ ) असञ्जाताङ्गप्रत्यङ्गविभागमानिषेकात् प्रभृति सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्यग्गतानां धमनीनामुपस्नेहो जीवयति ।

मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडी प्रतिबद्धा, साऽस्य मातुराहाररसवीर्यमभिवहति, तेनोपस्नेहेनास्याभिवृद्धिर्भवति । *

—सु० शा० ३ ।

( २ ) व्यपगतपिपासाबुभुक्षः खलु गर्भ: परतन्त्रवृत्ति:, मातरमाश्रित्य वर्त्तयत्युपस्नेहोपस्वेदाभ्यां गर्भस्तु सदसद्भूताङ्गावयव: । तदनन्तरं ह्यस्य लोमकूपायनैरुपस्नेह: कोश्चिन्नाभिनाड्ययनै: । नाभ्यां ह्यस्य नाडी-प्रसक्ता, नाड्यांश्चापरा, अपरा चास्य मातु: प्रसक्ता हृदये, मातृहृदयं ह्यस्य तामपरामभिसम्प्लवते सिराभि: स्यन्दमानाभि: । स तस्य रसो बलवर्णकर: सम्पद्यते । स च सर्वरसवानाहार: स्त्रिया ह्यापन्नगर्भाया-स्त्रिधा रस: प्रतिपद्यते स्वशरीरपुष्टये स्तन्याय गर्भवृद्धये च । स तेनाहारे-णोपष्टब्ध: परतन्त्रवृत्तिर्मातरमाश्रित्य वर्त्तयत्यन्तर्गत: ।

—च० शा० ६ ।

( ३ ) निषेकात् प्रभृति गर्भाशयोपस्नेहोपस्वेदौ वर्त्तनम् । ततो व्यक्तीभवदङ्गप्रत्यङ्गस्यास्य नाभ्यां प्रतिबद्धा नाडी, नाड्यामपरा, तस्यां मातृहृदयम् । ततो मातृहृदयादाहाररसो धमनीभि: स्यन्दमानोऽपरामुपैति ।

---

* अत्र निदर्शनम्, यथा सलिलोपस्नेहस्तीरजाततरुकदम्बं पुष्णाति तद्वदिव ।

ततः क्रमान्नाभिम् । ततश्च स पुनर्गर्भस्य पक्वाशये स्वकायाग्निना पच्यमानः प्रसादबाहुल्याद्धात्वादिपुष्टिकरः सम्पद्यते । तथा रोमकूपै-रुपस्नेहो रस एव च पयोभूतः ।

—सङ्ग्रहशा० २ ।

( ४ ) गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥

—वा० शा० १ ।

( ५ ) मात्रादीनां खलु गर्भकराणां भावानां सम्पदः, तथा वृत्तस्य सौष्ठवात्, मातृतश्चैवोपस्नेहोपस्वेदाभ्याम्, कालपरिणामात्, स्वभावसंसि-द्धेश्च कुक्षौ वृद्धिमाप्नोति ।

—च० शा० ४ ।

( ६ ) गर्भस्य खलु रसनिमित्ता मारुताध्माननिमित्ता च परिवृद्धि-र्भवति । भवन्ति चात्र—

तस्यान्तरेण नाभेस्तु ज्योतिःस्थानं ध्रुवं स्मृतम् ।
तदाधमति वातस्तु देहस्तेनास्य वर्द्धते ॥
ऊष्मणा सहितश्चापि दारयत्यस्य मारुतः ।
ऊर्ध्वं तिर्यगधस्ताच्च स्रोतांस्यपि यथा तथा ॥

---

( ६ ) ज्योतिःस्थानम् = अग्निस्थानम् । इदमत्राकूतम्—आनाभिप्र-सृतम् आरक्तवर्णं नाभिसिरयाऽनुबद्धं च गर्भयकृद् दृष्ट्वा प्राग्भिरनुमितं भवेत् यदिदं वह्निस्थानम्, अत एवास्य रक्तवर्णता, नाभिनाडीस्थवातश्चै-नमाधमतीति । वातमूत्रपुरीषाणीति—गर्भोदके मूत्रद्रव्यलाभात् गर्भो मूत्र-यतीति तु नव्याः । स्थूलमलासम्भव इति—स्वल्पतनं गर्भमलं (Meconium) तु भवत्येव ।

अन्यच्चापि—

निःश्वासोच्छ्वाससंक्षोभस्वप्नान् गर्भोऽधिगच्छति।
मातुर्निःश्वसितोच्छ्वाससंक्षोभस्वप्नसम्भवान्॥
मलाल्पत्वादयोगाच्च वायोः पक्वाशयस्य च।
वातमूत्रपुरीषाणि न गर्भस्थः करोति हि॥
जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते।
वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति॥

—सु० शा० ३।

अजातस्य साक्षादन्नपानाननुप्रवेशादमलत्वाच्च रसस्य गर्भस्य स्थूल-मलासम्भवः।

—सङ्ग्रहशा० २।

## अथ गर्भरक्तसंवहनम्।

इतरविलक्षणं हि खलु गर्भरक्तसंवहनम्, मातृपरायत्तत्वात् हृदयादि-निर्माणवैलक्षण्याच्च गर्भस्य। अपरायां मातृरक्तेन सह सम्मूर्च्छितं वै गर्भरुधिरं, मिथोविनिमयात् त्यक्तमलिनांशं गुणोत्तरं च भूत्वा, नाभिनाल-पथेन गर्भशरीरे सञ्चरत्, तत्तद्गर्भाङ्गपोषणादिकं कार्यजातं निष्पादयति। शुक्तिच्छिद्रं, सेतुधमनी, सेतुसिरा, संवाहिन्यौ धमन्यौ, संवाहिनी सिरा चेति च निर्माणवैलक्षण्यकराः पञ्च विशेषाः। प्रसूतस्य च बालस्य यथाकालमेषां छिद्रावरोधो रूपान्तरभावश्च। तत्र—

शुक्तिच्छिद्रं नाम—क्षुद्रशुक्तिकाकारं विवरम्, अलिन्दान्तरीयप्राचीरे वर्त्तमानत्वादलिन्दद्वयस्य मिथोऽनुबन्धकरम्। कपाटस्वभावञ्चैतद्विवरम्, दक्षिणतो वामाभिमुखं प्रसरद्रक्तं नावरुणद्धि, रुणद्धि तु वामतो दक्षिणा-

---

शुक्तिच्छिद्रम् Foramen Ovale

भिमुखीं गतिं रक्तस्य। छिद्रस्यास्य पूर्वधारातोऽधरमहासिराछिद्रं यावत्प्रगतम्, हृदन्तरीयकलाविनिर्मितम्, गर्भस्थशिशोर्विशेषेण कार्यकरञ्च क्षुद्रमेकं निर्देशपत्रकमुपलभ्यते। तद्धि दक्षिणालिन्देऽधरमहासिरामुखेनागतं रक्तं शुक्तिछिद्राभिमुखं प्रणुदति।

सेतुधमनी पुनर्योजनी नलिका, फुप्फुसाभिगां धमनीं महाधमन्या योजयति उभयोर्मध्यस्था। तद्द्वारेण च फुप्फुसाभिगधमनीगतं रक्तं भूम्ना महाधमन्या अवरोहिभागमेव प्रविशति, फुप्फुसयोस्तदा निष्क्रियत्वात्।

संवाहिन्यौ धमन्यौ तु आभ्यन्तराधिश्रोणिकाभ्यामुद्भूय (आभ्यन्तराधिश्रोणिके एव तथानुगते इति वा) वस्तिमुभयतः उदरपूर्वप्राचीरस्य पश्चिमतश्च पुरःप्रसरन्त्यौ नाभिमार्गेण बहिर्निर्गच्छतः। तथानिर्गतयोश्चातः परं नालावयवभूतयोः नाभिधमन्याविति संज्ञानम्। अमरायाश्च प्रतिकोरकम् अनयोरेव शाखाप्रतानाः प्रतन्यन्ते।

संवाहिनी महासिरा (नाभिसिरा वा) तु तावत् मातुरमरातो रक्तमभिवहन्ती नाभिमार्गेण बालस्य यकृत्तले प्रसृता, शाखाभिर्यकृतो वामपिण्डं चतुरस्रपिण्डिकां च पुष्णन्ती, यकृद्द्वारे द्वयोरग्रशाखयोर्विभज्यते। तयोरेका सेतुसिरासंज्ञा शाखा यकृत्पश्चिमत ऊर्ध्वं गता वामया याकृतसिरया मिलित्वाऽधरमहासिरायामुन्मुक्ता भवति, योजयति चैवं संवाहिनीं महासिरामधरया महासिरया। अपरा तु प्रतिहारिण्याः सिराया वामशाखया मिलिता संवाहिनीं महासिरां प्रतिहारिण्या महासिरया योजयति, साधयति च याकृतं रक्तसंवहनं गर्भस्य।

एवञ्च संवाहिन्या महासिरया प्रतिनीतं गर्भरुधिरं मागत्रयेण अधरमहासिरायां निक्षिप्यते। तत्र पोषकशाखाभिर्यकृदन्तः प्रविष्टो

---

निर्देशपत्रकम् Eustachian Valve. सेतुधमनी Ductus Arteriosus. संवाहिन्यौ धमन्यौ Hypogastric Arteries. नाभिधमन्यौ Umbilical Arteries. संवाहिनी महासिरा umbilical Vein. सेतुसिरा Ductus Venosus.

[ २४ चित्रम् ]

## गर्भस्थबालस्य रक्तसंवहनम् ।




क— अन्त्राणि । ख— प्रतिहारिणी सिरा ।' ग— अधिश्रोणिका आभ्यन्तरी धमनी । ( शेषमग्रिमपृष्ठस्य टिप्पण्यामवलोकयन्तु )

लघुशोणितराशिर्याकृतसिरामार्गेण, भूयाँश्च शोणितभागो याकृतरक्त-संवहनविधिना सञ्चरन् याकृतसिरामार्गेण, अवशिष्टश्च सेतुसिरामार्गेणेति ।

## रक्तसंवहनप्रकारश्च गर्भस्थबालस्येदृशः—

( १ ) संवाहिनी महासिरा हि मातुरमरातो विशुद्धञ्च समागतं गर्भ-रुधिरं पूर्वोक्तदिशाऽधरमहासिरायां निक्षिपति । तत्र च सेतुसिरया प्रतिनीयमानस्य अपरारक्तस्य, याकृतसिराभ्यामागच्छतो याकृतसंवहन-रुधिरस्य, स्वयमधरमहासिरया प्रतिनिवर्त्तमानस्य कायाधरशाखाशोणि-तस्य च सङ्गमः । तदिदमस्रं सिरापथेनैतेनैव हृदयस्य दक्षिणालिन्दे प्रविश्य, दक्षिणनिलयञ्चागत्वा, शुचिच्छिद्रमार्गेण वामालिन्दमाविशति, मिश्रीभवति च फुफ्फुसप्रभवाभिः सिराभिः फुफ्फुसाभ्यामागतेन स्वल्प-रक्तेन । ततश्चास्य वामनिलये प्रवेशः, निलयाच्च महाधमन्याम् । महाधमनीतश्च मातृकाधमनीभ्यामक्षकाधरधमनीभ्याञ्च विक्षिप्यमाणं विशुद्धप्रायं रक्तमिदं शिरोग्रीवं बाहू च परिपुष्णाति । सोऽयमाद्यः क्रमः ।

---

१—अमरा । २—नाभिधमन्यौ । ३—संवाहिनी नाम महासिरा । ४—नाभिदेशः । ५—संवाहिनी महासिरा । ६—सेतुसिरा । ७—दक्षिणनिलयः । ८—अधरा महासिरा । ९—दक्षिणालिन्दः । १०—फुस्फुसाभिगा धमनी । ११—उत्तरा महासिरा । १२—शिरोबाहुरक्त-वाहिन्यः । १३—सेतुधमनी । १४—महाधमनी । १५—फुस्फुसरक्त-वाहिन्यः । १६—फुस्फुसप्रभव सिराद्वयम् । १७—वामालिन्दः । १८—वामनिलयः । १९—यकृत् । २०—अभियाकृती धमनी । २१—आन्त्रिक्यो धमन्यः । २२—अधिश्रोणिका साधारणी धमनी । २३—अधःशाखीया रक्तवाहिन्यः । २४—संवाहिन्यौ नाम धमन्यौ ।

( २ ) ऊर्ध्वकायान्निवर्त्तमानं तु रक्तम् उत्तरमहासिरापथेन दक्षिणालिन्दे प्रविशति, ततश्च पूर्वोक्तं रक्तस्रोत उल्लङ्घ्य दक्षिणनिलयम्। दक्षिणनिलयतश्च फुफ्फुसाभिगां धमनीं प्रविशत् स्वल्पेन भागेन फुफ्फुसद्वयं पुष्णाति ( न तु तत्र विशोध्यते, फुफ्फुसयोस्तदा निष्क्रियत्वात् ), अधिकेन तु भागेन प्रविशत्यवरोहिणीं महाधमनीं सेतुधमनीद्वारेण। मलिनप्रायञ्च तद्रक्तं महाधमन्यास्तत्तच्छाखाभिरधरकाये प्रसरत् अधरमहासिरया प्रतिहारिण्या महासिरया च प्रतिनिवर्त्तते, परमस्य भूयिष्ठो भागः संवाहिनीभ्यां धमनीभ्यां मातुरमरामेव गच्छति। सोऽयं द्वितीयः क्रमः।

प्रगल्भगर्भस्य च शुक्तिच्छिद्रसेतुधमन्योरवकाशः स्तोकेन सङ्कीर्यते। तच्च भविष्यतः फौफ्फुसरक्तसंवहनारम्भस्य पूर्वोपक्रममात्रमिति तद्विदः। जातमात्रस्य च बालस्य इमे विशेषा उत्पद्यन्ते—

( १ ) अलिन्दान्तर्भारो हि दक्षिणालिन्दे क्षीयते वामालिन्दे च वर्धते, अपरारक्तसंवहनस्य विच्छेदादारम्भाच्च फौफ्फुसरक्तसंवहनस्य। तथा च वामतो विवृतिशीलस्य शुक्तिच्छिद्रस्य मुखसंवरणात् न तच्छिद्रपथेन दक्षिणालिन्दात् वामालिन्दे रक्तं प्रविशति। दशभिर्दिनैस्तु शुक्तिच्छिद्रस्य सर्वथैव विलोपः। अतः परं तु तच्चिन्हं शुक्तिखातसंज्ञकमुपलभ्यते। कदाचिदविलुप्तं तु शुक्तिच्छिद्रं बाल्यादेव हृद्रोगकरं सम्पद्यते, शुद्धाशुद्धरक्तविमिश्रणात्।

( २ ) एवं फुफ्फुसाभिगधमनीरक्तमपि सक्रियफुफ्फुसाभ्यां बलादाकृष्यमाणं न सेतुधमन्यामाविशति; शून्यावकाशतया च सेतुधमन्या अपि दिनपञ्चकेन सप्ताहेन वाऽवरोधः। द्वित्रमासेन सम्यक् विशुष्काया अवशेषस्तु सेतुबन्धनिकारूपेणावतिष्ठते।

---

सेतुबन्धनिका = Ligamentum Arteriosum.

( ३ ) संवाहिन्यौ धमन्यौ, संवाहिनी महासिरा, सेतुसिरा चापि प्रसूतस्य बालस्याचिरेणैव ( धमन्यौ दिनद्वयेन सिराश्च सप्ताहेन ) अवरुध्यन्ते तिष्ठन्ति च ततः परं नीरन्ध्रसूत्राकाराः शरीरे। तत्र विशुष्कप्राये धमन्यौ वस्तिरज्जुकासंज्ञे भवतः, संवाहिनी महासिरा च शुष्का रज्जुप्रबन्धनीसंज्ञा, सिराप्रबन्धनीसंज्ञा तु सेतुसिरा।

---

# पञ्चमोऽध्यायः ।

## अथातो गर्भवृद्धिक्रमविज्ञानीयमध्यायं व्याख्यास्यामः ।

गर्भो हि वर्धमानो येन क्रमेण तत्तत्स्वरूपतामधिगच्छति तदेवात्र मासानुपूर्व्या वर्णयिष्यते । शस्त्रकर्मभिर्गर्भविच्युतिभिर्वा प्राप्तान् गर्भानवेक्ष्यैव क्रमोऽयं विद्वद्भिर्निर्धारितः । न च पक्षहीनो गर्भोऽद्यावधि एवमुपलब्धस्तस्मादर्धमासीनगर्भस्य वर्णना मानवेतरप्राणिगर्भपरीक्षणाश्रितत्वात् काल्पनिकप्रायेव । एतच्च गर्भदैर्ध्यादिविज्ञानं व्यावहारिकत्वात् विशेषप्रयोजनम् । गर्भदैर्ध्यविज्ञानस्य चायं विधिः—दैर्ध्यमानं तावत् आपञ्चममासं मध्यशीर्षात् अनुत्रिकास्थि यावत्, अतः परं च मध्यशीर्षात् पार्ष्णिं यावत् गृह्यते । तत्र, आपञ्चमं माससंख्यायाः स्वसंख्यया गुणनेन, ततः परं तु पञ्चधा गुणनेन यवकेषु गर्भदैर्ध्यमायाति । इत्थमनुमितं च गर्भदैर्ध्यं षष्ठादारभ्यैव यथार्थमानं भवति, इतः पूर्वं तु स्वाभाविकमानात् स्तोकेनाधिकमेव ।

( १ ) तत्र प्रथमे मासि गर्भाण्डं कपोताण्डपरिणाहं महावकाशबहुलञ्च भवति । भ्रूणस्तु तदन्तर्गतः यवकैकमानप्रायो, दशगुञ्जाभारः, स्थूलशिराः, पुटीकृतविग्रहो, व्यक्तहृदयो, दृष्टनेत्रकर्णबुद्बुदः, स्फुटितशाखाङ्कुरो, लक्षितमुखनासिकारम्भश्च लघुजरायुकोषसंवेष्टितो वर्त्तते । सदसद्भूताङ्गावयवत्वाच्च मानवगर्भोऽयमिति न सुकरविज्ञानम् । भवन्ति चात्र—

---

यवकः = Centimetre. ( प्राङ्गुलञ्च सार्धयवकद्वयमितं भवति ) ।

पुटीकृतविग्रहः = Much curved, head and tail being close together.

तत्र प्रथमे मासि कललं जायते ( सु० )। स तु सर्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि सम्मूर्च्छितः सर्वधातुकललीकृतः खेटभूतो भवत्यव्यक्तविग्रहः सदसद्भूताङ्गावयवः ( च० )।

प्रथमेऽहनि रेतश्च संयोगात् कललञ्च यत्।
जायते बुद्बुदाकारं शोणितञ्च दशाहनि॥
घनं पञ्चदशाहे स्यात् विंशाहे मांसपिण्डकम्।
पञ्चविंशत्तमे प्राप्ते पञ्चभूतात्मसम्भवः॥
मासैकेन च पिण्डस्य पञ्चतत्त्वं प्रजायते।
—हारीतः।

ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदं भवति, अर्धमासाभ्यन्तरे पिण्डो भवति, मासाभ्यन्तरे कठिनो भवति।
—गर्भोपनिषद्।

( २ ) द्वितीये मासि कुक्कुटाण्डमानस्य गर्भाण्डस्य व्यासः सार्धप्राङ्गुलद्वयमितो भवति, महावकाशश्च जरायुकोपेनाभिव्याप्यमानोऽत्ररुध्यते। भ्रूणस्तु तदन्तःस्थिते महति जरायुकोपे वर्त्तमानो विलुप्तपुच्छः, यवकत्रयदीर्घो, व्यक्ताङ्गुलिहस्तपादः, स्फुटनेत्रकर्णनासादिमुखावयवो, लघुनाभिनालबद्धः, ऋजुप्रायगात्रो, मानवगर्भाकृतिस्त्रिंशद्गुञ्जाभारश्च ( विंशोत्तरगुञ्जाशतभार इति केचित् ) दृष्टः। अन्तकास्थिन अधोहन्वस्थिन च विकसनकेन्द्राणां प्रादुर्भावः। बहिर्जननेन्द्रियाणि च लक्ष्यमाणान्यपि न लिङ्गभेदज्ञापनसमर्थानि भवन्ति। वचनान्यपि—

द्वितीये मासि शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते। यदि पिण्डः पुमान्, स्त्री चेत्पेशी, नपुंसकं चेदर्बुदम् ( सु० )। द्वितीये मासि घनः सम्पद्यते। पिण्डः पेश्यर्बुदं वा। तत्र घनः पुरुषः, स्त्री पेशी, अर्बुदं नपुंसकम् ( च० )

"पञ्चाशद्दिनसम्प्राप्ते अङ्कुराणाञ्च सम्भवः" ।

—हारीतः ।

( ३ ) तृतीये मासि गर्भाण्डं नारङ्गाकृति सञ्जायते । व्यासस्तु तस्य सार्धप्राङ्गुलत्रयात् प्राङ्गुलचतुष्टयमितो दृष्टः । भ्रूणस्तु तावत् प्राङ्गुलत्रयदीर्घः सार्धप्राङ्गुलत्रयदीर्घो वा त्रिचतुरप्रशुक्तिभारो, विविक्ताङ्गुलिः, सनखो, व्यक्तग्रीवः, संवृत्ततालुः, ईषद्व्यक्तबहिर्जननाङ्गश्च सम्पद्यते । अस्थिषु चानेकेषु केन्द्रोद्गमः । गर्भाशयदर्शनेन च निःसंशयं लिङ्गज्ञानम् । भवन्ति चात्र—

तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्ते । अङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति ( सु० ) ।

तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येनाभिनिर्वर्त्तन्ते ।............। एवमस्येन्द्रियाण्यङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्तेऽन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते, तद्यथा—दन्ता व्यञ्जनानि व्यक्तीभावः, तथायुक्तानि चापराणि, एषा प्रकृतिः; विकृतिः पुनरतोऽन्यथा । सन्ति खल्वस्मिन् गर्भे केचिच्च नित्या भावाः, सन्ति चानित्याः केचित् ।

तस्य य एवाङ्गावयवाः सन्तिष्ठन्ते, त एव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति; ततः स्त्रीपुरुषयोर्ये वैशेषिका भावाः प्रधानसंश्रया गुणसंश्रयाश्च, तेषां यतो भूयस्त्वं ततोऽन्यतरभावः । तद्यथा—क्लैब्यं भीरुत्वमवैशारद्यमनवस्थानमधोगुरुत्वमसंहनन शैथिल्यं मार्दवं तथायुक्तानि चापराणि स्त्रीकराणि, अतो विपरीतानि पुरुषकराणि, उभयभागावयवा नपुंसककराणि । ( च० ) ।

तृतीये पञ्चधा प्ररोहति । तद्यथा—सक्थिनी बाहू शिरश्च । सक्थ्यादिप्ररोहैककालमेव च सर्वाङ्गावयवेन्द्रियाणि युगपत् सम्भवन्त्यन्यत्र जन्मोत्तरकालजेभ्यो दन्तादिभ्यः । क्रमेण तु स्फुटीभवन्ति । एषा

प्रकृतिः, विकृतिरतोऽन्यथा । यथास्वञ्च गर्भस्य पुंस्त्रीनपुंसकान्यतम-लिङ्गानुरूपा भावा मनसि शरीरे च सन्तिष्ठन्ते । वैशेषिकलिङ्गसङ्करे तु यतोभूयस्त्वं ततोऽन्यतरा भावाः । तद्यथा—क्लैव्यं भीरुत्वमवैशारद्यं मोहो-ऽनवस्थानमधोगुरुत्वमसंहननं शैथिल्यं मार्दवं गर्भाशयबीजभागस्तथा-युक्ताश्चापरे स्त्रीकरा भावाः । ततो विपरीताः पुंस्कराः । सङ्कीर्णा नपुंसककराः ।

—सङ्ग्रहशा० २ ।

व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ।
मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ॥
सममेव हि मूर्धाद्यैर्ज्ञानञ्च सुखदुःखयोः ।

—वा० शा० १ ।

(४) चतुर्थे मासि गर्भशरीरम्* पञ्चप्राङ्गुलदीर्घं, सप्ताद्यष्टान्तप्रशुक्ति-भारं, हस्ववर्णाहीनगर्भलोमं, सुव्यक्तबहिर्जननाङ्गं, उपचितपेशीकं, स्फुरणयोग्यञ्च प्रजायते । अनवरुद्धविवरा च गुदनलिका । वचनानि चात्र—

चतुर्थे मासि सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति । गर्भहृदयप्रव्यक्ति-भावाच्चेतनाधातुरभिव्यक्तो भवति, कस्मात् तत्स्थानत्वात् । तस्माद् गर्भ-श्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति, द्विहृदयां च नारीं दौहृदिनी-माचक्षते ( सु० ) ।

चतुर्थे मासि स्थिरत्वमापद्यते गर्भः । तस्मात्तदा प्रभृति गर्भिणी गुरु-गात्रत्वमधिकमापद्यते विशेषेण ( च० ) ।

चतुर्थके च लोमानां सम्भवश्चात्र दृश्यते । —हारीतः ।

---

* एवं विवर्धितः स यदा हस्तपादादिभिरङ्गैरुपेतस्तदा शरीरमिति संज्ञां लभते ( सु० शा० ५ ) । गर्भलोमानि Lanugo.

( ५ ) पञ्चमे मासि गर्भो दशप्राङ्गुलदीर्घः, षोडशप्रशुक्तिभारो, द्वादशप्राङ्गुलदीर्घनाभिनालः, शिरोरुहविभूषितो, विशेषेण स्फुरणशीलो, गर्भमलवदन्त्रः, उल्बावृतत्वक् च सम्पद्यते। उल्बं हि नाम पूतिग्रन्थिनिःस्रावेण मृतत्वक्कोषाणुभिश्च विनिर्मितः स्नैहिकस्तरो, गर्भोदकमग्नस्य गर्भत्वचोऽभिरक्षणः। भवन्ति चात्र—

पञ्चमे मासि गर्भस्य मांसशोणितोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः तस्मात्तदा गर्भिणी कार्श्यमापद्यते विशेषेण। ( च० )

पञ्चमे मासि मनः प्रतिबुद्धतरं भवति। ( सु० )

( ६ ) षष्ठे मासि गर्भो द्वादशप्राङ्गुलदीर्घो, द्वात्रिंशत्प्रशुक्तिभारः, सभ्रूः, साक्षिपक्ष्मलोमा च सञ्जायते। वसानिचयारम्भाच्च त्वक्शैथिल्यस्य किञ्चिन्निरसनम्। शिरोरुहाश्चाभिवृद्धाः कृष्णवर्णा भवन्ति। वचनान्यपि—

षष्ठे मासि गर्भस्य बलवर्णोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः। तस्मात्तदा गर्भिणी बलवर्णहानिमापद्यते विशेषेण ( च० )। षष्ठे बुद्धिः (सु०)।

षष्ठे केशरोमनखास्थिस्नाय्वादीन्यभिव्यक्तानि बलवर्णोपचयश्च।

( सङ्ग्रहशा० २ )

षष्ठे स्नायुसिरालोमबलवर्णनखत्वचाम् ( वा० )।

( ७ ) सप्तमे मासि सार्धशेटकभारः प्राङ्गुलचतुर्दशदीर्घश्च गर्भो भवति। अण्डग्रन्थी वंक्षणसुरङ्गायामवतरतः। नेत्रच्छदावुन्मीलतः। त्वक्शैथिल्यान् वलितचर्मा तु गर्भः शुष्कतनुर्वृद्ध इव संलक्ष्यते। गर्भस्थशिशोरुपलभ्यमाना कनीनकच्छदा नाम तन्वी कला तु प्रायः सप्तमेऽष्टमे वा मासे स्वयमेव विलीयते। प्रसूतश्चायं दुर्बलतनुः कदाचित् सुपरिपाल्यमानो जीवनधारणे क्षमः, प्रायस्तु सद्यो म्रियतेऽल्पायुर्वा भवति। भवन्ति चात्र—

---

उल्बम् Vernix Caseosa.

गर्भः सर्वैर्भावैराप्यायते सहसा, तस्मात्तदा गर्भिणी सर्वाकारैः क्लान्ततमा भवति ( च० )। सप्तमे मासि सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः ( सु० )। सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ( वा० )।

"तेन सर्वेण जन्मजीवनलक्षणेन अर्थेन अङ्गैश्च सम्पूर्णो भवतीत्यवः तिष्ठते । तथा चास्मिन् सप्तमे मासि गर्भो जातो जीवति किन्त्वकालप्रसवः त्वान्न तथा दीर्घजीवितत्वादिकं स्यादिति"—अरुणदत्तः ।

( ८ ) **अष्टमे तु मासि** उल्वेन सर्वथाऽऽवृतो गर्भः षोडशप्राङ्गुलदीर्घो भवति शेटकद्वयभारश्च । त्वक्शैथिल्यञ्चास्य त्वगधस्ताद् वसापचया-न्निवृत्तं भवति । शिरोरुहा वर्धन्ते, क्षीयन्ते च गर्भलोमानि । अत्र जातो-ऽपि प्रायः सविशेषं परिपाल्यमान एव जीवति । वचनानि चात्र—

गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिः संवाहिनीभिर्मुहुर्मुहु-रोजः परस्परत आददाते, गर्भस्यासम्पूर्णत्वात् । तस्मात्तदा गर्भिणी मुहुर्मुहुर्मुदा युक्ता भवति मुहुर्मुहुश्च म्लाना । तथा गर्भः । तस्मात्तदा गर्भस्य जन्म व्यापत्तिमद्भवति, ओजसोऽनवस्थितत्वात् । तञ्चैवार्थ-मभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः ।

—च० शा० ४ ।

अष्टमेऽस्थिरीभवत्योजः । तत्र जातश्चेन्न जीवेत् नीरोजस्त्वान्नैर्ऋतभा-गत्वाच्च । ततो बलिं मांसौदनमस्मै दापयेत् ।

—सु० शा० ३ ।

अष्टमे गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिर्वाहिनीभिर्मुहुर्मु-हुरोजः परस्परमाददाते । तस्मात्तदा गर्भिणी मुहुर्मुदिता भवति मुहुर्म्लाना तथा गर्भः । एवं गर्भस्य जन्म व्यापत्तिमत्तदा भवति, ओजसोऽनव-स्थितत्वात् । तथा ह्यस्य निष्क्रमणोन्मुखस्य परिवर्त्तनादीन्यनुभवत एवौ-जसा वियोगः । यद्यपि च किञ्चित्कालमस्योच्छ्वसनं स्यात्तच्छिन्नस्ये-वाङ्गस्यौजःसंस्कारानुवृत्तिकृतम् । जनन्यास्तु स्थिरौजस्कतयैकदेशेन रसे

सङ्क्रान्ते ग्लानिरेवेति। अन्ये पुनराहुः—नैऋतभागत्वात्तत्र गर्भस्य मरणम्। तस्मात् प्रसवप्रतिषेधार्थं स्त्री स्नाता शुचिर्ब्रह्मचारिणी देवताराधनपरा स्यात्। मांसौदनबलिं चात्र निर्वपेत्।

—सङ्ग्रहशा० २।

ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात्।
तेन तौ म्लानमुदितौ तत्र जातो न जीवति॥
शिशुरोजोऽनवस्थानान्नारी संशयिता भवेत्।

—वा० शा० १।

(९) नवमे मासि गर्भोऽष्टादशप्राङ्गुलदीर्घप्रायः शेटकद्वयभारो, नष्टप्रायलोमा, उल्बावृतसर्वशरीरश्च सञ्जायते। नखाश्च नाङ्गुल्यन्तं स्पृशन्ति। अत्र जातश्च प्रायो जीवति, कालप्रसवत्वात्।

(१०) दशमे मासि विंशतिप्राङ्गुलदीर्घः शेटकत्रयात् शेटकचतुष्टयं यावत् भारेण प्रमितो, विलुप्तलोमा, प्रचितोल्बो, द्व्यङ्गुलदीर्घशिरोरुहः साण्डवृषणोऽतिक्रान्तनखपीठभूमिनखश्च गर्भोऽभिजायते।

## किन्नु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्त्तते कुक्षौ ?

विप्रतिवादास्त्वत्र बहुविधाः सूत्रकारिणामृषीणां सन्ति तत्तदङ्गकार्यविशेषस्य प्राधान्यख्यापनात्। तद्यथा—

(१) शिरः पूर्वमभिनिर्वर्त्तते कुक्षाविति कुमारशिरा भरद्वाजः पश्यति, सर्वेन्द्रियाणां तदधिष्ठानमिति कृत्वा (च०)। गर्भस्य खलु सम्भवतः पूर्वं शिरः सम्भवतीत्याह शौनकः, शिरोमूलत्वात् प्रधानेन्द्रियाणाम् (सु०)।

(२) हृदयमिति काङ्कायनो बाह्लीकभिषक्, चेतनाधिष्ठानत्वात् (च०)। हृदयमिति कृतवीर्यो बुद्धेर्मनसश्च स्थानत्वात् (सु०)।

( ३ ) नाभिरिति भद्रकाप्यः, आहारागम इति कृत्वा ( च० )। नाभिरिति पाराशर्यः, ततो हि वर्धते देहो देहिनः ( सु० )।

( ४ ) हस्तपादमिति बडिशः, तत्करणत्वात् पुरुषस्य ( च० )। पाणिपादमिति मार्कण्डेयः, तन्मूलत्वाच्चेष्टाया गर्भस्य ( सु० )

( ५ ) मध्यशरीरमिति सुभूतिर्गौतमः, तन्निबद्धत्वात्सर्वगात्रसम्भवस्य ( सु० )।

( ६ ) पक्वाशयगुदमिति भद्रशौनकः, मारुताधिष्ठानत्वात् ( च० )।

( ७ ) इन्द्रियाणीति जनको वैदेहः, तान्यस्य बुद्ध्यधिष्ठानानीति कृत्वा ( च० )।

( ८ ) परोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः ( च० )।

### अथ सिद्धान्त :—

सर्वाङ्गाभिनिर्वृत्तिर्युगपदिति धन्वन्तरिः। तदुपपन्नम्, सिद्धत्वात् ( सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तत्वाद् हृदयादीनाम् )। सर्वाङ्गानां ह्यस्य हृदयं मूलम्, अधिष्ठानञ्च केषाञ्चिद् भावानाम्, न च तस्मात् पूर्वाभिनिर्वृत्तिरेषाम्। तस्माद् हृदयप्रभृतीनां सर्वाङ्गानां तुल्यकालाभिनिर्वृत्तिः। सर्वभावा ह्यन्योन्यप्रतिबद्धाः। तस्माद् यथाभूतदर्शनं साधु।*

—च० शा० ६।

---

* मूलमिव मूलं, तदुपघातेन सर्वाङ्गोपघातात्। अधिष्ठानमित्याश्रयः। तत्रौजःप्रभृतीनामधिष्ठानं हृदयं भवति। न च तस्मात्पूर्वाभिनिर्वृत्तिरिति। न च तथाविधमूलत्वान्नाप्यधिष्ठानत्वाच्च पूर्वाभिनिर्वृत्तिर्भवति। यदि मूलं कारणमिति मतं स्यात्तदा कार्येभ्योऽङ्गेभ्यः प्राग् हृदयं स्यादपि, नचेहाङ्गानां हृदयं कारणं किन्तु प्रधानम्। प्राधान्यञ्च तदुपघातेन सर्वोपघातादिति श्चाप्याश्रयाश्रयिभावः स चापि सहोत्पन्नत्वादेव हृदयमाश्रयि तदाश्रितौजःप्रभृतीनां भवतीति भावः। तदेवं चेद् हृदयस्य प्रधानस्यापि पूर्वोत्पादो नास्ति तदा शिरःप्रभृतीनामपि पूर्वोत्पादो नास्त्येवेतीह चक्रपाणिः।

सर्वाण्यङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीत्याह धन्वन्तरिः, गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवदाम्रफलवच्च । तद्यथा, आम्रफले परिपक्वे केशरमांसास्थिमज्जानः पृथक् पृथक् दृश्यन्ते, कालप्रकर्षात्; तान्येव तरुणे नोपलभ्यन्ते, सूक्ष्मत्वात्, तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति; एतेनैव वंशाङ्कुरोऽपि व्याख्यातः । एवं गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः, तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ।

—सु० शा० ३ ।

# षष्ठोऽध्यायः ।

अथातः प्रगल्भगर्भव्याकरणविज्ञानीयमध्यायं व्याख्यास्यामः ।

दशमासं गर्भवास इति व्यतीते दशमे मासि गर्भस्य प्रागल्भ्यम् । प्रगल्भस्तु गर्भो विलुप्तलोमा (ग्रीवांसपृष्ठदेशेषु तदवशेषास्तु कदाचिल्लभ्यन्ते), उल्बावृतः (प्रायेणोल्बं साकल्येनांशतो वा गर्भशरीरमावृणोति, न चापि लभ्यते कदाचित्), साण्डवृषणो, द्व्यङ्गुलप्रायकेशः, पूर्णनखो, विंशतिप्राङ्गुलदीर्घः, त्रिचतुश्शेटकभारश्च भवति । न्यूनशेटकत्रयभारस्तु हीनप्राणशक्तिको भवत्यन्यत्र यमलगर्भात् । इमे चात्र प्रगल्भगर्भस्य प्रसवज्ञानार्थकरा अङ्गसंस्थानादिविशेषा भवन्ति—

गर्भकरोटिः—करोटिर्नाम सकलशिरोऽस्थ्नां सङ्घातः । सा च निष्क्रमतो गर्भस्य बृहत्तमत्वात् कठिनतमत्वाच्च प्रधानमङ्गम् । तस्मात् गर्भनिष्क्रमणविधिविज्ञानार्थं तद्विशेषानेवादौ वक्ष्यामः । करोटिर्हि शिरःसम्पुटम्, मुखमण्डलञ्चेति प्रदेशद्वयं भवति । शिरःसम्पुटस्य च पुनरपि करोटिपटलम्, करोटिभूमिरिति च द्वेधा प्रविभागः । तत्र करोटिपटलं नाम अलाब्वर्धसदृशस्य शिरःसम्पुटस्य छदिभूतो भागो मृदुसंहतः, करोटिभूमिस्तु शिरःसम्पुटस्य तलदेशो दृढसंहत उच्चावचश्च । शिरःसम्पुटन्तु पुरःकपालम्, पश्चात्कपालम्, द्वे पार्श्वकपाले, द्वे शङ्खास्थिनी, जतूका, झर्झरकञ्चेत्यष्टाभिरस्थिभिर्निर्मीयते ।

गर्भकरोटौ च लक्षणीयाः षट् सीमन्ताः, षट् चैव सीमन्तसन्धयः, त्रयः प्रदेशाः, नव व्यासाः, चत्वारश्च परिधयः ।

---

प्रगल्भगर्भः Full-term foetus गर्भकरोटिः Foetal Skull. शिरःसम्पुटम् Cranium. मुखमण्डलम् Face. करोटिपटलम् Vault. करोटिभूमिः Base.

[ ३५ चित्रम् ]

प्रगल्भगर्भः ।



अत्र गर्भाशये भुग्नीभूतः प्रगल्भगर्भो दर्शितः ।

**सीमन्ताः—पुरःसीमन्तः, पश्चिमसीमन्तः, मध्यसीमन्तः, गूढ़सीमन्तिका, पार्श्वसीमन्तौ चेति षट् सीमन्ताः । तत्र पुरःसीमन्तो नाम पुरःकपालस्य पार्श्वकपालाभ्यां सन्धानरेखा पुरतोऽनुप्रस्थम-**

---

सीमन्ताः Sutures. पुरःसीमन्तः Coronal or Fronto-parietal Suture.

वस्थिता। पश्चिमसीमन्तः पुनस्तथैव पश्चिमतोऽवस्थिता पश्चिम-कपालस्य पार्श्वकपालाभ्यां सन्धानरेखा। मध्यसीमन्तस्तावत् पार्श्व-कपालयोः परस्परसन्धिरेखा मध्येऽनुदैर्घ्यमवस्थिता। गूढसीमन्तिका तु पुरःकपालमध्यस्था सूक्ष्मसीमन्तरेखा, प्रायेण बाल्य एव दृश्यते। पार्श्वसीमन्तौ च नाम करोटिपटलस्य पार्श्वस्थे सन्धिरेखे पुरः-पार्श्व-शङ्खाख्यकपालानां सन्धानाङ्कभूते।

सीमन्तसन्धयः—षट्स्वपि सीमन्तसन्धिषु द्वावेव सीमन्तसन्धी विशे-षेण लक्षणीयौ प्राधान्यात्। तत्रैकः पुरो-मध्य-गूढसीमन्तानां सन्धिस्थले चतुष्पथमिव स्थितः, चतुरस्रप्रायो, बृहत्तमः, तालुप्रदेशागतश्च। ब्रह्मरन्ध्रं ब्रह्मतालुकं वेति तन्नामनी। सविशेषकोमलत्वाच्च स्तनन्धयशिशूनामत्र मस्तिष्कानुगधमनीकृतं स्पन्दनं दृश्यते। अपरस्तु मध्यपश्चिमसीमन्तयोः सन्धिस्थलभूतः, त्रिकोणप्रायः, त्रिपथमिव स्थितः शिवरन्ध्रम् अधिपतिरन्ध्रं वेति प्रसिद्धः। शेषास्तु पुरःपार्श्वसीमन्तयोः पश्चिमपार्श्वसीमन्त-योश्च ( उभयतः पार्श्वे ) सन्धिस्थलेषु स्थिता विषमाकृतिरन्ध्ररूपा यथाक्रमं शङ्खरन्ध्रौ कर्णमूलरन्ध्रौ च संज्ञायन्ते।

प्रदेशाः—वर्णनासौकर्याय करोटिपटलस्य त्रेधा प्रविभागः क्रियते ललाटम्, शीर्षम्, अनुशीर्षञ्चेति। तत्र ललाटं नाम भ्रुवारुपरितनो

---

पश्चिमसीमन्तः Lambdoid or Occipito parietal Suture. मध्य-सीमन्तः Sagittal or Interparietal Suture. गूढसीमन्तिका Frontal Suture. पार्श्वसीमन्तौ Two Squamous, Temporal or Temporo-parietal Sutures. सीमन्तसन्धयः Fontanelles, ब्रह्मरन्ध्रम् Anterior fontanelle or Bregma. शिवरन्ध्रम् Posterier fontanelle or Lambda. शङ्खरन्ध्रौ Antero-lateral or Temporal fontanelles. कर्णमूलरन्ध्रौ Postero-lateral or Mastoid fontanelles. प्रदेशाः Regions. ललाटम् Sinciput or Brow.

भागः पुरःसीमन्तसीमितः। शीर्ष तु पुरः-पार्श्व-पश्चिमसीमन्तानां मध्यपतितो देशः। अनुशीर्षं पुनः पश्चिमसीमन्तादधस्तनो भागः। भ्रुवोरधस्तात्तु मुखमण्डलम्।

स्मर्त्तव्यश्चात्र—करोटिपटलं हि सीमन्तानां कलामयत्वात्, सीमन्तसन्धीनां रन्ध्रमयत्वात्, अस्थिकपालानां मार्दवाच्च पीडनार्हं भवति। अत एव प्रसवकालेऽपत्यपथान्निर्गच्छतस्तस्य मार्गानुकूलत्वम्। करोटिभूमेर्मुखमण्डलस्य च दृढसंहतत्वान्न पीडनार्हता न चापि मार्गानुकूलता। अथ च गर्भकरोटिर्वृत्तपादं यावत् (क्वचित् सति प्रयोजने वृत्तार्धं यावदपि) विवर्त्तनक्षमाऽतिशयेन प्रसरणसामर्थ्या च दृष्टा। तेनापि निष्क्रमणकाले भवत्यानुकूल्यम्, न च काचन क्षतिरस्या उपजायते।

[ २६ चित्रम् ]

गर्भकरोटेः प्रदेशा व्यासाश्च।




१—ललाटम्। २—ब्रह्मरन्ध्रम्। ३—शीर्षम्। ४—शिवरन्ध्रम्। ५—पश्चिमार्बुदम्। ६—अनुशीर्षम्। घ, घ—ग्रैवब्रह्मरन्ध्रिको व्यासः। क, क—अनुशीर्षचैबुकः। ग, ग—अनुशीर्षाधरलालाटिकः। च, च—अनुशीर्षाधरब्रह्मरन्ध्रिकः। ख, ख—अनुशीर्षनासामूलिकः। ललाटचैबुकोऽनुशीर्षोत्तरचैबुकश्च व्यासौ चित्रेऽस्मिन् न प्रदर्शितौ।

---

शीर्षम् Vertex अनुशीर्षम् Occiput.

करोटिव्यासाः—करोटेराकृतिप्रमाणविज्ञानार्थं तस्या एव तत्त-त्स्थिरबिन्दुतस्तत्तत्स्थिरबिन्दुं यावत् या रेखाः कल्प्यन्ते ता एव 'करोटि-व्यास'पदभाजो भवन्ति । ( ३६ तमं ३७ तमं च चित्रम् ) तद्यथा—

| व्यासनामानि । | स्थिरबिन्दवः । | व्यासमानानि । |
|---|---|---|
| (१) ग्रैवब्रह्मरन्ध्रिकः । | ग्रीवाचिबुकसन्धितो ब्रह्मरन्ध्रं यावत् । | ३ ३/४″ |
| (२) ललाटचैबुकः । | चिबुकाग्रतो ललाटफलकस्य उन्नतभागं यावत् । | ३ १/४″ |
| (३) अनुशीर्षोत्तरचैबुकः । | चिबुकाग्रतो मध्यसीमन्तस्य द्विविष्टस्थलं यावत् । | ५ १/२″ |
| (४) अनुशीर्षचैबुकः । | चिबुकाग्रतः शिवरन्ध्रं यावत् । | ५″ |
| (५) अनुशीर्षाधरलालाटिकः । | पश्चिमशिरोग्रीवसन्धितो ललाटोत्सेधं यावत् । | ४″ |
| (६) अनुशीर्षाधरब्रह्म-रन्ध्रिकः । | पश्चिमशिरोग्रीवसन्धितो ब्रह्मरन्ध्रं यावत् । | ३ ३/४″ |
| (७) अनुशीर्षनासामूलिकः । | नासामूलतः शिवरन्ध्रं पश्चिमार्बुदं वा यावत् । | ४ १/२″ |
| (८) पार्श्वकापालिकः । | पार्श्वकुम्भयोरन्तरालः । | ३ ३/४″ |
| (९) शङ्खयौग्मिकः । | पूर्वसीमन्ताधरप्रान्तयोरन्तरालः । | ३ १/४″ |

(१) Cervico-bregmatic or Submento-bregmatic. (२) Fronto-mental. (३) Supra-occipito-mental ( Maximum diameter of Budin). (४) Occipito-mental or Vertico-mental. (५ Sub-occipito-frontal. (६) Sub-occipito-bregmatic. (७) Occipito-frontal. (८) Bi-parietal. (९) Bi-temporal.

[ ३७ चित्रम् ]

गर्भकरोटेरनुप्रस्थव्यासद्वयम् ।




क, ख—पार्श्वकापालिकः । ग, घ—शङ्खयौग्मिकः । चित्रेऽस्मिन् मध्यसीमन्तः, पूर्वसीमन्तो, गूढसीमन्तिका, सीमन्तानाञ्चैषां सन्धिस्थले चतुष्पथमिव स्थितं ब्रह्मतालुकञ्चापि यथास्थानं प्रदर्शितम् ।

करोटिपरिधयः—परिधिर्मण्डलं परिणाहो वा, स च तत्तद्व्यासानुकारितयाऽनेकविधः । इह तु चत्वार एव प्राधान्यादुपवर्ण्यन्ते । तद्यथा—

(क) अनुशीर्षाधरब्रह्मरन्ध्रिको नाम परिधिः स्वनामिकव्यासमनुक्रामन् एकादशप्राङ्गुलमानो भवति । ह्रस्वतमश्चायं परिधिः शीर्षोदये श्रोणिकपिठकां रेखामतिक्रामति । अनुशीर्षाधरब्रह्मरन्ध्रिकः पार्श्वकापालिकश्चास्य दीर्घतमौ व्यासौ ।

(ख) अनुशीर्षनासामूलिको नाम परिधिः स्वसंज्ञकव्यासं परिक्रामन् सार्धत्रयोदशप्राङ्गुलमानो भवति । अस्य च ब्रह्मरन्ध्रोदये श्रोण्यामवतरणम् । अनुशीर्षनासामूलिकः पार्श्वकापालिकश्चास्य दीर्घतमौ व्यासौ भवतः ।

---

करोटिपरिधयः Circumferences of the skull.

(ग) अनुशीर्षोत्तरचैबुकस्तु परिधिः स्वनामिकव्यासानुकारी १४$\frac{३}{५}$ प्राङ्गुलमानश्च । दीर्घतमश्चायं परिधिर्ललाटोदये श्रोण्यामवतरति । अनुशीर्षोत्तरचैबुकः पार्श्वकापालिकश्चास्य सुदीर्घौ व्यासौ ।

(घ) ग्रैवब्रह्मरन्ध्रिकश्च परिधिः स्वसंज्ञकव्यासं परिवेष्टयन् १२$\frac{३}{५}$ प्राङ्गुलप्रमाणो भवति । मुखोदये चास्य श्रोण्यामवतरणम् । पार्श्वकापालिकग्रैवब्रह्मरन्ध्रिकौ त्वस्य दीर्घतमौ व्यासौ ।

## कुतो मुखः कथञ्चान्तर्गतस्तिष्ठति ?

**गर्भाङ्गसंस्थितिः**—गर्भाङ्गसंस्थितिर्नाम षडङ्गस्य गर्भस्य तत्तदङ्गानां परस्परापेक्षोऽवस्थानविशेषः । सा चेह प्रायेण भुग्नीभावरूपा वर्धमानकायमानस्यापि गर्भस्य स्वल्पतने गर्भाशयावकाशे सुखसन्धारणार्थकरी प्रसिद्धा । तथा च गर्भः पृष्ठं पूर्वतोऽवनम्य, शाखाश्च तत्तत्सन्धिस्थलेष्वाकुञ्च्य, पूर्णावनतशिराः सङ्कुचिताङ्गो वर्त्तत इति प्रकृतिः । अतोऽन्यथाभावे तु कष्टप्रसूतिरिति तत्तदुदयविशेषव्याख्यानेन स्पष्टं भविष्यति । ( ३८ चित्रम् ) ।

आहुश्च प्राञ्चः—

(१) आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियः । —सु० शा० ५ ।

(२) गर्भस्तु मातुः पृष्ठाभिमुख ऊर्ध्वशिराः सङ्कुच्याङ्गान्यास्तेऽन्तःकुक्षौ । —च० शा० ६ ।

(३) गर्भस्तु खलु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्गो गर्भकोष्ठे दक्षिणपार्श्वमाश्रित्यावतिष्ठते पुमान्, वामं स्त्री, मध्यं नपुंसकम् ।

—सङ्ग्रहशा० २ ।

(४) कथं गर्भो मातुरुदरे तिष्ठतीति ? ऊर्ध्वमिति शौनकः । अवाक्शिरा इति भरद्वाजः । नेत्याह भगवान् पुनर्वसुरात्रेयः । यदूर्ध्वं तिष्ठेत्

---

गर्भाङ्गसंस्थितिः Attitude or Posture.

तर्हि मातृमातिरः स्यात् । यद्यवाक्छिरास्तदा स्वमातिरः स्यात् । कथं तर्हि ! तिर्यक् सर्वैरयमङ्गप्रत्यङ्गैः प्रतिभुग्नः शेते । —भेलसंहिता ।

[ ३८ चित्रम् ]

गर्भाङ्गसंस्थितिः ।



यथा हि गर्भो गर्भाशये सङ्कुच्याङ्गान्यास्ते तथाऽत्र निदर्शितः ।

गर्भावस्थितिः—गर्भावस्थितिर्नाम गर्भस्य दीर्घान्तरेखाया गर्भाशयस्य चानुलम्बान्तरेखायाः परस्परापेक्षमवस्थानम् । अनुलम्बानुप्रस्थतिर्यग्भावा-

---

गर्भावस्थितिः Lie. दीर्घान्तरेखा Long axis. अनुलम्बान्तरेखा Vertical axis

नामन्यतमेनावस्थानाच्च त्रिविधसंस्थाना गर्भान्तस्थितिः । तत्रानुलम्बभावे शिरोऽवतरणं श्रोण्यवतरणं वा, अनुप्रस्थतिर्यग्भावे तु पार्श्वावतरणं भवतीत्यवधेयम् ।

गर्भावतरणम्—गर्भावतरणं नाम गर्भाङ्गविशेषस्य योनिमुखात् प्राक् प्रतिपत्तुकामस्य गर्भाशयद्वारे सान्निध्यभावेनावस्थानम् । तत्राङ्गविशेष·

[ ३६ चित्रम् ]

गर्भावतरणानि विभिन्नोदयाश्च ।



१—शिरोवतरणे शीर्षोदयः । २—शिरोऽवतरणे मुखोदयः ।
३—शिरोऽवतरणे ललाटोदयः । ४—श्रोण्यवतरणम् ।
५—पार्श्वावतरणम् ।

गर्भावतरणम् Presentation.

मधिकृत्य त्रिविध: प्रविभागोऽस्य क्रियतेऽनेकधा च प्रत्यङ्गोपाङ्गविशेषम्। अयमाशय:—शिरोऽवतरणं, श्रोण्यवतरणं, पार्श्वावतरणञ्चेति अङ्गविशेषकृतम् अवतरणत्रयं भवति। अवतरणकाले च एषामङ्गानां सङ्कोचप्रसाराद्यवस्थाभेदेन तानि तानि प्रत्यङ्गोपाङ्गानि अग्रतः प्रतिपद्यमानानि उदयाख्यांस्तांस्तानवान्तरभेदान् जनयन्तीति (३९ तमं ४० तमं च चित्रम्)। तद्यथा—

शिरोऽवतरणम् ९६ %
- शीर्षोदय: ९५·५ %
- ललाटोदय: ०·१ %
- मुखोदय: ०·४ %

श्रोण्यवतरणम् ३·५ %
- स्फिग्पादोदय:
- स्फिगुदय:
- जानूदय:
- पादोदय:

पार्श्वावतरणम् ०·५ %
- स्कन्धोदय:
- कूर्परोदय:
- हस्तोदय:

---

शिरोऽवतरणम् Head or Cephalic presentation. श्रोण्यवतरणम् Breech or Pelvic presentation. पार्श्वावतरणम् Transverse presentation. शीर्षोदय: Vertex presentation. ललाटोदय: Brow presentation. मुखोदय: Face presentation. स्फिग्पादोदय: Complete or full Breech presentation. स्फिगुदय: Incomplete or frank breech presentation. जानूदय: Knee presentation. पादोदय: foot or footling presentation. स्कन्धोदय: Shoulder presentation. कूर्परोदय: Elbow presentation. हस्तोदय: Hand presentation.

[ ४० चित्रम् ]

श्रोण्यवतरणस्य विभिन्नोदयाः ।



चित्रेऽस्मिन् वामदक्षिणक्रमेण स्फिगुदयः, स्फिग्पादोदयः, पादोदयो, जानूदयश्च प्रदर्शिताः ।

तत्र शिरोऽवतरणमवतरणानां शीर्षोदयश्चोदयानां प्रधानत्वेन प्राकृतत्वेन च परिगण्यते, बाहुल्यदर्शनात् निरुपद्रवप्रसवत्वाच्च । प्रतिशतसंख्यानन्त्वेषामुपरि तत्रैवाङ्कनिर्देशनेनाङ्कितम् ।

कुतोऽथ शिरोऽवतरणबाहुल्यमित्यत्र हेतुद्वयमाचक्षन्ते प्रसूतिविदः—शिरोऽस्य गुरुतरम्, अतोऽर्वाक्शिराः प्रतिपद्यत इत्येकः । गर्भाशयस्य विपुलायतने ऊर्ध्वदेशे पृथुतमा गर्भश्रोणिः, स्वल्पायतनेऽधस्तनदेशे च हीनायतनं गर्भशिरोऽनुकूलतया स्वभावतः सन्तिष्ठत इत्यन्यः । ( ४१ चित्रम् ) ।

प्राञ्चोऽप्याहुः—

( १ ) तस्य यदुत्तरं तत् प्रथमं प्रतिपद्यते । तस्मात्तस्य शिरः प्रथमं पुनर्वसुरात्रेयः प्रतिपद्यते, तदस्य गुरुतरं भवतीति ।

—भेलसंहिता ।

( २ ) स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ।

—सु० शा० ५ ।

[ ४१ चित्रम् ]

गर्भस्य गर्भाशयानुकूलता।



अत्र गर्भश्रोणिशिरसोर्गर्भाशये यथानुकूलावकाशं स्वाभाविकस्थितिः प्रदर्शिता।

( ३ ) स चोपस्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवृत्यावाक्-शिरा निष्क्रामत्यपत्यपथेन, एषा प्रकृतिर्विकृतिः पुनरतोऽन्यथा।

—च० शा० ६।

गर्भासनानि—गर्भासनानि नाम तथावस्थितस्य गर्भस्य यथावतरणं यथोदयं वाऽवयवविशेषमधिकृत्य मातुः श्रोण्याः खण्डचतुष्टयेन सह सम्बन्धव्यापकानि गर्भाधिशयनविशेषरूपाणि। स्त्रीश्रोणिर्हि पूर्वापरभेदेन वामदक्षिणभेदेन च चतुर्षु समानखण्डेषु विभज्यते। वामपूर्वम्, दक्षिणपूर्वम्, दक्षिणपश्चिमम्, वामपश्चिमञ्चेति च खण्डनामक्रमः। अवयवविशेषस्य यथाखण्डक्रमावस्थानेन च गर्भासनानामपि प्रथमासनम्, द्वितीयासनम्, तृतीयासनम्, चतुर्थासनमिति चत्वारो भेदा भवन्ति। अवयवावधारणे तु शीर्षोदयेऽनुशीर्षम्, मुखोदये चिबुकम्, श्रोण्यवतरणे त्रिकम्, पार्श्वावतरणे चांसकूटमधिक्रियते। यथास्थलं चैषां व्याख्यानम्। इह तु केवलम् अनुशीर्षासनमात्रं निदर्शनतयोदाहरिष्यामः। तद्यथा—

( १ ) वामपूर्वानुशीर्षासनम्:—अत्र हि मातृपृष्ठाभिमुखस्य अवाक्शिरसश्च गर्भस्य मध्यसीमन्तः श्रोणिकण्ठस्य दक्षिणतिर्यग्व्यासम्, अनुशीर्षभागो वामश्रोणिगवाक्षम्, ललाटदेशश्च दक्षिणत्रिकजघनसन्धानमधितिष्ठति।

प्रायशश्च प्रथमासनस्यैव बाहुल्यं दृश्यते। यतो हि—( क ) गर्भाशयगुहा उदरगुहानुकारा भवति, सा च पूर्वतः कोरोदरा पश्चिमतश्च कटिपृष्ठवंशस्योत्सन्नत्वादुन्नतोदरा। गर्भस्तु मातृपृष्ठाभिमुखो विपरीताकारतया आनुकूल्यमनुभवन् स्वात्मानं तथावस्थानेन सङ्गमयति। ( ख ) स्त्रिया हि श्रोणिकण्ठस्य दक्षिणतिर्यग्व्यासो वामतिर्यग्व्यासादनुप्रस्थव्यासाच्च दीर्घतमः, यथाक्रमं तयोर्गुदनलिकावस्थानेन मांसपेश्यवस्थानेन च ह्रस्वीभावात्। तथा च गर्भशिरः स्वकीयं दीर्घतमं व्यासं दीर्घतमे दक्षिणतिर्यग्व्यासे सङ्गमय्य सुखमवतिष्ठत इति।

---

गर्भासनानि Positions. अनुशीर्षम् Occiput. चिबुकम् Mentum. त्रिकम् Sacrum. अंसकूटम् Acromion. (१) Left occipito-anterior or L. O A.

[ ४२ चित्रम् ]

शीर्षोदये गर्भासनचतुष्टयम् ।




१—वामपूर्वानुशीर्षासनम् । २—दक्षिणपूर्वानुशीर्षासनम् ।

३—दक्षिणपश्चिमानुशीर्षासनम् । ४—वामपश्चिमानुशीर्षासनम् ।

(२) दक्षिणपूर्वानुशीर्षासनम् :—अत्र च मातृपृष्ठाभिमुखस्य अवाक्शिरसश्च गर्भस्य मध्यसीमन्तः श्रोणिकण्ठस्य वामतिर्य्यक्व्यासम्, अनुशीर्षभागो दक्षिणश्रोणिगवाक्षम, ललाटश्च वामत्रिकजघनसन्धान-मधिशेते ।

(३) दक्षिणपश्चिमानुशीर्षासनम् :—इह खलु मातुरुदराभि-मुखस्यावाक्शिरोगर्भस्य मध्यसीमन्तः श्रोणिकण्ठस्य दक्षिणतिर्य्यक्व्यासम्, अनुशीर्षदेशो दक्षिणत्रिकजघनसन्धानम्, ललाटभागश्च वामश्रोणिगवाक्ष-मधितिष्ठति ।

(४) वामपश्चिमानुशीर्षासनम् :—अत्र तु निम्नशिरसा मातु-रुदराभिमुखस्य च गर्भस्य मध्यसीमन्तः श्रोणिकण्ठस्य वामतिर्य्यक्व्यासम्, अनुशीर्षभागो वामत्रिकजघनसन्धानम्, ललाटदेशश्च दक्षिणश्रोणि-गवाक्षमाश्रयत इति ।

प्रतिशतसंख्यानं त्वेषां यथाक्रमं ७० %, ८ %, २० %, २ % चेति विदाङ्कुर्व्वन्तु ।

---

(२) Right Occipito.anterior or R. O. A.

(३) Right Occipito-posterior or R. O. P.

(४) Left Occipito-posterior or L. O. P.

## प्रथमोऽध्यायः ।

### अथातो गर्भिणीवैलक्षण्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

गर्भाधानात् प्रभृति धृतगर्भायाः स्त्रियाः शरीरे यद् यद् वैलक्षण्यमभिजायते तदस्ति विज्ञेयमित्यध्यायोपक्रमः। जननाङ्गान्येव च परिवर्त्तनानां प्रधानभूमिः। तत्र केचन विशेषा अङ्गानां रक्तातिसञ्चारमूलाः, केचन च परिवर्धमानगर्भाशयकृतपीडनजन्या, अपरे हि संवर्धमानगर्भस्य पोषणकार्यनिमित्ता, इतरे तु केवलं मातुः प्रकृतिसंक्षोभनिदाना भवन्ति। तद्यथा—

गर्भाशयः—वर्द्धिष्णुगर्भस्य सन्धारणाय गर्भाशयोऽपि यथागर्भमभिवर्धते। तेनैव च गुर्विण्या उदरवृद्धिः। "गर्भो जठराभिवृद्धिम्" इति सुश्रुतः (सू० १५)। सोऽयं व्यतीते गर्भवासकाले प्रायेण द्वादशादिचतुर्दशान्तप्राङ्गुलदीर्घः सार्धनवप्राङ्गुलप्रस्थोऽष्टादिनवान्तप्राङ्गुलवेधश्च सञ्जायते पादोनशेटकादिसार्धशेटकान्तभारः। धारणक्षमता चास्य सार्धशतद्वयात् शतत्रयं यावत् घनप्राङ्गुलप्रमाणाऽभिमता।

कार्ये चास्मिन् गर्भाशयस्य तिस्रोऽपि प्राचीरिकाः परिवर्त्तन्ते। तत्र श्लैष्मिकवृतिर्यथा गर्भधरकलायां परिणमति, तदुक्तं प्राक्। पेशीसूत्राणां कायमानवर्धनात् नूतनपेशीसूत्राणाञ्चाविर्भावात् पैशिकवृतेर्विशेषेण स्थूलतापादः। तत्रादौ समग्रगर्भाशयस्य मांसधातुर्वर्धते। तृतीयमासात्परं तु केवलं गात्रस्कन्धयोरेव वृद्धिर्न तु ग्रीवायाः। अपरानिर्माणस्थले तु सर्वतोऽधिका पृथुता दृष्टा। अथ चारम्भिकमासेषु मांसधातुर्भृशमुपचितिं गच्छति। तेन च गर्भाशयस्य कायमानवर्धनेऽपि न तत्स्थूलतायाः प्रमाणहानिः। तदा गर्भापेक्षया गर्भशय्यैव शीघ्रतरं वर्धते। उत्तरमासेषु

तु गर्भवृद्धिना गर्भाशयवृद्धेरभिभवात् गर्भाशयः स्फीतिकृतां तनुतामेवोपगच्छति। अत एव व्यतीते गर्भकाले प्राङ्गुलार्धात् किञ्चिन्न्यूनैव तत्स्थू-

[ ४३ चित्रम् ]

पूर्णप्रवृद्धो गर्भाशयः।



( पूर्वतो दृष्टः )

लता दृष्टा। किञ्च, संयोजकतन्तुराशेरपि वर्धनात् पैशिकवृतेस्त्रिधा स्तरविभागोऽपि गर्भिण्याः स्फुटं प्रतीयते। तत्र मध्यस्तरस्य पेशीसूत्राणि

सन्दंशानुकारेण सिराधमनीः परितः संवेष्ट्य तिष्ठन्ति दृढं पीडयन्ति च ताः सङ्कोचकाले गर्भाशयस्य । तथा च प्रकृत्यैव प्रसवोत्तरभाविन्या रक्तस्रुतेरवरोधः ।

परिवेष्टिकवृतिरपि च स्तोकं स्थूलतामुपयाति । अत्र च कदाचित् किक्किसानीव विदरणरेखा दृश्यन्ते । गुर्विण्या गर्भाशयनाडीसिराधमनी-रसायनीनामपि विशेषेणायतनवृद्धिर्दृष्टा । श्रूयते हि अवनाडीगण्डे द्विगुणायतने भवत इति ।

किञ्च, आद्यमासत्रये विवृद्धकायमानभारो गर्भाशयो गोलकाकृति-र्भवति, निमज्जति च स्तोकेन श्रोणिगुहायाम् । अत एव तदा गर्भिण्या वस्तिशीर्षं ( भगसन्धानिकाया उपरिष्टात् स्थिता वस्तिदेशः ) निम्नी-भूतमिव संलक्ष्यते, मूत्राशयगुदनलिकयोः प्रपीडनात् मुहुर्मुहुर्मूत्रणादि-सम्पीडनलक्षणानि च प्रादुर्भवन्ति । चतुर्थे तु मासे गर्भाशयस्कन्धः श्रोणिकण्ठिकां रेखामधिकुरुते, उत्तरोत्तरं च ततः परं मातुरुदरे उपर्युप-र्य्येव गच्छति । एवमुद्गच्छंश्च गर्भाशयः प्रायेण क्षुद्रान्त्राणि वामत ऊर्ध्वञ्च प्रक्षिपति, स्वयं च किञ्चिद् दक्षिणतोऽपसृतः स्वाक्षे विवर्त्तते । तथाविवृत्तस्य च वामधारा उदरपूर्वभित्तिं दक्षिणधारा च दक्षिणवृक्क-मारोहिबृहदन्त्रं च स्पृशतः । गर्भाशयस्य मध्यमस्थितिर्वामतोऽपसरणं वा क्वचिदेव दृष्टम् । षष्ठमासात्परं तु गोलकाकृतिर्गर्भाशयोऽण्डाकृतौ परिवर्त्तते । न च गर्भाशयस्याकृतिनिर्माणे पारिपार्श्विकाङ्गानां सम्पर्कोकृतः प्रभावो दृश्यते, गर्भाशये मन्दमन्दसङ्कोचलहरीणां सततसमुत्थानेन तत्प्र-भावविलुम्पनात् ।

अयन्तु तावत् वर्धमानगर्भाशयस्य मासिकसीमनिर्देशः—प्रायिकश्चायं, गर्भस्य कायमानभेदात् गर्भोदकस्य परिमाणभेदात् औदर्यपेशीनां दृढशिथि-लाद्यवस्थाभेदाच्च सीमभेदसम्भवात् । उदरस्पर्शेन मापनयन्त्रेण च गर्भाशयसीमानं विज्ञाय गर्भकालः स्थूलतो विनिर्णीयते । भगसन्धानि-कातो गर्भाशयस्योर्ध्वधारां यावत् यवकेषु यन्मानमायाति तस्य सार्धत्रि-

भिर्विभजनेन गर्भकालस्य मासिककालः प्राप्यते। तत्र द्वितीये मासि नारङ्गाकृतिर्गर्भाशयः श्रोणिसीमानं नातिक्रामति, अतः स्पर्शाऽविषयः। तृतीये प्रगल्भगर्भशिरोमानो भवति, ऊर्ध्वधारा चास्य भगसन्धानिकाया उपरिष्टात् स्पर्शनवेद्या। चतुर्थे भगसन्धानिकाया उपरि चतुःप्राङ्गुलं नाभिसन्धानिकयोर्मध्यं वा यावत् प्रसरति। पञ्चमे नाभेर्द्व्य-

[ ४४ चित्रम् ]

वर्धमानगर्भाशयस्य सीमनिर्देशः।




चित्रेऽस्मिन् सीमनिर्देशः सप्ताहक्रमेण कृत इत्यवधेयम्। अथ च मासशब्दोऽपि सर्वत्र चान्द्रमासपरक एव विज्ञेयो न तु सौरमासपरः।

ङ्गुलमधस्ताद्वर्त्तते। षष्ठे नाभिशीर्षमधितिष्ठति। सप्तमे नाभितस्त्र्य-ङ्गुलमूर्ध्वं प्रवर्धते। अष्टमे नाभ्यग्रपत्रयोर्मध्यमधिकुरुते। नवमे अग्रपत्रं यावत् प्रगतो भवति। दशमे तु निम्नतः किञ्चन निपत्य ( उत्थिताया एव न तु शयानायाः ) अष्टममासोक्तसीमानमधितिष्ठति। कुक्षेरवस्रंसनादेव च आसन्नप्रसवायाऽधोभागस्य गौरवं विमुक्तबन्धनत्वमिव च वक्षसोऽनुभू-

यते*। पञ्चममासात् परतः प्रतिमासं गर्भाशयस्य सार्धयवकत्रयप्रमाणेन वृद्धिर्भवतीति तु सामान्यो नियमः।

**गर्भाशयग्रीवा**—अत्र पुनः स्थान-स्पर्श-वर्ण-प्रमाणेषु वैलक्षण्यं दृश्यते। तद्यथा—(१) आदौ गर्भाशयस्य श्रोणिनिमज्जनेन योनिगतो ग्रीवाभागोऽपि स्तोकेनावाक् प्रतिपद्यते, ततश्चोद्गच्छता गर्भाशयेन सहाकृष्यमाण ऊर्ध्वम्। सहैव च पुरतो वक्रीभूतः पूर्वयोनिकोणमपि ह्रसयति। न चातः सुखेन योनिपरीक्षणकाले प्रतीयते। (२) रक्त-लसीकागमवर्धनाच्च गर्भाशयग्रीवाभागो नासाग्रवत् कठिनस्पर्शोऽपि धृतगर्भायाः स्त्रिया ओष्ठवन्मृदुस्पर्शो ईषच्छूनश्च सम्पद्यते। अवरुध्यते च ग्रीवासरणिर्दृढया श्लेष्मार्गलिकया। तदेतन्मार्दवं प्रायेण द्वितीये मासि ग्रीवाबहिर्मुखादारभ्य शनैरूर्ध्वं प्रसरति, निखिलामपि च गर्भाशयग्रीवां कालेनाभिव्याप्नोति। अन्तर्मुखसमीपत आरभ्य नीचैः प्रसरतीति तु केचित्। (३) वर्णश्चास्या रक्तातिसञ्चारहेतुतया आरक्तनीलवर्णोऽभिजायते। (४) गर्भकाले ग्रीवासरण्या उत्तरभागः शनैः शनैरुत्तराधरक्रमेण विस्फारितो भवति, निमोति चेत्थम् अधरगर्भशय्यां नाम गर्भाशयस्य स्थालिकायतं प्रसवनिष्क्रियमधरभागम्। एवं कायमानहानाच्च योनिपरीक्षणकाले गर्भाशयग्रीवा ह्रस्वीभूतेव प्रत्ययमावहति। इतरे त्वाहुः—आसन्नप्रसवाया एव ग्रीवोत्तरभागः स्फारितो भवति, तस्माद् गर्भकाले गर्भाशयग्रीवा वस्तुतो न ह्रस्वायते। ह्रस्वताप्रतीतिस्तु भ्रान्तैव, वर्धमानगर्भाशयगात्रेण सह ग्रीवाया ऊर्ध्वमाकर्षणात्, ग्रीवाया मार्दवेन तत्स्थौल्यस्य सम्यगप्रत्ययात्,

---

*"जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने" —सु० शा० १०।

"कुक्षेश्च स्यादवस्रंसस्त्वधोभागस्य गौरवम्" —जातिसूत्रीये कश्यपः।

"विमुक्तबन्धनत्वमिव वक्षसः" —च० शा० ८।

**श्लेष्मार्गलिका** A firm plug of mucous known as operculum. **आरक्तनीलवर्णः** Violet colour. **अधरगर्भशय्या** Lower Uterine segment.

योनिप्राचीरस्य मृदुशूनशिथिलत्वात्, अन्तर्योनिकग्रीवांशस्य पुरतो वक्रीभावाच्चेति । स्मर्त्तव्यश्चात्र—अधरगर्भशय्या गर्भाशयगात्राधरभागस्य विस्फारेण जायते, गर्भधरकलावृतत्वात्तस्या इत्येके । ग्रीवोत्तरभागस्य विस्फारेण तन्निर्मितिः, ग्रीवाश्लेष्मलकलायास्तत्र दर्शनादिति चान्ये। ग्रीवायाः श्लैष्मिककला गर्भधरकलायां न परिवर्त्तत इति तूक्तमेव। केचित्तु व्याहरन्ति, उभयथाऽप्युपपत्तिर्नत्वेवकारः । अपरे त्वाचक्षते, ग्रीवाया उत्तरतृतीयांशो गर्भधरकलयाऽधरद्वितीयांशश्च ग्रैवश्लेष्मलकलया आवृतस्तिष्ठतीति ।

बीजवहस्रोतसी बीजग्रन्थी च :—अत्रापि रक्तातिसञ्चार आयतनवृद्धिश्च । तत्र बीजवहे स्रोतसी गर्भाशयवृद्ध्याऽऽकृष्यमाणे दीर्घायते भवतः, प्रलम्बेते च गर्भाशयपार्श्वयोस्तत्सन्निहिते । गर्भाशयस्कन्धभागस्य च वर्धनात् स्रोतसी इमे गर्भकालान्ते गर्भाशयस्य मध्योत्तरतृतीयांशयोः संयोगस्थले लग्ने इवोपलभ्येते ।

विवृद्धायतनौ बीजग्रन्थी अपि बीजवहस्रोतसोर्बाह्यतः पश्चिमतश्च वर्त्तमानौ गर्भाशयपार्श्वसन्निधावेवोपतिष्ठतः । तयोरान्तरावस्थानं च पूर्वोर्ध्वजघनकूटाभ्यामुदरबहिस्तले सूच्यते । गर्भाशयस्य स्वाक्षविवर्त्तनाच्च पूर्वतो नीतो वामग्रन्थिरुदरपूर्वभित्तेः, दक्षिणग्रन्थिश्च पश्चिमतो गत उण्डुकस्य सान्निध्यं भजते । ग्रन्थ्योरन्यतरश्च पीतपिण्डावस्थानात् विशेषेण विवृद्धायतनो दृष्टः ।

योनिः —पुना रक्तातिपूर्णतया प्रचुरनिःस्रवा नीलवर्णा स्थूलशिथिलप्राचीरा स्फीतकुटिलसिरा खरस्पर्शा च सञ्जायते । अथ चादौ गर्भाशयस्य श्रोणिनिमज्जनेन तस्या ह्रस्वायतत्वं ततश्च तदुद्गमनेन दीर्घायतत्वं विवृतभगद्वारत्वं चापि दृष्टम* ।

---

* "योन्याश्चाटालत्वम्" —च० शा० ४ ।

"योनिरोमसंलुलनम्" —संग्रहशा० २ ।

"योनिर्न प्रस्रवतीति" मृतगर्भलक्षणेऽग्निवेशः, तेनाऽत्र जीवद्गर्भे योनिः प्रस्रवतीत्यर्थागमाद्बोद्धव्यम् ।

श्रोणितलभूमिः :—गर्भभरेण पीडिता श्रोणितलभूमिरपि निर्गम-द्वारतलाद् लम्बमाना प्रोत्सन्नेव सँल्लक्ष्यते। अगर्भायाः प्राङ्गुलैक-प्राया या उत्सन्नता सैव गर्भिण्या गर्भकालान्ते पादोनप्राङ्गुलचतुष्टय-माना दृष्टा। अत एवानुन्त्रिकभगसन्धानिकयोः ५$\frac{३}{४}$ प्राङ्गुलप्रायः स्थला-न्तरालोऽपि धृतगर्भायाः स्त्रियाः १०$\frac{१}{४}$ प्राङ्गुलप्रमाणतामधिगच्छति।

त्वक् :—त्वचि तु गर्भिण्या विविधरूपाणि परिवर्त्तनानि जायन्ते। तद्यथा—किक्किसावाप्तिः, रञ्जनकणनिचयः, स्वेद-पूति-ग्रन्थिस्रावप्राचुर्यम्, रोमाभिवृद्धिः, वसोपचयश्चेति। तत्र स्तनोदरसक्थिनितम्बेषु किक्किसानि, चूचुकस्तनमण्डलोदरसीवनीग्रीवामुखमण्डलेषु रञ्जनकणनिचयः, कट्यू-रुस्तननितम्बेषु च वसोपचयः। किक्किसा नाम चर्मान्तर्विदरणजन्यास्त्व-ग्रेखाः, पूर्वं तनुतररक्तवर्णाः श्यावाभा वा पश्चाच्च श्वेताभाः। "किक्कि-सश्चर्मविदरणम्"—इति चक्रपाणिः। "ऊरुस्तनादुरे वलिविशेषा रेखा-कारास्तत्काले प्रायो ये जायन्ते ते किक्किससंज्ञाः" इति चारुणदत्तः*।

उदरभित्तिः :—गर्भाशयस्य श्रोणिनिमज्जनात् प्राक् वस्तिशीर्षदेशस्य निम्नीभावः, ततश्च शनैः शनैर्गर्भाशयोद्गमनात् जठराभिवृद्धिः। "गर्भो जठराभिवृद्धिम्"—सु० सू० १५। नाभिरपि गर्भिण्याः क्रमेणोन्नमतो षष्ठे

---

* "तत्र सप्तमे मासि गर्भस्य केशाः प्रजायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते। तन्नेति भगवानात्रेयः। किन्तु गर्भेणोत्पीडिता वातपित्त-श्लेष्माण उरः प्राप्य विदहन्ति। ततः कण्डूरुपजायते। कण्डुमूला किक्किसावाप्तिः"—च० शा० ८।

गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः।
कण्डुं विदाहं कुर्व्वन्ति गर्भिण्याः किक्किसानि च॥"

—वा० शा० १।

सप्तमे वा मासि लुप्तगाम्भीर्या, ततश्च बहिरुद्वृत्ता सञ्जायते। परितो नाभिं रञ्जनकणानिचयात् वर्णमण्डलमपि प्रादुर्भवति। नाभिमण्डलमिति च

[ ४५ चित्रम् ]

किक्किसरेखाः।



स्तनस्य कृष्णमुखतापि लक्षणीया।

---

नाभिमण्डलम् Umbelical areola.

तत्संज्ञानम् । एवं भगपीठान्नाभिं यावत् ( क्वचित् अग्रपत्रं यावदपि ) प्रसृता वर्णराजिरपि आयतमूला उपलभ्यते । "रोमराज्युद्गमः"—सु० शा० ३ । "स्थिते रक्ते रोमराजिः प्रादुर्भवति"—सङ्ग्रहशा० २ । "स्त्रिया नाभेरधो रोमराजिः प्रादुर्भवति"—इति चेन्दुः । उत्तरगर्भकाले च प्रायेणोदरभित्त्युत्तंसनात् चर्मान्तर्विदरणेन किक्किसानामाविर्भावः । किक्कसरेखाश्च भगसन्धानिकाल: समुत्थाय धनुर्वक्रतयोर्ध्वं विसरन्तो-त्यवधेयम् ।

स्तनौ :—द्वितीयमासादारभ्यैव स्तनयोर्गौरवं स्फुरणञ्चाप्यनुभूयते । रक्तागमस्य ग्रन्थि वतुनो वसास्नायुतन्तूनां च वर्द्धनात् क्रमेण परिवर्धमानौ पीनोन्नतौ कठिनस्पर्शावुद्गतसिराप्रतानौ च सम्पद्येते । चूचुकस्तनमण्डल-योश्च तृतीये मासि रञ्जनकणनिचयात् कृष्णवर्णता, प्रहर्षभूयस्त्वञ्च चूचु-कस्य । स्तनमण्डले च पूतिग्रन्थिमुखानां स्फायनात् पिडकायिते इव जायेते । 'धान्यकोद्भेद' इति च पिडकाविर्भावस्य लौकिकसंज्ञानम्, धन्याकबीज-कणसादृश्यात् स्तनपिडकानाम् । स्तनयोरतिपीनत्वे किक्किसोत्पत्तिरपि । पञ्चमपष्ठयोश्च प्रायेण स्तनमण्डलं परित 'उपमण्डलम्' अपि प्रकटीभवति । मन्दप्रभविन्दुकाचितत्वाच्च मधुच्छत्रमिव तल्लक्ष्यते । स्तन्याविर्भावश्च प्रायेण तृतीयात् परमेव दृष्टः । तत्रादौ तन्वल्पः स्नेहद्रवो निर्याति, उत्तरगर्भकाले च गाढप्रचुरः । 'पीयूषम्' इति च गर्भकालस्तन्यस्य विशेष-संज्ञानम् । भवन्त्यपि—

स्तनयोः कृष्णमुखता । ( सु० शा० ३ )

स्तनयोः स्तन्यमोष्ठस्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थम् (च० शा० ४) ।

---

वर्णराजि: Linea nigra. किक्किसानि Striae gravidarum. स्तनमण्डलम् Primary areola. स्तनपिडकाः Montgomery's tubercles or follicles. उपमण्डलम् Secondary areola. पीयूषम् Colustrum.

तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति । ( सु० शा० ४ )

धमन्यः संवृतद्वाराः कन्यानां स्तनसंश्रिताः ।
तासामेव प्रजातानां गर्भिणीनां च ताः पुनः ॥
स्वभावादेव विवृता जायन्ते............। ( सु० नि० १० )

**रक्तवहसंस्थानम्:**—गर्भपोषणार्थमधिकं सचेष्टस्य मातृहृदयस्य दक्षिणभागो विस्फारितो भवति मनाक्स्थूलश्चेत्युरःफलकात् दक्षिणतोऽङ्गुलिताडने विशेषेण जडध्वनिश्रवणादनुमीयत इति केचित् । तन्नेत्येके, गर्भाशयवृद्ध्या महाप्राचीरोन्नमनेन हृत्स्थानापसृतिकृतो ध्वनिजाड्यविशेष इत्यन्यथाऽपि तदुपपत्तेः । अधिकं विक्षिपतो वामनिलयस्य तु स्तोकेनाभिवृद्धिरुपपन्ना । अनुभूयते च गर्भिण्या बहुधा हृत्स्पन्दनमपि ।

रुधिरञ्चास्या मानतो विवृद्धम्, आप्योपादानबहुलम्, अचिरेण स्कन्दनशीलम्, हीनरक्तकणिकम्, स्तोकाधिकश्वेतकणिकञ्च सञ्जायते । श्वेतकणिकातिशयश्च आसन्नप्रसवाया विशेषेण दृश्यते, निवर्त्तते च ततः परं द्वित्रेष्वहःस्वेव । रक्तस्य क्षारीयता सापेक्षगुरुतापि च हीयेते । रक्तभारस्तु प्रायेण सन्निहितप्रसवाया एव स्तोकेन वर्धमानो दृष्टः । हृदयस्य प्रवृद्धबलं मातृगर्भयोः शारीरविषञ्च रक्तभाराधिक्ये हेतुः । गर्भिण्याः श्रोणिगताः सिराश्च गर्भभरेण पीडिता न रक्तं यथावत् प्रतिनेतुं क्षमन्त इति पादादिषु सिरास्फीतिः शोफश्च । योनिगुदान्तरीयसिराणां स्फारीभावेन चार्शोनिर्वृत्तिः ।

**मूत्रवहसंस्थानम्:**—आप्योपादानबहुलतया रक्तस्य, परिवृद्धया रक्तभारस्य, रक्तातिपूर्णतया वृक्कयोः, निष्कासनेन च गर्भशरीरमलस्य गर्भिण्या दैनिकमूत्रराशिमानं वर्द्धते । मूत्रयति च सा मुहुर्मुहुराद्यन्तेषु कतिपयसप्ताहेषु गर्भाशयपीडितमूत्राशया मूत्रगताम्लतादिना संक्षुब्धमूत्राशया च । तत्रादौ सन्निहितस्य गर्भाशयस्य पूर्वावनमनात्, अन्ते

मूत्रगताम्लतादिः = Hyperacidity, increase of urates or phosphates.

चोर्ध्वं प्रगतस्यापि तस्य स्तोकेनाधोनिपतनात् स्वभावत एव मूत्राशयो निपीड्यते ।

नात्रजनिकद्रव्याणि च प्रायेणोत्तरगर्भकाले समावश्यकनत्रजनावरोधान्मानतो हीयन्ते । अत एव तदा गर्भिण्या गुरुगात्रत्वापत्तिर्गर्भस्य च कायमानोपचयो विशेषेण दृष्टः । अण्डलाला शर्करा चापि यदा तदा स्वल्पमुपलभ्यते । तत्राण्डलाला अनुवृक्करक्तवाहिनीप्रपीडनहेतुकेति केचित् । गर्भशरीरविषसञ्चारप्रभावमूलेत्यन्ये । योन्यास्रावमिश्रणजनितापि चेत्यपरे । अण्डलालाया नियतप्रचुरोपस्थितिस्तु भयावहा । एवं शर्करापि प्रायेण दुग्धशर्करैव स्तनग्रन्थिसमुत्साहमूला उपलभ्यते । इक्षुशर्करालाभस्तु पुनर्विकृतिरेव ।

रसपाकविधिः :—सुक्षुद्वती हि गर्भिणी गर्भपोषणाय भूयांसमाहारमुपभुङ्क्ते, रसपाकविधिश्चास्या विशिष्यते स्तोकेन । स तु विशेषो धातुषु नत्रजनचयः, मूत्रद्रव्यनिर्गमप्रमाणहानिः, वसोपचयः, प्रतनकग्रहः, सुधासङ्ग्रहश्च । अथ च गर्भो माधुरकं वाञ्छति । यदि चेन्मातुराहारे तत्पूरकद्रव्याणां न्यूनता स्यात्तर्हि मातुर्यकृद्गतमाधुरकमपि गर्भेणाह्रियते । तेन च मातृयकृतो माधुरकं हीयते । यकृन्माधुरकक्षयात् वमनातिरेक इति तु केचित् ।

सुधासङ्ग्रहश्च आहारगते सुधाराशौ प्रस्फुरद्रव्यराशौ जीवनीयद्रव्यचतुर्थे क्षुद्रान्त्राणामम्लताधिक्ये च निर्भरो भवति । एभिश्च विकारनि-

---

नात्रजनिकद्रव्याणि—Uria, Uric acid, Ammonia compounds, Kreatin and Kreatinin. अण्डलाला Albumen. शर्करा Sugar. दुग्धशर्करा Lactose. इक्षुशर्करा Glucose. नत्रजनः Nitrogen. प्रतनकम् Protein. सुधा Calcium. माधुरकम् Glycogen. प्रस्फुरःPhosphorus. जीवनीयद्रव्यचतुर्थम् Vitamin D.

करैर्मातुः सुधात्तयोऽनुमातव्यः, तद्यथा—अस्थिमार्दवम्, कृमिदन्तता, पेशीनामुद्वेष्टनम, वातनाडीशूलम, वमनानुबन्धः, उदरगर्भाशयपेशीनां शैथिल्यम्, त्वग्रोगविशेषाः फक्करोगश्च ।

शरीरभारश्चापि गर्भिण्याः क्रमशोऽभिवर्धते, अन्तिममासत्रये च विशेषेण । अद्यश्वीनायास्तु तनुभारो नियतं हीयत इति बहुभिर्दृष्टम् । अत एवासन्नप्रसवाया लक्षणविशेषो हि स इति त आमनन्ति । गर्भभरेण च गर्भिण्या गुरुत्वकेन्द्रमपि विपर्यस्यते । तेन च सा देहसन्धारणाय पश्चात्कृष्टशिरोंऽसा सती मन्दं मन्दं प्रचलति ।

नाडीसंस्थानम्ः—संस्थानमिदं गर्भकालस्य प्रथमार्धं क्षुब्धमिव सन्तिष्ठते । स्वल्पेनापि च हेतुना कोपावसादावस्य सम्भवतः । धृतिर्भ्रंश्यते । कदाचिदपस्मरति च । प्रातर्ग्लानिर्वमनं लालास्रावः क्षुधाविपर्यासः स्वभाववैपरीत्यं भ्रमः मूर्च्छा प्रलाप उच्चावचेषु भावेषु श्रद्धाप्रणयनमित्येते भावा अपि प्रतिसङ्क्रमितनाडीवेगप्रभवा भवन्ति ।

स्रोतोविहीनग्रन्थयः—धृतगर्भायाः स्त्रिया बहूनां तावदवटुकाप्रभृतीनां ग्रन्थीनामायतनवृद्धिरान्तररसस्रावप्राचुर्य्यञ्च दृश्यते, तत्तत्कार्यविशेषसम्पादनाय । तद्यथा :—( १ ) अवटुकाग्रन्थिः स्तोकेन वर्धते । निःस्रवस्त्वस्य मातुः परिवृद्धरसपाकविधिना सह सम्बद्ध इति तद्विदो भाषन्ते । अवटुकारसक्षयो गर्भविषसञ्चारहेतुरिति पुरातनवादस्तु नानिर्विवादः । ( २ ) पर्यवटुकग्रन्थयोऽपि वृद्धिं गच्छन्ति । आस्रवस्त्वेषां सुधारसपाकविधौ सहायः प्रजास्थापनश्च । ( ३ ) अधिवृक्कग्रन्थी स्वल्पं वर्द्धते । आन्तररसस्त्वनयोर्वहिर्वस्तुसम्भवो रञ्जनकणनिचयसहायः सुधासंवर्त्तनो गर्भाशयोत्तेजनश्च भवति । (४) पोषणकग्रन्थिस्तु विशेषेण वर्द्धते । तत्र पूर्वपोषणिकास्रावः पीतपिण्डान्तररसमनुप्राणयति, गर्भविकासपोषणाभ्यामप्यस्य सम्बन्ध इत्येके । पश्चिमपोषणिकास्रावस्तु रक्तभारसंवर्धनः शोणितवाहिनीनां गर्भाशयस्य च सङ्कोचनो हृन्मान्द्यकरो

मूत्रलश्च भवति । स्तनग्रन्थिपेशीसूत्राणामुत्तेजनेन च स्तन्यं प्रवर्त्तयति । (५) बीजग्रन्थिस्तु पीतपिण्डभवमान्तररसं जनयति । बीजागमक्रिया-वरोधो गर्भवपनसाहाय्यं गर्भाशयवृद्धिरार्तवान्तनिरोधश्चेति च रस-कर्माणि । प्रागोरितं च ( ४६ पृष्ठे ) द्रष्टव्यम् ।

---

# द्वितीयोऽध्यायः ।

## अथातो गर्भनिर्णयविज्ञानीयमध्यायं व्याख्यास्यामः ।

गर्भविनिश्चयो हि गर्भलक्षणज्ञानाधीनः । स चोत्तरमासेषु यथा सुकरो भवति न तथाऽद्ये द्वित्रमासेषु । अवितथप्रज्ञापनन्तु तदा प्रायेणाऽसम्भवमेव । अपेक्षते च वस्तुत आदिकाल एव गर्भनिर्णयो विशेषेण । एवमन्योपद्रुतत्त्वे लाक्षणसाङ्कर्यणापि न सुकरो निर्णयः । मिथ्यानिदानं तु कदाचिदनर्थाय कल्पेत । भिषक् च लोके परिहासास्पदो भवति । तस्मात्तानि तानि गर्भलक्षणानि लक्षणानां च तेषां बलाबलं सुविचार्य गर्भस्य भावाभावस्थितिर्निर्देश्या ।

अग्निवेशश्चात्र :—"उपचारसाधनं ह्यस्य ज्ञाने । ज्ञानं च लिङ्गतः । तस्मादिष्टो लिङ्गोपदेशः" इति ( च० शा० ४ ) ।

निर्निनीपुणा च भिषजा षडिमे प्रश्नाः समाधेयाः :—गर्भोऽस्ति न वा ? कतिमासिको वा गर्भः ? कीदृगवस्थो गर्भः ? कति वा गर्भाः ? अन्योपद्रुतो न वा ? कदा च प्रसवो भविता ? इति ।

### गर्भोऽस्ति न वा ?

गर्भविनिश्चयो हि गर्भलक्षणज्ञानाधीन इत्युक्तम् । लक्षणानि च तानि यथाकालं जायमानानि बलभेदेन त्रिधा प्रविभज्यन्ते हीनबलानि, मध्यबलानि उत्तमबलानि चेति । यथोत्तरं चैषां प्रामाण्यम् । तत्र—

## हीनबललक्षणानि ।

(१) आर्त्तवाऽदर्शनम् :—आद्यमिदं लक्षणम्, यत्सर्वतः प्रथमं गृहीतो गर्भ इति स्त्रियाश्चेतः प्रभावयति । नियमेन पुष्पवतीनां स्वस्थानां चैतत् सहसा समुत्थं गर्भस्थितेर्विशेषप्रत्यायकं भवति । इदन्त्ववधेयम्— पाण्डुयक्ष्मादिषु रोगप्रभावात्, स्तन्यकाले कालप्रभावात्, बालासु अपूर्णाविर्भावात, कुमारीषु कौमार्यहरणे गर्भाशङ्कनात्, युवतिषु गर्भधारणौत्सुक्यात्, प्रौढ़ासु क्षयकालोपस्थानाच्च प्रायेण रजो न दृश्यते । रजोदर्शनप्रारम्भादर्वाक् रजःक्षयादुत्तरं चापि गर्भस्थितिर्दृष्टा । एवं धृतेऽपि गर्भे गर्भस्रावहेतुभिर्द्विगर्भाशयाया वा स्त्रियाः स्वभावेन रक्तस्रुतिर्भवति ।

(२) प्रातर्ग्लानिः—निष्ठीविकास्यस्रवणच्छर्दिहृल्लासरूपं लक्षणमिदं प्रायेण द्वितीयतृतीयचतुर्थमासेषु प्रातरुत्थिताया दृश्यते सप्ततिप्रतिशतम् । पानात्ययाजीर्णयकृत्संहरणरोगपूपलम्भाच्चास्य हीनबलत्वम ।

(३) स्तनपरिवर्त्तनानि :—पूर्वाध्याये (१७१ पृष्ठे) विस्तरशो वर्णितानि । तत्र स्तनयोरापीनता, दार्ढ्यं, स्फुटसिराप्रतानत्वं, पिडकाविर्भावः, कृष्णमुखता, उपमण्डलनिर्माणम्, स्तन्योपस्थितिश्चेति मुख्यलक्षणानि । गर्भाशयबीजग्रन्थ्योरर्बुदेष्वपि प्रायेण लक्षणानीमानि प्रादुर्भवन्ति । किञ्च, यथाद्यासु सगर्भावस्थासु लक्षणानामेतेषामुपयोगित्वं भवति न तथा बहुप्रजाताया: स्त्रियाः, प्रागुत्पन्नलक्षणानां कदाचित्तादवस्थ्यादिति ।

(४) उदरपरिवर्त्तनानि:—आदौ गर्भाशयनिमज्जनात् वस्तिशीर्षस्य निम्नता ( अन्यत्र मेदस्विन्या वाताध्मातोदराया वा ), ततो गर्भाशयवर्ध-

---

हीनबललक्षणानि Presumptive signs and symptoms.

(१) The supression of the menstruation or Amenorrhoea. (२) Morning sickness. (३) Mammary changes. (४) Abdominal changes.

नाऽजठरस्य क्रमेणाभिवृद्धिः, नाभ्युन्नमनम्, रञ्जनकणनिचयः किक्किसानि चेति पूर्वम् ( १६९ पृष्ठे ) उक्तानि । बहुप्रजातायाश्च प्राचीरशैथिल्यात् यथा नाम जठराभिवृद्धिर्दृश्यते न तथा सकृत्प्रजाताया अप्रजाताया वा दृढोदरभित्तेः ।

(५) गर्भस्फुरणम् :—चतुर्थपञ्चममासात् प्रभृति गर्भः स्पन्दते । स्पन्दानुभवे च तात्पर्यम् । वर्धमानो हि गर्भाशयस्तदा प्रभृत्येव जठरभित्त्या सन्निधत्ते, स्पन्दवेगाश्च गर्भाशयभित्तितो जठरभित्तिं प्रतिसङ्क्रमन्ति । प्राक् त्वतो गर्भस्य स्फुरणे मन्दसामर्थ्यात् गर्भोदकातिरेकेण स्पन्दवेगानाम- सङ्क्रमणाच्च न स्पन्दानुभवः । अनुभूयमानमादिमगर्भस्पन्दनं तु मृदु- वेगत्वात् करपुटगतचटकस्फुरणवद् भासते । अप्रजातया च स्त्रिया पूर्वमननुभूतत्वान् गर्भस्फुरणम् अन्त्रस्फुरणेनापि ग्रहीतुं शक्यम्, अन्त्रस्फुर- णञ्च गर्भस्फुरणेन ।

(६) मूत्रप्रसेक :—आद्यन्तेषु कतिपयसप्ताहेषु ( प्रथमद्वितीययोर्नवमे च मासि ) श्रोण्यां निमज्जता गर्भाशयेन सम्पीडितक्षुब्धमूत्राशया हि गर्भिणी मुहुर्मुहुर्मूत्रं प्रसिञ्चति ।

(७) प्रतिसङ्क्रमितवातलक्षणानि :—गर्भकालस्य प्रथमार्धे वातसं- स्थानं पुनर्गर्भिण्याः क्षुब्धमिव सन्तिष्ठते प्रायेण, स्वल्पेनापि च हेतुना कोपा- वसादावस्य सम्भवतः, तत एव च हृल्लासवान्तिप्रसेकप्रभृतीनि प्रतिसङ्क्रमि- तवातलक्षणानि भवन्तीत्युक्तं प्राक् । प्रकृतिविपर्ययः, क्षुन्नाशो, ग्लानिः, श्रद्धाप्रणयनश्चोच्चावचेषु भावेष्वित्ति प्रधानलक्षणानि ।

---

(५) Quickening. (६) Irritability of the Bladder. (७) Various riflex nervous symptoms.

## मध्यबललक्षणानि ।

(१) गर्भाशयस्य कायमानवृद्धिः :—गर्भो वै स:, यो वर्धमानो निरन्तरमविषमं सत्वरं च गर्भाशयमभिवर्धयति । नैवमर्बुदादिकम् । मासानुमासिकी वृद्धिक्रमस्तु गर्भाशयस्य पूर्वमुपवर्णित: ( १६६ पृष्ठे ) ।

(२) गर्भाशयमार्दवम् :—गृहीतगर्भायाः स्त्रिया दृढकठिनोऽपि गर्भाशय आद्येषु सप्ताहेषु मृदुकोमलः सञ्जायते । ग्रीवागात्रमध्यगतो देशस्तु

[ ४२ चित्रम् ]

हेगरलक्षणम् ।



अत्र गर्भाशयस्य विशेषेण मृदुता गतो ग्रीवागात्रमध्यगो भागः सन्दर्शितः ।

विशेषेण मार्दवमुपयातीति हेगरनामकेन केनचित् पाश्चात्यविदुषा परीक्ष्य निर्णीतम् । तेन च तन्नाम्नैव लक्षणविशेषोऽयं ख्यातिमप्युपलभत । तदिदं

---

मध्यबललक्षणानि Probable Signs (१) Enlargement of the uterus. (२) Change in consistency of the uterus ( Hegars' Sign )

सार्धैकमासात् सार्धद्विमासं यावदुपलभ्यते । एष चास्य लक्षणस्य परीक्षाविधिः—

( क ) हस्तैकस्याङ्गुलिद्वयं ( तर्जनीमध्यमे ) एकां वाङ्गुलिं योन्याः पूर्वकोणे निधाय, करेण चापरेण गर्भिण्या उदरं निपीड्य, गर्भाशयपश्चिमतो युग्मविधिना गर्भाशयमभिस्पृशेत्; करद्वयाङ्गुलियोजनाय च प्रयतेत । एवञ्च ग्रीवागात्रमध्यगतो मृदुतमदेशः कोमलत्वातिशयेन विलुप्त

[ ४७ चित्रम् ]

हेगरलक्षणस्य परीक्षाविधिः ।



प्रथमविधिना यथेदं लक्षणं परीक्ष्यते, तथात्र निदर्शितम् ।

---

युग्मविधिः Bimanual Examination.

इव प्रतीयते, गात्रं तु गर्भाशयस्य गोलकाकृति स्वल्पकठिनम्, ग्रीवा चापि कठिनप्राया। किंवा—

(ख) उदरहस्तं भगसन्धानिकाया उपरि श्रोण्यां निमज्ज्य, योनिहस्तस्याङ्गुलिद्वयं योन्याः पश्चिमकोणे स्थापयेत्, प्रयतेत च करद्वयाङ्गुलियोजनाय। अथवा (ग) हस्तेनैकेन उदरद्वारा गर्भाशयमवस्तात्

[ ४८ चित्रम् ]

हेगरलक्षणस्य परीक्षाविधिः।



द्वितीयविधिना यथेदं लक्षणं परीक्ष्यते तथात्र निदर्शितम्।

श्रोणौ निपीड्य, इतरपाणेरङ्गुष्ठं योन्याः पूर्वकोणे तर्जनीं च गुदे संस्थाप्य, गर्भाशयग्रीवागात्रयोः संयोगस्थलं गृह्णीयात्। एवमपि ग्रीवागात्रयोरापेक्षककाठिन्यं तन्मध्यभागस्य च मार्दवविशेषः सम्यगनुभूयते।

(३) गर्भाशयस्य विरताकुञ्चनम्:—सगर्भे हि गर्भाशये प्रारम्भत एव सङ्कोचानां निःशूला लहर्य्य उत्पद्यन्ते प्रतिपञ्चप्रपलं प्रतिदशप्रपलं

---

(३) Intermittent uterine contractions (Braxton Hicks' Sign.)

वा। तृतीयमासाच्च युग्मविधिना गर्भाशयमभिस्पृशता ता अनुभूयन्ते। उदरगते तु गर्भाशये केवलं जठरनिहितेन करेणापि प्रतीयन्ते। प्रतिवेगं च क्षणाय गर्भाशयो दृढकठिनः सञ्जायते। गर्भाशयस्य शोणितगुल्म-विशेषे सौत्रिकार्बुदेऽपि च लक्षणमेतत् सम्भवति, परं तत्राकुञ्चनलहरी न गर्भ इव सार्वदैशिकी भवति किन्तर्हि प्रायेणैकदैशिकीति भेदोऽनुस्मर्त्तव्यः।

( ४ ) **आन्तर्यौनिकं स्पन्दनम्** :—द्वित्रमासात् परं विवृद्धायतनयो-रनुगर्भाशयधमन्योः स्पन्दनं योन्याः पार्श्वकोणयोः परीक्षकेणानुभूयते। अतिव्याप्तं चैतल्लक्षणम्, श्रोण्या रक्तोपचये रक्तार्बुदे चोपलम्भात्।

( ५ ) **योनिपरिवर्त्तनानि** :—पुरा ( १६८ पृष्ठे ) व्याख्यातानि। द्वित्रमासात्परं लक्ष्यमाणो वर्णविपर्यासश्च तेषु मुख्यः। अन्यत्रापि श्रोण्या अर्बुदादिषु रक्तातिसञ्चारकर्यावस्थासु योनेर्नीलवर्णता सञ्जायते। योनिमुखे सिराकौटिल्यं तु प्रायिकम्। खरस्पर्शता स्रावप्राचुर्यञ्चापि प्रधानलक्षणे भवतः।

( ६ ) **गर्भप्रत्याघातः**—तदेतत् कन्दुकक्रीडेव उत्क्षिप्तावक्षिप्तस्य गर्भस्य तत्कृतं प्रतिहननम्, यदनुभूयते परीक्षकेण भिषजा चतुर्थादासप्तममासं ( सुखेन तु चतुर्थपञ्चमयोरेव ) बाह्याभ्यन्तरविधिभ्याम्। विश्वसनीयस्तु

---

शोणितगुल्मविशेषः Haeamtometra. सौत्रिकार्बुदम् Febroid. tumour.

( ४ ) Vaginal Pulsation ( Osiander's sign. ) रक्तोपचयः Congestion. रक्तार्बुदम् Vascular tumour (५) Changes in Vagina. योन्या वर्णविपर्यासः Discoloration of the vagina. ( Facquemier's sign ). योनिमुखसिराणां कौटिल्यम् Varicosity of the veins about the lower end of the vagina. (Klug's sign . खरस्पर्शता Papillary roughness of the mucous surface. (६) Ballotment ( External & Internal. )

विधिराभ्यन्तर एव। इतः पूर्वं तु गर्भोदकस्याधिक्यात् गर्भस्य वा हीन-कायमानत्वात् लक्षणमिदं न प्रतीयते, विपरीतहेतुना चातः परम्। केवलं गर्भशिरस्तूर्ध्वमपि बाह्यविधिना यथाकथञ्चिद् इतस्ततः कर्त्तुं शक्यते, आवस्तिशिरोऽवग्रहात्।

एष च तावल्लक्षणस्यास्य बाह्यपरीक्षाविधिः—पार्श्वशयानायाः स्त्रिया उभयतो गर्भाशयपार्श्वम् उदरस्य बहिः करद्वयमवस्थाप्य अधर-पाणिना गर्भ उत्क्षेपणीयः, अनुभवनीयश्च पुनस्तेनैव करेण परावृत्तस्य गर्भस्य प्रतिघातः। किं वा, जानुकूर्परासनेऽधोमुखं वर्त्तमानाया हस्तेनैकेन गर्भमुत्क्षिप्य पुनरवक्षिप्तस्य तस्य प्रतिहतस्तेनैव करेण परिज्ञानम्। अथवा, उत्तानशयानाया उदरपार्श्वयोः पाणियुगलं निधाय, गर्भाशयं च ताभ्यां स्थिरीकृत्य हस्त एक सहसा प्रपीडनीयः। तेन च गर्भस्य कोऽप्यवयवो हस्तेतरं प्रतिघ्नन्निव प्रतीयते। कदाचित्तु निवर्त्तमानेन गर्भेण पूर्वकरो-ऽपि प्रतिहन्यते।

अथ आभ्यन्तरपरीक्षाविधिः—उत्तानाया उपधानोन्नमितशिरोग्रीवां-सायाश्च स्त्रिया योनौ गर्भाशयग्रीवामुखस्य पुरस्तात् पूर्वकोणे वाङ्गुलिद्वयं प्रणिधाय गर्भाशयस्कन्धभागो हस्तेतरेणोदरस्थितेन स्थिरीकर्त्तव्यः। उपदे-ष्टव्या च गर्भिणी गभीरमुच्छ्वसय क्षणं प्राणानिरोधाय। ततो योना-वङ्गुल्याघातेन गर्भं ऊर्ध्वमुत्क्षेपणीयः, अनुभवनीया च पूर्वमपसृतिस्ततश्चो-पसृतिरुत्तरणावतरणाभ्यां गर्भस्य।

तदेतत् गर्भप्रत्याघातरूपं लक्षणं विशिष्टलक्षणमपि कदाचित् मूत्राति-पूर्णवस्तिगतायां बृहदश्मर्य्यां जलोदरप्लवमाने रक्तादिद्रवपूर्णगर्भाशय-प्लवमाने वा सवृन्तार्बुदेऽतिवर्त्तनान्न निर्दुष्टम्।

( ७ ) गर्भाशयध्वनिः—मृदुफूत्काररूपोऽयं ध्वनिः, मातुर्धमनीस्पन्देन च तुल्यकालः, उदरस्य बहिर्गर्भाशयोपरि चतुर्थमासान्तात् परम् उरोवीक्ष-

---

( ७ ) Uterine Souffle or Uterine Bruit.

णयन्त्रेण कर्णाधानेन वाऽऽकर्ण्यते । तत्र उरोवीक्षणयन्त्रप्रयोगे उदरस्यानावृतत्वं, कर्णाधाने च तनुना कार्पासवस्त्रेण कौशेयवस्त्रेण वा तस्यावृतत्वमावश्यकम् । अथ च गर्भकालस्य प्रथमार्धे भगसन्धानिकाया उपरिष्टादेव मध्यरेखायाम्, उत्तरार्धे च गर्भाशयाधरपार्श्वयोः ( वामतश्च विशेषेण, दक्षिणावर्तविवर्त्तनाद् गर्भाशयस्य ) ध्वनिरयं स्पष्टं प्रतिगृह्यते । सोऽयमनुगर्भाशयधमन्योः सङ्कीर्णरन्ध्रशाखाभिर्गर्भाशयप्राचीरगतासु विशदाकाशप्रशाखासु रक्तसंवहनादुत्पद्यत इत्याहुर्नव्याः । अपराया रक्तकुल्यासु रक्तागमाक्षेपात्तदुत्पत्तिरिति प्राचीनवादस्तु सूतिकाकालेऽपि त्रिचतुरदिनं यावत् शब्दस्यास्य श्रवणात् सम्प्रति निरस्तः । गर्भाशयस्य सङ्कोचकाले तु यथोत्कर्षं ध्वनिरयं तीव्रायते, मन्दायते, विलुप्यते च; पुनरावर्त्तते च ततो व्यपगच्छति सङ्कोचे । हृच्छब्दादपि द्रुतसप्राहेन पूर्वमाकर्ण्यत इति तु लक्षणस्यास्य वैशिष्ट्यम् । उपलभ्यते चैतत् कदाचित् सौत्रिकार्बुदेष्वपि ।

## उत्तमबललक्षणानि ।

( १ ) गर्भहृच्छब्दः—सोऽयं प्रतिप्रपलं सविंशशतात् षष्ट्युत्तरशतं यावज्जायमानः, प्रायेण च चत्वारिंशदुत्तरशतसंख्यः ( मातुर्धमनीस्पन्दात् द्विगुणप्राय इति यावत ), टिक्टिकात्मको ध्वनिर्मध्यगर्भकालात् प्रभृति ( सार्धचतुर्थमासान्तात् पञ्चममासान्ताद्वा परम् ) श्रूयते । तत्रादौ मध्यरेखायां नाभेरधः, ततश्च यथागर्भावतरणं यथागर्भासनं च तत्तद्विशेषस्थलेषु ( ४९ चित्रम् ) उरोवीक्षणयन्त्रेण गर्भहृच्छब्दः स्फुटतममाकर्ण्यते । साधारणतश्च गर्भान्तराधेहृत्सन्निकृष्टो गर्भाशयपूर्वभित्तिसन्निहितश्च यो देशस्तत्रैव स्फुटतमं श्रवणम् इति नियमः ।

---

दक्षिणावर्त्तविवर्त्तनम् Dextro-torsion. उत्तमबललक्षणानि Positive or Certain Signs. (१) Foetal heart sounds.

[ ४६ चित्रम् ]

**विभिन्नस्थलानि, येषु गर्भहृच्छब्दः स्फुटतमं श्रूयते ।**




१—वामपूर्वानुशीर्षासनम् । २ दक्षिणपूर्वानुशीर्षासनम् । ३—दक्षिणपश्चिमानुशीर्षासनम् । ४—वामपश्चिमानुशीर्षासनम् । क—वामपूर्वत्रिकासनम् । ख—दक्षिणपूर्वत्रिकासनम् । ग—दक्षिणपश्चिमत्रिकासनम् । घ—वामपश्चिमत्रिकासनम् ।

एष च हृच्छब्दो बृहत्कायमाने शिशौ विलम्बितो लघुकायमाने च प्रायेण त्वरितः समुपलभ्यते । अनयत्र गुरुप्राये पुत्रशिशौ सत्रिंशशताब्दीनम्, लघुप्राये कन्याशिशौ च ततोऽधिकमिति प्रायोवादोऽपि प्रचलति । अथ चायं हृच्छब्दो गर्भस्य सक्रियावस्थायां मातुश्च ज्वरितावस्थायां त्वरितो भवति; मन्दश्च सङ्कोचकाले गर्भाशयस्य, प्रपीडनावसरेऽपरानाभिनालयोः, हीनदशायां प्राणवायोः, श्रान्तावस्थायां च गर्भस्थबालस्येत्यवधेयम् । शताब्दीने षष्ट्युत्तरशतादधिके च गर्भजीवनं विपन्नमिव मन्यते प्रेक्षा-

वृद्धिः । एवञ्च लक्षणमिदं गर्भप्रत्यायकत्वे सति तदवस्थाप्रत्यायकत्वा-त्प्रधानतमम् । अनेन हि गर्भस्य सत्ता, जीवनम्, अवतरणासनानि, संख्या चापि निर्देष्टुं शक्या ।

नालध्वनिः—मर्मरायमाणश्चायं शब्दविशेषो गर्भहृच्छब्देन समका-लिकः प्रायेण गर्भकालावसाने नाभिनालोपरि श्रुतियन्त्रपातात् क्वचिदा-कर्ण्यते । नाभिनाड्याः शोणितवाहिनीषु रक्तसंवहनव्याघातश्चास्य हेतुः । व्याहतिस्तु नाभिनाले ग्रन्थिपातेन नालस्य गर्भाङ्गानुवेष्टनेन प्रपीडनेन सिरा-कपाटैर्वा छिद्रसंवरणादभिजायते । गर्भस्य विकृतहृदयादपि ध्वनिरेष उत्पद्यते । एवञ्च विकृतिजनीनमपि लक्षणमिदं गर्भसत्ताप्रत्यायकत्वात् गर्भलक्षणम् । प्रसवकालेऽस्याऽविरतश्रुतिस्तु गर्भव्यापत्सूचकत्वात् भयावहा ।

(२) गर्भाङ्गानुज्ञानम् :—मध्यगर्भकालात् प्रभृति गर्भस्य विभिन्ना-वयवाः क्रमेण सुखं वेद्यन्ते स्पर्शपरीक्षया परीक्ष्यमाणाः । तत्र पृष्ठशिरो-नितम्बपाणिपादानां निपुणमवधारणमावश्यकम् । अन्यथा उदर्यकलान्तः सम्भूतानामनेकसौत्रिकार्बुदानां गर्भावयवानाञ्च परस्परं भेदग्रहो दुःशकः स्यात् ।

(३) गर्भचेष्टनम् :—चतुर्थपञ्चममासात् प्रभृति गर्भः स्पन्दते इत्युक्तं प्राक् । सर्वप्रथमं च गर्भिण्या गर्भचेष्टनमनुभूयते । ततश्च परीक्षकोऽपि स्पर्शपरीक्षया श्रवणपरीक्षया च गर्भाशयभित्तौ क्रियमाणान् मन्दपादाघा-तानिव गर्भचेष्टा विजानाति । उत्तरमासेषु तु स्पर्शपरीक्षया समुत्तेजितो गर्भोऽधिकं प्रचेष्टते । अथ च तदा तनूदरभित्तिकायाः स्त्रिया गर्भचेष्टनं चक्षुषाऽपि द्रष्टुं शक्यम् । श्रूयते च गर्भचेष्टनकाले ध्वनिविशेषोऽपि प्रायेण ।

(४) किरणचित्रपरीक्षणम् :—सार्द्धतृतीयमासेन किरणचित्रेऽपि गर्भ-कङ्कालभागानां दर्शनात् गर्भस्थितिरवधारयितुं शक्या । अतः परन्तु-

---

नालध्वनिः Funic Souffle. (२) Recognition of the foetal parts. (३) Foetal movements. (४) Radiographic diagnosis.

त्तरोत्तरं विधिनाऽनेन सुकरमेव गर्भनिदानम्। न चैतत् गर्भसत्तामात्रं प्रत्याययति, किन्तर्हि गर्भावतरणम्, गर्भासनम्, गर्भवयः, गर्भानैक्यमपि।

अथ च तत्तद्गर्भलक्षणानां कालप्रामाण्यस्मारणी सारणिरपि प्रदर्श्यते —

| लक्षणानि। | मासानुमासिको गर्भलक्षणकालः | | | | | | | | | प्रामाण्यम्। |
|---|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | |
| आर्त्तवादर्शनम्। | × | × | × | × | × | × | × | × | × | हीनबलम्। |
| मूत्रप्रसेकः। | × | × | ? | | | | | | × | ,, |
| प्रातर्ग्लानिः। | ? | × | × | × | ? | ? | ? | ? | ? | ,, |
| स्तनपरिवर्त्तनानि। | | × | × | × | × | × | × | × | × | हीनमध्यबलम्। |
| गर्भाशयवृद्धिमार्दवे। | ? × | × | × | × | × | × | × | × | | मध्यबलम्। |
| अन्तर्यौनिकं स्पन्दनम्। | | × | × | × | × | × | × | × | × | ,, |
| गर्भाशयविगताकुञ्चनम्। | | | × | × | × | × | × | × | × | ,, |
| योन्या वर्णविपर्यासः। | | | ? | × | × | × | × | × | × | ,, |
| गर्भप्रत्याघातः। | | | | × | × | × | × | | | ,, |
| गर्भाशयध्वनिः। | | | | × | × | × | × | × | × | ,, |
| किरणचित्रपरीक्षणम्। | | | | × | × | × | × | × | × | उत्तमबलम्। |
| गर्भहृच्छब्दः। | | | | ? | × | × | × | × | × | ,, |
| गर्भाङ्गानुज्ञानम्। | | | | | | × | × | × | × | ,, |
| गर्भचेष्टनम् (परवेद्यम्)। | | | | | | | × | × | × | ,, |
| नालध्वनिः। | | | | | | | ? | × | × | ,, |

प्राञ्चस्तु पुनः सद्योऽनुगतगर्भभेदेन पर्यागतगर्भभेदेन च द्विधा गर्भलक्षणानि व्याचक्षते, तद्यथा :—

(१) तत्र सद्योगृहीतगर्भाया लिङ्गानि—श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः।

—सु० शा० ३।

निष्ठीविका गौरवमङ्गसादस्तन्द्राप्रहर्षौ हृदयव्यथा च।
तृप्तिश्च बीजग्रहणञ्च योन्यां गर्भस्य सद्योऽनुगतस्य लिङ्गम्॥

—च० शा० २।

लिङ्गं तु सद्योगर्भाया योन्या बीजस्य सङ्ग्रहः।
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानानुबन्धनम्॥
हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम्।

—वा० शा० १।

अथ नार्या सद्योगृहीतगर्भायाश्च लिङ्गम्, योन्या बीजग्रहणं तृप्तिर्गरिमा स्फुरणं शुक्रार्त्तवयोरननुबन्धश्च। तथा प्रहर्षो हृल्लासस्तन्द्राङ्गसादः प्रसेको हृदयव्यथा ग्लानिः पिपासा च।

—सङ्ग्रहशा० २।

---

(१) तत्रेत्यादि—सद्यस्तत्क्षणमेव, किं वा सद्यःपदात् मासमितः सार्धैकमासमितो वाऽव्यक्तगर्भकालो ग्राह्यः। श्रमादयस्तु गर्भशल्यजनितक्षोभात् गर्भपोषणार्थं जायमानशक्तित्वयाद्वा मातुः सम्भवन्ति। शुक्रशोणितयोरवबन्धः=पुंशुक्रस्त्रीशोणितयोर्योनिमुखादवमनं बहिरनिःसरणम्, किं वा शुक्रमिह गर्भाशयस्य पिच्छिलास्राव उच्यते। आर्त्तवमिव तदपि प्राप्तगर्भां नानुबध्नातीति भावः। स्फुरणम्=अङ्गस्फुरणमिव चालनं कम्पो वा। तत्र श्रमादयोऽस्थिराणि शुक्रशोणितावबन्धस्तु स्थिरं लिङ्गम्। निष्ठीविकेत्यादि—प्रहर्षो रोमहर्षः, अप्रहर्ष इति छेदे तु ग्लानिः। बीजग्रहणम्=शुक्रास्राऽप्रवर्त्तनम्। लिङ्गमित्यादि—बीजस्य=गर्भाख्यस्य, योन्या=करणभूतया, सङ्ग्रहः=सम्यग्ग्रहः। गुरुत्वं स्फुरणं च कुक्षेर्भवति।

(२) आर्त्तवादर्शनमन्नाभिलाषः छर्दिररोचकोऽम्लकामता च विशेषेण, श्रद्धाप्रणयनमुच्चावचेषु भावेषु, गुरुगात्रत्वम्, चक्षुषोर्ग्लानिः, स्तनयोः स्तन्यम्, ओष्ठस्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थम्, श्वयथुः पादयोरीषत्, लोमराज्युद्गमः, योन्याश्चाटालत्वमिति गर्भे पर्य्यागते रूपाणि भवन्ति।

—च० शा० ४।

स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा।
अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात्।
प्रसेकः सदनं चापि गर्भिण्या लिङ्गमुच्यते॥

—सु० शा० ३।

........................ तत्र व्यक्तस्य लक्षणम्
क्षामता गरिमा कुक्षौ मूर्च्छाच्छर्दिररोचकः॥
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम्॥
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ।
पादशोफो विदाहोऽन्ने श्रद्धाश्च विविधात्मिकाः॥

—वा० शा० १।

क्रमेण तु व्यक्तगर्भायाः कुक्षिगात्रगौरवं क्षामनेत्रस्वरता योनिगमनसंलुलनं निद्रा जृम्भणं मूर्च्छा छर्दिररुचिः पादशोफोऽम्लाऽभिलाषश्चापि तत्तदुच्चावचेषु भावेष्विति। तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यन्ते गर्भेण। तस्मात्ततः परमार्त्तवं न दृश्यते। ततस्तदधः प्रतिहतमपरमपर

---

(२) चाटालत्वम्=सविवृतत्वम्, केचित्तु आटालत्वमिति छेदमाहुः। पर्य्यागते=सर्वतोभावेन समागते। तेन प्रथममासि ईषद्रूपेण लिङ्गान्येतानि भवन्ति, द्वितीयमासे मध्यमरूपेण, तृतीयमासे पूर्णरूपेणेति गङ्गाधरः।

क्रमेणेत्यादि—संलुलनं=चलनं व्यालोलता वा।

चोपचायमानमपरेत्याहुः । जरायुरित्यन्ये । स्थिते रक्ते रोमराजिः प्रादुर्भवति । जरायुशेषं चार्ध्वमसृक् प्रतिपद्यते । तस्मात् पीनकपोलपयोधरता कृष्णौष्ठचूचुकत्वं च । स्तनाश्रयमेव च कफोपरञ्जितं स्तन्यतामुपगतं प्रसूतायाः पुनराहाररसेनाप्यायते ।

—सङ्ग्रहशा० २ ।

## अथ सापेक्षनिश्चितिः ।

तत्र प्रथमे मासि निदानदृशा न किमपि वक्तुं शक्यम् । द्वितीयात् माद्यं चतुर्थं यावदपि प्रायेण लक्षणसमष्ट्या सम्भाव्यत एव गर्भस्थितिः । निःसंशयनिदानं तु पञ्चममासात् परमेव प्रबलगर्भलिङ्गैर्भवतीति प्रागुक्तगर्भलक्षणानां बलकालपर्यालोचनेन स्पष्टम् । सहावस्थितैर्विकारविशेषैरुपद्रुतं तु दशमेऽपि मासे न सुकरो विनिर्णयः । सन्ति चेह केचन तद्भिन्नतत्सदृशा अवस्थाविशेषा, येभ्यो गर्भस्य व्यावर्त्तनं नितरामपेक्षते । तद्यथा—

( १ ) गर्भेतरहेतुकम् आर्त्तवादर्शनम् :—यथा नाम प्राकृतमार्त्तवदर्शनं गर्भाभावस्य लिङ्गं भवति न तथा केवलमार्त्तवाऽदर्शनं गर्भस्य । बालयुवतीनां हि प्रायेण दुःस्वास्थ्यादिहेतुना पुष्पं लुप्यते वयःकालोपस्थानेन च प्रौढानाम् । तत्र लक्षणसमष्ट्या गर्भस्थितिर्निर्णेया । आर्त्तवादर्शनं, प्रातर्ग्लानिः, जठरार्बुदं, स्तनपरिवर्त्तनानि, योनिवर्णविपर्यासश्चेति च लक्षणसमष्टिः ।

---

आप्यायते = आसंस्कारक्षयात्, येन प्रसूताया भावि स्तन्यं नियतकालं भवतीतीन्दुः । सापेक्षनिश्चितिः Differential Diagnosis. (१) Amenorrhoea from causes other than pregnancy. लक्षणसमष्टिः Symptom-Complex.

(२) गर्भेतरहेतुका गर्भाशयवृद्धिः—गर्भाशयो हि गर्भेतरहेतुभिरपि वर्धते । तद्यथा—गर्भाशयजीर्णशोथः, गर्भाशयार्बुदानि, रक्तगुल्म-

[ ५० चित्रम् ]

गर्भाशयमांसार्बुदम् ।



पञ्चमासिकगर्भ इव लक्ष्यमाणम् ।

---

(२) Enlargement of the uterus from causes other than pregnancy.

श्चेति । ( क ) गर्भाशयजीर्णशोथः—अत्र हि गर्भाशयो गर्भापेक्षया कठिनतरो भवति । गोलकाकृतित्वं ग्रीवागात्रमध्यभागस्य मार्दवं च नोपलभ्यते । ग्रीवा चापि प्रायेण (अन्यत्र ग्रीवामुखपाकात् गर्भाशयसंरम्भाच्च) कठिनतरैव प्रतीयते । शूनहीनसंवृते तु गर्भाशये दुष्करमेव निदानम् । तत्र रोगेतिवृत्तं शरणम् । ( ख ) गर्भाशयार्बुदानि—लघुसौत्रमांसार्बुदैरभिवृद्धो गर्भाशयः सगर्भ इव कदाचन प्रतीयेत । गर्भारस्थितानि लघ्वर्बुदानि तु समवृद्धिकरत्वात् विशेषेण गर्भसाम्यमावहन्ति । इतिवृत्तं चात्र शरणम्, विशेषतश्च पुष्पदर्शनस्य । लक्षणसमष्टिरपि नोपलभ्यतेऽन्यत्र जठरार्बुदात् । महार्बुदानि तु सुखेन निर्णीयन्ते । तत्र प्रायेण गर्भाशयस्य विषमवृद्धिः कठिनतरस्पर्शता च दृष्टा, उत्तमबलगर्भलक्षणानां चाभावः । समवृद्धिरपि लभ्येत । अथ च वृद्धिवैषम्यमपि कदाचन गर्भाङ्गानीव प्रत्ययमावहेत । वस्तुतस्तु यदा गर्भगर्भाशयार्बुदयोः, गर्भाशयार्बुदबीजग्रन्थ्यर्बुदयोः, जलोदरगर्भाशयार्बुदयोर्वा सहावस्थितिस्तदैव विशेषेण निदानसौकर्यविरहो भवति । इतिवृत्तम्, संज्ञामाहृत्य विधिना परीक्षणम्, किरणचित्रणञ्चेह निःसंशयकरम् । ( ग ) रक्तगुल्मः—उत्तरयोनिसंवरणाद्, गर्भाशयगुहायामार्त्तवमुपरुध्यते । उपरुध्यमानं च तन्

---

( क ) Chronic Metritis & Endometritis. ग्रीवामुखपाकः Erosion of the cervical mucous membrane. गर्भाशयसंरम्भः Congestion of the uterus. शूनहीनसंवृतो गर्भाशयः Metritis, associated with sub-involution. (ख) Uterine tumours. सौत्रमांसार्बुदम् Fibro-myomatous tumour. गर्भारस्थितानि Interstitial or Submucous. समवृद्धिः Unifom enlargement. विषमवृद्धिः Irregular enlargement. (ग) Haematometra. उत्तरयोनिसंवरणम् Atresia of the upper part of the vagina or the cervix.

सात्त्वोवादर्शनं गर्भाशयवृद्धिकरत्वात् गर्भावभासं जनयति । इतिवृत्तं योनिपरीक्षणं चात्र शरणम् । तत्र मासि मासि ( आर्त्तवस्रावकाल इति यावत् ) सशूलञ्च गर्भाशयकायमानवृद्धिरितिवृत्तात्, संवरणापस्थितिश्च योनिपरीक्षणादवगम्यते । गर्भाशयश्च भृशमुत्तांसितः प्रतीयते ।

[ ५१ चित्रम् ]

बीजग्रन्थिभवो द्रवगर्भग्रन्थिः ।



( पाञ्चमासिकगर्भ इव लक्ष्यमाणः )

( ३ ) बीजकोषार्बुदानि :—लघुबीजग्रन्थ्यर्बुदं तावत् बहिराशयिको गर्भ इवाभासते । सापेक्षनिदानं च तयोर्यथाऽवरावं वक्ष्यामः । महा-

र्बुदानां सगर्भगर्भाशयसरूपता तु नितरां स्पष्टा (५१ चित्रम्)। तत्र संज्ञाहरणं विधाय सम्यक् परीक्षणीयम्। तथा चार्बुदसन्निधौ प्रकृतिमनुल्लङ्घ्य वर्त्तमानो गर्भाशयः सुतरां निर्धार्यते। बीजग्रन्थ्यर्बुदानां वृद्धिरपि विलम्बिता भवति। न च तेषु प्रायेण रजो विलुप्यते स्तनयोः कृष्णामुखता, प्रातर्ग्लानिः, योन्या वर्णविपर्यासः, ग्रीवामार्दवम्, गर्भाशयध्वनिः, गर्भाशयविरताकुञ्चनं च न लभ्यन्ते। उत्तमबलगर्भलक्षणानां चाप्यभावः।

(४) गर्भेतरहेतुका जठराभिवृद्धिः—उदरमपि स्त्रिया गर्भेतरहेतुभिरभिवर्धते। तद्यथा—

(क) वातबस्तिः—बस्तिकण्ठप्रपीडनात् मूत्रातिपूर्णो भृशमाततश्च मूत्राशयः कदाचन आनाभि प्रसृतो गर्भवत्तिष्ठति। विरताकुञ्चनान्यपि लभ्येरन्। परन्तु गर्भप्रत्याघातहृच्छब्दयोरभावात् शलाकाप्रवेशमात्रेण जठरार्बुदविलोपाच्च न संशयः।

(ख) मेदस्विता—आर्त्तवादर्शनोपप्लुता मेदोवृद्धिरपि गर्भावभासं जनयति। उपलभ्यते चेयमवस्था रजःक्षयकालोपस्थाने विशेषेण। तत्रेतरगर्भलक्षणानामभावात्संशयनिरसनम्।

(ग) वातोदरम्:—वातोदरं नाम गर्भधारणाय भृशमुत्कण्ठिताया वातलस्वभावायाश्च स्त्रियाः कदाचिज्जायमानो गर्भिण्यहमित्यात्मकः केवलमतत्त्वाभिनिवेशः। आसन्नरजःक्षयकालायाश्च प्रायेणायं दृश्यते। आर्त्तवादर्शनप्रातर्ग्लानिगर्भस्फुरणस्तनपरिवर्त्तनजठराभिवृद्धिरूपाणां गर्भ-

---

(४) Abdominal enlargement from causes other than pregnancy. (क) An Overfull Distended Bladder. वस्तिकण्ठम् The neck of the bladder. (ख) Accumulation of Fat in the Abdominal wall or Omentum. (ग) Phantom Pregnancy or Pseudocyesis.

लिङ्गानामपि प्रायेणोपलम्भात् गर्भोऽयमिति सा मनुते। अथ च मनसा तद्विभाविनी तास्ता गर्भचेष्टा विचेष्टमाना वैद्यस्यापि चेतः संशाययति। तत्रेतिवृत्तं सम्परीक्षणं च शरणम्। यथा हि—आर्त्तवादर्शनं हेत्वन्तरेणापि जायते। एवं प्रातर्ग्लानिरपि। अन्त्रस्फुरणं गर्भस्फुरणेन भ्रमितुं शक्यम्। स्तनगौरवपीनते च जीर्णस्तनशोथात् मेदश्चयादपि सम्भाव्येते। जठराभिवृद्धिस्तु महाप्राचीराद्दृढसङ्कोचादभिजायते। प्राचीराकुञ्चनादधः पीडिता ह्युदरावयवाः शिथिलोदरभित्तिमुद्गमय्य जठराभिवृद्धिं निर्वर्त्तयन्ति। न च सा नियतप्रमाणा भवति। कदाचिदकाल एव पूर्णकालिकीव भासमाना दृष्टा। वाताध्मातमिव च तदुदरं प्रतीयते। युग्मविधिना परीक्षणे गर्भाशयोऽवृद्ध एव लभ्यते। संज्ञाहरणे च महाप्राचीरास्थगनात् विलीयते जठराध्मानम्। ग्रीवामार्दवं, योन्या वर्णविपर्यासः, हृच्छब्दादीनि प्रबलगर्भलक्षणानि च नोपलभ्यन्ते।

( घ ) दकोदरम्—जातोदकमुदरं सामान्यतो न दुर्निर्णेयं भवति। गर्भदकोदरयोरर्बुददकोदरयोर्वा यदा सहावस्थितिस्तदैव विशेषेण विचिकित्साऽवसरः। इतिवृत्तं, संज्ञामाहृत्य सम्परीक्षणम, किरणचित्रणञ्च तत्र शरणम्।

अथाहुः प्राञ्चः—

## रक्तगुल्मः।

वातकफावृतमार्गाणां चाप्रवर्त्तमानं पित्तलैरुपाचरेत्। तद्धि वर्द्धमानमन्तर्वर्त्तमानं सशुक्लमशुक्लं वा जीवरहितं वातलान्यासेवमानाया योषितो गर्भलिङ्गानि दर्शयद् गुल्मीभवति। तत्र गुल्मचिकित्सितमीक्षेत।

—सङ्ग्रहशा० १।

तत्र यदासावृतुमती नवप्रसूता योनिरोगिणी वा वातलान्यासेवेत तदाऽस्या वायुः प्रकुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि। तदुपरुध्यमानं मासे मासे कुक्षिमभिनिर्वर्त्तयति गर्भलिङ्गानि च हृल्लासतन्द्राङ्ग-

साद्दौहृदस्तन्यदर्शनादीनि । वायुसंसर्गात् पुनः पित्तैकप्रकोपतया च वातपित्तगुल्मरूपाणि क्रमाच्छूलस्तम्भदाहातीसारादीनि गर्भाशये च सुतरां शूलं तथा योन्या दौर्गन्ध्यमास्रावं च करोति । गुल्मश्च न गर्भ इवाङ्गैः पिण्डित एव तु चिरेण सशूलं स्पन्दते । गुल्म एव वर्धते न कुक्षिः ।

—सङ्ग्रहनि० ११ ।

शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य । गर्भकोष्ठार्त्तवागमनवैशेष्यात् पारतन्त्र्यादवैशारद्यात् सततमुपचारानुरोधात् वेगानुदीर्णानुपरुन्धत्या आमगर्भे वाप्यचिरात् पतिते अथवाऽप्यचिरप्रजातायाः ऋतौ वा वातप्रकोपणान्यासेवमानायाः क्षिप्रं वातः प्रकोपमापद्यते । स प्रकुपितो योनिमुखमनुप्रविश्यार्त्तवमुपरुणद्धि मासि मासि । तदार्त्तवमुपरुध्यमानं कुक्षिमभिवर्धयति ।

तस्याः शूलकासातीसारच्छर्द्यरोचकाविपाकाङ्गमर्दनिद्रालस्यकफप्रसेकाः समुपजायन्ते स्तनयोश्च स्तन्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं ग्लानिश्चक्षुषोर्मूर्च्छा हृल्लासो दोहदः श्वयथुश्च पादयोरीषच्चोद्गमो रोमराज्या योन्याश्चाटालत्वमपि च योन्या दौर्गन्ध्यमास्रावश्चोपजायते केवलश्चास्या गुल्मः स्पन्दते । तामगर्भां गर्भिणीमित्याहुर्मूढाः ।

—च० नि० ४ ।

ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च ।
संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रियां रक्तभवोऽभ्युपैति ॥
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥

—च० चि० ५ ।

नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ।
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ।

न स्पन्दते नोदरमेति वृद्धिं भवन्ति लिङ्गानि च गर्भिणीनाम् ।
तं गर्भकालातिगमे चिकित्स्यमसृग्भवं गुल्ममुशन्ति तज्ज्ञाः ॥

—सु० उ० ४२ ।

ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ।
सेवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥
निरुणद्ध्यार्त्तवं योन्यां प्रतिमासमवस्थितम् ।
कुक्षिं करोति तद्गर्भलिङ्गमाविष्करोति च ॥
हृल्लासदौर्हृदस्तन्यदर्शनं क्षामतादिकम् ।
क्रमेण वायुसंसर्गात्पित्तयोनितया च तत् ॥
शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ।
रुक्स्तम्भदाहातीसारतृड्ज्वरादीनुपद्रवान् ॥
गर्भाशये च सुतरां शूलं दुष्टासृगाश्रये ।
योन्याश्च स्रावदौर्गन्ध्यतोदस्पन्दनवेदनाः ॥
न चाङ्गैर्गर्भवद् गुल्मः स्फुरत्यपि तु शूलवान् ।
पिण्डीभूतः स एवास्याः कदाचित् स्पन्दते चिरात् ॥
न चास्या वर्धते कुक्षिर्गुल्म एव तु वर्धते ।

—वा० नि० ११ ।

दुष्प्रजाताऽऽमगर्भा च गर्भस्त्रुवंहुमैथुना ।
अन्तर्गर्भकामा च बहुशोतार्त्तवा च या ॥
उदावर्त्तनशीला च वातलान्ननिषेविनी ।
या स्त्री तस्याः प्रकुपितो वातो योनिं प्रपद्यते ॥
निरुणद्ध्यार्त्तवं तत्र मासिकं सञ्चिनोति च ।
रक्ते च संस्थिते नारी गर्भिण्यस्मीति मन्यते ॥
स्तनमण्डलकृष्णत्वं रोमराजिः सदौहृदा ।
गर्भिणीरूपमव्यक्तं भजते सर्वमेव तु ॥

वि(अ)पाकपाण्डुकार्श्यानि भवन्त्यभ्यधिकानि तु।
इत्येवंलक्षणं स्त्रीणां रक्तगुल्मं प्रचक्षते ॥

—गुल्मचिकित्साध्याये कश्यपः।

यदा ऋतुमती नारी प्राप्तान् वेगान् विधारयेत्।
ह्रिया त्रासाद् व्यवायाद्वा वर्त्तमानानधोगतान् ॥
एवमादिभिरप्यन्यैरुदावृत्तैः प्रकोपितः।
वायुः शोणितमादाय प्रतिस्रोतः प्रपद्यते ॥
गर्भाशयमुदावृत्तस्तस्या वहति शोणितम्।
मारुतश्च्युतगर्भाया यदा मिथ्योपचर्यते ॥
तस्याः स वायुरुद्वृत्तः प्रतिघातात् सशोणितः।
गत्वा गर्भाशयं रुद्धः स्थिरत्वमुपपद्यते ॥
संवृत्तं शोणितं तत्र मारुतो विषमं गतः।
रजोवहाः समावृत्तः संस्तम्भयति गर्भवत् ॥
स गुल्मः स्पन्दतेऽभीक्ष्णं मारुतेन समीरितः।
दर्शयन् यानि रूपाणि तानि वक्ष्यामि सर्वशः ॥
कासते शूल्यते चैव ज्वर्यतेऽथातिसार्यते।
मन्यते सर्वगात्राणि मूर्च्छितानि गुरूणि च ॥
तमोऽभ्या जायतेऽभीक्ष्णं कार्श्यञ्चैव निगच्छति।
वमत्यभीक्ष्णशो भुक्तमन्नं चास्यै न रोचते ॥
जायन्ते चोदरे गण्डा नीलं चास्याः प्रहृष्यते।
स्तनान्तरं च नाभिश्च लोमराजी च मूर्च्छिता ॥
ओष्ठौ च कृष्णौ भवतस्तथैव स्तनचूचुकौ।
पयोधरौ प्रसिच्यते दोहदं च निगच्छति ॥
नानारसान् प्रार्थयते निष्ठीवति मुहुर्मुहुः।
शुभादुद्विजते गन्धाद्वर्णश्चास्याः प्रसीदति ॥

गर्भिण्या यानि रूपाणि तानि संदृश्य तत्त्वतः ।
वर्षाणि हरति व्याधिं गर्भोऽयमिति दुःखिता ॥
केनचित्त्वथ कालेन निर्भेदं यदि गच्छति ।
ततो गुल्मप्रमुक्ता सा ज्ञातिमध्ये प्रभाषते ॥
गर्भिण्यहं चिरं भूत्वा प्रच्युते गर्भशोणिते ।
गर्भरूपं न पश्यामि तत्र मे संशयो महान् ॥
तामिदं प्रतिभाषन्ते सर्वग्रामकुतूहलाम् ।
दिव्यो गर्भो व्यतिक्रान्तो नैगमेषेण ते हृतः ॥
इत्येनामबुधाः प्राहुस्तं सर्वमशोभनम् ।
परिप्लुत इति प्राहुः कुशला ये मनीषिणः ॥
गुल्मश्चय इति प्रोक्तो रक्तं रुधिरमुच्यते ।
रक्तस्य सञ्चयस्तेन रक्तगुल्म इति स्मृतः ॥
गर्भवच्चेष्टते नायं किन्तु सादृश्यदर्शनात् ।
गर्भोऽयमिति मन्वाना मनसा तद्विभाविनी ॥
नारी विचेष्टते तास्ता गर्भचेष्टाः पृथग्विधाः ।
दौहृदं यत्करोतीति शृणु तत्रापि कारणम् ॥
य एव हि रसाः प्रायो धातूनां वृद्धिहेतवः ।
तेषामेवाभिलापः स्याद् योनिसाधर्म्यतत्त्वतः ॥
वातपित्तान्वितं रक्तं चीयमानं विकारवत् ।
कट्वम्ललवणादीनां रसानां गृद्धिमावहेत् ॥
गर्भिण्यस्मीति तत्प्रीतिप्रेमसंकल्पसम्भृतः ।
प्रस्नुता जायते नार्यास्तेन स्तन्यं प्रवर्त्तते ॥
सर्वा रसवहा नाड्यः समन्तान्नाभिमाश्रिताः ।
गर्भो विवर्धमानश्च सम्पीडयति ताः स्त्रियाः ॥
तद्वच्च रक्तगुल्मोपि पीडयन्नुपचीयते ।
ताभिश्च पीड्यमानाभिर्न सम्यग्वर्त्तते रसः

आपाण्डुगण्डतादीनि लक्षणानि भवन्त्यतः ।
कथं प्रकर्षते कालमिति तत्रापि मे शृणु ॥
विवृद्धेरिह सारूप्याद्गर्भोऽयमिति निश्चिता ।
संरक्षतेऽभिघातेभ्यः कुक्कुट्यण्डमिवाङ्गना ॥
तदपायकरान् हेतून्न कथञ्चन सेवते ।
श्रमोपवासतीक्ष्णोष्णक्षारादीनि च सर्वशः ॥
स एवं याप्यमानस्तु यथाकालं प्रकर्षते ।
व्यापत्तिहेतुमासाद्य कालेनाल्पेन वा पुनः ॥
भेदं गच्छत्यधस्ताद्धि जलकुम्भ इव क्षतः ।
केचिदिच्छन्ति गुल्मस्य मासाद्दादशमात् परम् ॥
परिपाकं फलस्येव स्वकालपरिणामतः ।
अङ्गप्रत्यङ्गवान् गर्भस्तैरेव च विचेष्टते ॥
रक्तगुल्मस्तु वृत्तः स्याल्लोष्ठवच्च विचेष्टते ।
स्थानात्स्थानं व्रजन् गर्भो व्याविद्धं परिवर्त्तते ॥
नाभेरधस्ताद् गुल्मोऽयमव्याविद्धं विवर्त्तते ।
आनुपूर्व्येण गर्भश्च अहन्यहनि वर्धते ॥
विपरीतं हि गुल्मस्तु मन्दं मन्दं विवर्धते ।
तां तामवस्थां गर्भस्तु मासि मासि प्रपद्यते ॥

—रक्तगुल्मविनिश्चयाध्याये कश्यपः ।

अन्यच्चापि :—

असृङ् निरुद्धं पवनेन नार्या गर्भं व्यवस्यन्त्यबुधाः कदाचित् ।
गर्भस्य रूपं हि करोति तस्यास्तदस्रमस्रावि विवर्धमानम् ॥
तदग्निसूर्यश्रमशोकरोगैरुष्णान्नपानैरथवा प्रवृत्तम् ।
दृष्ट्वाऽसृगेवं न च गर्भसंज्ञं केचिन्नरा भूतहृतं वदन्ति ॥

ओजोऽशनानां रजनीचराणामाहारहेतोर्न शरीरमिष्टम् ।
गर्भं हरेयुर्यदि ते न मातुर्लब्धावकाशा न हरेयुरोजः ॥

—च० शा० २ ।

अवस्थितं लोहितमङ्गनाया वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।
गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः स्रुते पुनः केवल एव रक्ते ॥
गर्भं जडा भूतहृतं वदन्ति मूर्त्तेर्न दृष्टं हरणं यतस्तैः ।
ओजोऽशनत्वादथवाऽव्यवस्थैर्भूतैरुपेक्ष्येत न गर्भमाता ॥

—चा० शा० २ ।

तदेव कदाचिदार्त्तवं सौम्यैर्बृंहणात्मभिराहारविहारैः स्तम्भितमनुपद्रवमेवोदरं गर्भाधिष्ठितमिव वर्धयति । येन तामगर्भां गर्भिणीमाहुर्मूढाः । ततो विपरीतैर्यदृच्छया वा प्रवृत्ते रक्ते गर्भशरीरमपश्यन्तो भूतहृतमित्यज्ञा ब्रुवते । यस्मात्सम्भवत्योजसोऽपहरणं रक्षोभिर्नतु शरीरापहरणमनिष्टत्वादशक्तेर्वा । इच्छाशक्त्योर्हि प्रवृत्तावुपलब्धिः । न च दृश्यते कस्यचिदमानुषैर्देहापहारः । यदि च दृष्टमपि समुल्लङ्घ्य केचिदतिशक्तियुक्ता गर्भस्य शरीराद्रूपे प्रवर्त्तन्ते तदा कथमिव प्राप्तावसरास्तज्जननीमुपेक्षेरन् ।

सङ्ग्रहशा० १ ।

## वातबस्तिः ।

मूत्रसन्धारिणः कुर्याद्रुध्वा बस्तेर्मुखं मरुत् ।
मूत्रसङ्गं रुजं कण्डूं कदाचिच्च स्वधामतः ॥
प्रच्याव्य बस्तिमुद्वृत्तं गर्भाभं स्थूलविप्लुतम् ।
करोति तत्र रुग्दाहस्पन्दनोद्वेष्टनानि च ॥
बिन्दुशश्च प्रवर्त्तेत मूत्रं बस्तौ तु पीडिते ।
धारया द्विविधोऽप्येष वातबस्तिरिति स्मृतः ॥

—वा० नि० १० ।

## वातोदरम्।

कदाचिद्वा गर्भ इव वातोदरं भवति। तद्वातोपशमनैरुपशाम्यति।

—सङ्ग्रहशा० १।

## कतिमासिको वा गर्भः?

अथ मासिकक्रमेण लक्षणजातं सङ्कलय्य प्रश्नोऽयं शिष्यबुद्धिवैशद्याय समाधीयते। तद्यथा—

**प्रथमे मासि**:—आर्त्तवादर्शनम्, स्तनयोश्चेषद् वैकल्यम्।

**द्वितीये मासि**:—आर्त्तवादर्शनम्, प्रातर्ग्लानिः, चूचुककार्ष्ण्यम्, गर्भाशयवृद्धिः, हेगरलक्षणञ्च।

**तृतीये मासि**:—आर्त्तवादर्शनम्, प्रातर्ग्लानिः, स्तनमण्डलकार्ष्ण्यम्, स्तनास्रावः, ग्रीवामार्दवम्, योनिग्रीवयोर्वर्णविपर्य्ययः, गर्भाशयश्च वर्धमानः श्रोणिकपिठकरेखामधिकुरुते।

**चतुर्थे मासि**:—आर्त्तवादर्शनम्, प्रातर्ग्लानिः, स्तनयोः कृष्णमुखता, पिडकाविर्भावः, ग्रीवामार्दवम्, योन्या वर्णविपर्ययः, गर्भाशयध्वनिः, गर्भस्फुरणम्, गर्भप्रत्याघातः, गर्भाशयश्च वर्धमानो नाभि-भगसन्धानिकयोर्मध्यमधितिष्ठति।

**पञ्चमे मासि**:—गर्भहृच्छब्दः, उपमण्डलनिर्माणम्, चतुर्थमासोक्तलक्षणानि च। विगताकुञ्चनशीलो गर्भाशयश्च नाभेद्र्व्यङ्गुलमधस्ताद्वर्त्तते।

**षष्ठे मासि**:—पूर्वोक्तानि, किक्किसाः, वर्णराजिश्च। गर्भाशयस्तु वर्धमानो नाभिशीर्षमभिव्याप्नोति।

**सप्तमे मासि**:—सकलान्येवोक्तमबलगर्भलक्षणानि स्पष्टतमानि भवन्ति। गर्भाशयश्च नाभितस्त्र्यङ्गुलमूर्द्ध्वं प्रवर्धते।

**अष्टमे मासि**:—गर्भाशयो नाभ्यग्रपत्रयोर्मध्यमाधिकुरुते। नालध्वनेश्च सम्भवः।

**नवमे मासि** :—गर्भाशयोऽग्रपत्रं यावत्प्रगतो भवति ।

**दशमे मासि** :—गर्भाशयः किञ्चिदवस्रस्य पुनरष्टमासोक्तसीमानमायाति ।

## कीदृगवस्थो गर्भः ?

**गर्भो जीवति न वा ?**—तत्र निर्विकारमाप्यायनमेव गर्भस्य जीवनलक्षणम् । विशेषतस्तु जठरस्य क्रमिकाभिवृद्धिः स्तनपरिवर्त्तनानां स्थायित्वं गर्भाङ्गचेष्टा गर्भहृच्छब्दश्चेति तज्जीवनसाक्षिभूतानि लिङ्गानि भवन्ति ।

तत्र पूर्वगर्भकाले प्राणापगमश्चेत् गर्भाशयः पुनः पुनः परीक्षणेनापि तथास्थित एव ज्ञायते न तु वर्धमानः । स्तनावपि म्लायेते एव न तु वर्द्धते । गर्भलक्षणानि चाम्या आर्त्तवादर्शनमन्तरा विलुप्यन्ति । गर्भाशयात् कपिशवर्णकश्चास्रावः प्रायेण स्रवति । क्वचित् पुनः पुनः स्वल्पा रक्तस्रुतिरपि दृष्टा । कदाचिदस्य स्रावस्य विस्रगन्धिताऽपि सम्भाव्यते ।

अथ चेदुत्तरगर्भकाले गर्भो विपद्येत हृच्छब्दो न श्रूयते, नानुभूयते गर्भचेष्टनम्, स्तनौ शिथिलीभवतः, उपमण्डलं नश्यति, गर्भाशयो न वर्धते (अपि तु क्रमेण गर्भोदकपरिशोषणाद् हीयते), शिरःकपालानि च योनिपरीक्षणेन शिथिलास्थिगणि प्रतीयन्ते (परस्परमाश्लिष्टानीव च किरणचित्रणेन) । कालेन विगलिते तु गर्भे विपसञ्चरणादस्वस्था गर्भिणी गौरवाङ्गसाददौर्बल्यक्षुन्नाशमुखवैरस्यदुःस्वप्नादीन्यनुभवति ।

मृतस्तु गर्भः प्रायेण शीघ्रमेव (आगामिन्यार्त्तवकाले) बहिर्भवति साकल्येन खण्डशो वा । अन्तर्वर्त्तमानो वा क्वचित् तिष्ठति कतिपयसप्ताहान् गर्भकालान्तं चापि यावत् ।

प्राच्योऽप्याहुः—

(१) तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव, भवत्यस्पन्दनो गर्भः, शूलमधिकमुपजायते, न चाव्यः प्रादुर्भवन्ति, योनिर्न

प्रस्रवति, अक्षिणी चास्याः स्रस्ते भवतः, ताम्यति, व्यथते, भ्रमते, श्वसिति, अरतिबहुला च भवति, न चास्या वेगप्रादुर्भावो यथावदुपलभ्यते, इत्येवंलक्षणां मृतगर्भेयमिति विद्यात् ।

—च० शा० ८ ।

( २ ) गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ।
भवत्युच्छ्वासपूतित्वं शूलं चान्तर्मृते शिशौ ॥

—सु० नि० ८ ।

अन्यच्च—

यदा सोऽन्तर्मृतो गर्भः शूनो वस्तिरिवाततः ।
तेनावृताया नार्यास्तु कुक्षिरानह्यते भृशम् ॥
उत्क्षिप्यन्त इवाङ्गानि मूत्रवस्तिश्च भिद्यते ।
क्लोम प्लीहा यकृच्चैव फुफ्फुसं हृदयं तथा ॥
गर्भेण पीडितं ह्येतदूर्ध्वं प्रक्रामति स्त्रियाः ।
सा शूयते मुह्यति च कृच्छ्रोच्छ्वासा च जायते ॥
पूतिगन्धस्तथा स्वेदो जिह्वा तालु च शुष्यति ।
वेपते भ्राम्यति तथा जीवितं चोपरुध्यते ॥
एतैर्लिङ्गैर्विजानीयात् मृतं गर्भं चिकित्सकः ।

—डल्हणोद्धरणम् ।

( ३ ) मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम् ।
गर्भाऽस्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ॥
अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ।

—वा० शा० २ ।

( ४ ) विवृद्धे तु गर्भे स्तब्धं स्तिमितं शीतमश्मगर्भमिवोदरमाभाति । शूलमधिकमुपजायते न च स्पन्दते गर्भो नाव्यः प्रादुर्भवन्ति न स्रवति

---

( ४ ) यदा तु वृद्धो व्यापद्यते तदा गर्भिण्याः स्तब्धोदरादिकत्वं करोतीतीन्दुः ।

योनिरत्त्रिणी चास्याः संस्येते तथा भृशमरतिपरीता व्यथतेऽन्यथा चेग्रते ताम्यति श्राम्यति रोदित्यहर्निशं न स्वपिति पूत्युच्छ्वासा कृच्छ्राच्छ्वसित्यतिकष्टं प्राणिति जल्पतीत्येवंविधां स्त्रियं मृतगर्भां विद्यात्।

—सङ्ग्रहशा० ४।

## कति वा गर्भाः ?

गर्भस्य तावदैक्यानैक्यविचारोऽपि पुरैव चेत् कृतः स्यात्, साधु भवेत्। किरणचित्रदर्शनम्, पृथक् पृथक् स्थानयोः ( स्थानेषु वा ) विषमस्पन्दसंख्यस्य हृदयद्वयस्य (हृदयानां वा) श्रोतृयुगलेन (श्रोतृभिर्वा) समकालिकं शब्दश्रवणम्, स्पर्शपरीक्षया शिरोनितम्बहस्तपादानां संख्याधिक्यप्रत्ययश्च यम-त्रिकाद्यनेकगर्भाणामवबोधकलिङ्गानि भवन्ति।

## अन्योपद्रुतो न वा ?

अन्योपद्रुतो नाम, अन्यैर्मिथ्योदयार्बुदशोणितसङ्कोचगर्भोदकातिरेकपुरःस्थापरादिभिरवस्थाविशेषैरुपद्रुत इति। यथास्वलक्षणैश्च तान्न काले निर्दिशेत।

## कदा च प्रसवो भविता ?

इह खलु विशिष्य तिथिनिर्धारणं, यत्र प्रसवो भविता, एकान्ततो दुःशकम्। अनुमानतस्तु या तिथिरवधार्यते सा सम्भाव्यमानप्रसवमासस्य केन्द्रभूतैव मन्तव्या। तस्या इतस्ततो हि प्रायेण प्रसवारम्भः। चतुर्धा च कालोऽयं विनिर्णीयते—अन्तिमरजोदर्शनतिथितः, गर्भस्फुरणारम्भतिथितः, गर्भाशयवृद्धिसीमतः, गर्भाण्डदैर्घ्यतश्चेति।

( १ ) अन्तिमरजोदर्शनतिथितः—दशमासं ( चत्वारिंशत्सप्ताहात्मकः ) गर्भवास इति सामान्योक्तेरन्तिमरजोदर्शनारम्भतिथितो दशचान्द्र-

( १ ) From the date of last menstruation.

मासानां ( २८० दिवसाः ) परिगणनात् सम्भाव्यप्रसवतिथिरायाति। तथा च गर्भकालोऽयं गौराण्डपश्चाङ्गानुसारेण सप्तदिवसाधिकनवमासमितः, भारतीयचान्द्रवर्षानुसारेण च पञ्चदशाधिकनवमासमित आपद्यते।

( २ ) गर्भस्फुरणारम्भतिथितः—आदिमगर्भस्फुरणं हि सामान्यतोऽष्टादशसप्ताहं मात्राऽनुभूयते। तथा च स्फुरणानुभवतिथितो द्वाविंशतिसप्ताहानां परतो गणनेन प्रसवकाल आयाति।

( ३ ) गर्भाशयवृद्धिसीमतः—वर्धमानगर्भाशयस्य मासिकसीमनिर्देशः पूर्व( १६५ पृष्ठे )मुक्तः। एवञ्च गर्भाशयसीम्ना गर्भकालस्यातीतमासान् विज्ञाय प्रसवकालोऽनुमातव्यः। अष्टमदशमयोस्तु सीमसाम्यम्। तत्र जठरातिवृद्ध्यधोभागगौरवहृदयबन्धनमुक्तिभिर्दशमो विपरीतलक्षणैश्चाष्टमो मासो निर्धारयितुं शक्यः।

( ४ ) गर्भाण्डदैर्घ्यतः—गर्भकालस्योत्तरार्धे मापनयन्त्रेण गर्भाण्डदैर्घ्यं मातुं शक्यम्। तत्र यन्त्रस्य फलकमेकं योनिद्वारा गर्भाण्डस्याधरे प्रान्तेऽपरश्चोदरबाह्यतस्तदुत्तरप्रान्ते सम्यगाधीयते, मानफलञ्च निम्नसारणीमानेन परीक्ष्यते। इत्थञ्चापि गर्भकालस्यातीतमासान् विज्ञाय प्रसवकालोऽनुमीयते। अथ सारणि :—

गर्भकालः ( सप्ताहेषु )—२६, २८, ३०, ३२, ३४, ३६, ३८, ४०
गर्भाण्डदैर्घ्यम्(प्राङ्गुलेषु)—७·२, ७·६, ७·९, ८·३, ८·८, ९·० , ९·५, ९·७

प्रसङ्गाच्चात्र गर्भकालो विमृश्यते :—गर्भकालो नाम गर्भस्य गर्भाशयवासकालः। स च प्रायेण नवमासावधिको ( २७० दिवसमितः ) दृश्यते। मासाष्टकमितो ( २४० दि० ) न्यूनतमकालः, दशमासमितः (३०० दि०) सार्धदशमासमितश्च (३१५ दि०) दीर्घतमकालो दृष्टः। कालभेदे चाव्यर्थमिथुनीभाव-शुक्रशोणितसंयोग-संसृष्टबीजवपनानामनियत-

---

( २ ) From the date of quickening. ( ३ ) From the height of the uterus.( ४ ) From the length of the foetal ovoid.
गर्भकालः Duration of Pregnancy.

कालप्रायतैव प्रधानो हेतुरभिमन्यते। अथ च कालातीतस्थायिताऽपि गर्भस्य दृष्टा, महाकायमानभारगर्भाणां दर्शनात्। अतएवाहुराचार्याः—

(१) तस्मिन्नेकदिवसातिक्रान्तेऽपि नवममासमुपादाय कालमित्याहुराद्दशमान्मासात्। एतावान् कालः। वैकारिकमतः परं कुक्षौ स्थानं गर्भस्य।

—च० शा० ४।

(२) नवमदशमैकादशद्वादशानामन्यतमस्मिन् जायते। अतोऽन्यथा विकारी भवति।

—सु० शा० ३।

(३) तस्मिंस्त्वेकाह्यातेऽपि कालः सूतेरतः परम्।
वर्षाद् विकारकारी स्यात् कुक्षौ वातेन धारितः॥

—वा० शा० १।

अत्राह चक्रपाणिः :—आदशमादिति वचनं प्रशस्ततरप्रसवकालाभिप्रायेण। सुश्रुते द्वादशमासपर्यन्तं सम्यक्प्रसवकालाभिधानं स्तोकदोषयोरेकादशद्वादशमासयोरेवाल्पदोषत्वेनाऽदोषपक्ष एव निक्षेपाद् बोद्धव्यम्। इति। अभियुक्तास्तु पुनः पाश्चात्यन्यायविभागे एकत्रिंशदुत्तरत्रिशतदिवसमितो (एकादशमासमितः) दीर्घतमकालोऽधिकृतः, यः पुनः प्रोषितभर्तृकाया मृतभर्तृकाया वा सति प्रसवे तदौचित्यानौचित्यविचाराय न्यायालयेष्वप्युपयुज्यते। एतदभिप्रेत्यैव सुश्रुतेनाऽपि वर्षमितः कालो निर्दिष्टः स्यादिति वदन्ति।

# तृतीयोऽध्यायः ।

अथातो गर्भकालोतिकर्त्तव्यताविज्ञानीयमध्यायं व्याख्यास्यामः ।

गर्भकालोतिकर्त्तव्यता (गर्भिणीचर्या) नाम यदात्मना गर्भस्य च हिताय गर्भिण्या स्वयमनुष्ठेयं, यच्च भिषजा सूतिकर्मकुशलेन तयोर्हितसाधनायानुष्ठातव्यं, तदाचरणमिति । एवञ्च स्वस्थायाः स्वास्थ्यरक्षणं व्याधितायाः व्याध्युपशमनं गर्भोपघातकरेभ्यः प्रसवबाधाकरेभ्यश्च भावेभ्यस्तस्याः परिरक्षणं कर्त्तव्यमिति फलितम् । तत्रैवमुपदिशेत्—

नित्यं प्रहृष्टा यथासात्म्यं मृदुगृहकर्मसु रता स्यात् । उद्यानादिषु विहरेत् । आस्यासुखमुपसुञ्जाना हि कष्टेन जनयति । उदरभित्तिबलावहानामासनविशेषाणां नियतविधानमपि हितावहम् । न चायासयेच्छरीरम् । अभ्यङ्गशीला स्यात् । दारुणाश्च चेष्टा वर्जयेत् । उत्तरगर्भकाले दूरयात्रां विषमयानादिकञ्च परिहरेत् ।

आहारन्तु सात्म्यं पुष्टिकरमश्नीयात् । पललं नात्युपयुञ्जीत । न च बहुभोजिनी स्यात् । दुर्जरगुरुद्रव्याणि परिहरेत् । द्रवशाकफलप्रायञ्च भुञ्जीत । जीवनीयद्रव्याणि विशेषेण हितावहानि । क्षीरं नवनीतं च सेव्यत्वेनोपदिशन्ति वृद्धाः । मद्यं वर्जयेत्, तीक्ष्णं च विशेषतः । गण्डूषदन्तपावनादिभिश्च यथाकालं मुखविशोधनमावश्यकम् ।

प्रत्यहं च नातिशीतोष्णोदकेन विधिना स्नायात् । बहिर्जननाङ्गानि स्तनौ च परिशोधनीयानि । उत्तरबस्तिं परिहरेदन्यत्र तत्साध्यविकारेभ्यः । न चापेक्षेत व्याधिमुदावर्त्तम् । विबन्धे मृदुशोधनानि व्यवहरेन्न तीव्राणि । वस्त्राणि तु स्वच्छानि ऋत्वनुकूलानि शिथिलं परिधेयानि स्तनोदरपीडन-

---

गर्भकालेतिकर्त्तव्यता Hygiene of Pregnancy or Ante-natal care

परिहाराय। लम्बितोदरी तु जठरबन्धं बिभृयात्, पट्टबन्धं च कुटिलपादशिरा।

व्यवायं न सेवेत। सेवेत चेन्मृदुरतमित्येके। सम्भावितार्त्तवकाले उत्तरगर्भकाले च च्युतिसङ्क्रमणभयात्तदपि परिहरणीयम्। गर्भविच्युतिशीलामस्वस्थामकामां तु सर्वथा नोपेयात्।

भिषक् तु तावत् सामान्यतो विशेषतश्च गर्भिणीं परीक्षेत। मूत्रपरीक्षणमन्तराऽन्तरा विदध्यात्। योनिव्यापदो निरीक्षेत। शरीरभारश्च कियानभिवृद्ध इति तुलायन्त्रेण जानीयात्। तत्र—

**सामान्यतः परीक्षणे**—यक्ष्मवृक्कशोथास्थिमार्दवप्रभृतीनां व्याधीनामितिवृत्तं लभ्यते न वा? कीदृशं हृदयम्? रक्तभारो वृद्धः परिहीणो वा*? कुत्रचनावयवे वैरूप्यमस्ति न वा? चुल्लिकाग्रन्थिरवृद्धो वृद्धो वा? दन्तवेष्टोपजिह्विकादिषु दुष्टिकेन्द्रं विद्यतेऽथवा नेति विजानीयात्। दुर्लक्षणानि चेमानि परीक्षेत, तद्यथा—चिरविबन्धः, उन्निद्रता, वमनातिरेकः, मूत्राल्पता, शिरःशूलम्, शिरोघूर्णनम्, शूनहस्तपादता, मुखशोफः, रक्तस्रुतिः, क्षणिकमान्ध्यम्, नेत्रयोरग्रतश्च स्फुलिङ्गकणानां सन्दर्शनमिति।

**विशेषतः परीक्षणे**—स्तनोदरश्रोणिपरीक्षणं गर्भिण्या आवश्यकम्। गर्भस्य किमवतरणम्? किमासनम्? हृच्छब्दः श्रूयते न वा? शिरश्चास्य श्रोणिकण्ठिकयाऽवगृहीतं न वेत्यादयो विशेषाश्चाऽवगन्तव्या भवन्ति†। तत्र भूतपूर्वो गर्भकालः प्रसवकालः सूतिकाकालश्च निरू-

---

* 128 m m. Hg. मानात् परं वृद्धस्तु लालामेहविषसञ्चारयोः पूर्वरूपत्वेन स्मृतः। तस्मादादौ प्रतिमासं ततश्च प्रतिपक्षं रक्तभारवीक्षणं कार्यमिति नियमः। दुष्टिकेन्द्रम् Septic focus.

† इदन्त्ववधेयम्—यदप्रजाताया नवमे मासि एव भ्रूणशिरः श्रोणिकण्ठिकयावगृह्यते प्रायेण। अनवग्रहे तु सङ्कुचितश्रोणिः, शिरःस्थौल्यम्,

पद्रवः सोपद्रवो वाऽऽसीदिति गर्भिण्याः पुरेतिवृत्तेन, श्रोण्या विविधव्यासमानानि प्राकृतानि वैकृतानि वेति श्रोणिमापनेन, किमवस्थो गर्भ इति चोदरपरीक्षया योनिपरीक्षया किरणचित्रपरीक्षया च विज्ञेयानि। योनिपरीक्षणकालेऽपत्यपथविशेषा अप्यनुसन्धातव्याः। कालश्चास्य विशेषपरीक्षणस्य व्यतीते सार्धसप्तमे मासि भिषजो मन्यन्ते। मिथ्यावतरणान्यपि मासाष्टमव्यत्यये विवर्त्तनविधिना शिरोऽवतरणे परिवर्त्तनीयानि, स्वयंविवर्त्तनस्यातः परमसम्भवात्।

मूत्रपरीक्षणे च शर्कराऽण्डलाला पूयञ्च निर्गच्छति न वेति परीक्ष्यते। परीक्षणं चैतत् षण्मासं यावत् प्रतिमासं, ततः प्रतिपक्षं, दशमे तु मासि प्रतिसप्ताहं कर्त्तव्यमिति नियमः।

शरीरभारपरीक्षणे तु गर्भिण्याः शरीरभारः कियानभिवृद्ध इति जानीयात्। प्रायोऽयं शेटकाष्टकमानात् दशशेटकमानं यावत् क्रमेण वर्द्धते। अतोऽन्यथा वृद्धस्त्वनेकगर्भतां गर्भोदकातिरेकतां शोफावस्थां वा लालामेहानुबद्धामनुमापयति।

योनिरोगपरीक्षणे च फिरङ्गोऽस्या जातो न वा? पूयमेहोऽपि विद्यते किमु? इति गर्भहिताय निर्णयम्। फिरङ्गदुष्टायाः किल गर्भोऽकाल एव स्रवति, विप्रसूतो वा स्यात्, सद्यो वा जातो म्रियते, अल्पायुर्वा विकृतविग्रहो जीवति। पूयमेहेन च नवजातबालस्य नेत्राभिष्यन्दसम्भवः।

प्राञ्चस्तु पुनः सविशेषमाहुः :—

"तस्मादहितानाहारविहारान् प्रजासम्पदमिच्छन्ती स्त्री विशेषेण वर्जयेत्। साध्वाचारा चात्मानमुपचरेद्धिताभ्यामाहारविहाराभ्याम्"।

—च० शा० ८।

---

पश्चिमानुशीर्षासनम्, मलाशये मलसञ्चयो वेति च हेतुत्वेन दृष्टाः। प्रजातायास्तु पुनः प्रसवारम्भ एव शिरः संसज्यते न तु पुरा, उदरभित्तिशैथिल्यादिति।

विवर्त्तनम् Version.

गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवतागुरुब्राह्मणपरा च भवेत् ।

मलिनविकृतहीनगात्राणि न स्पृशेत् । दुर्गन्धदुर्दर्शनानि परिहरेत्, उद्वेजनीयाश्च कथाः ।

बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान्, क्रोधभयसङ्करांश्च भावान्, उच्चैर्भाष्यादिकञ्च परिहरेत्, यानि च गर्भं व्यापादयन्ति ।

न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत, न चायासयेच्छरीरम्, पूर्वोक्तानि च ( ऋतुकालचर्यायां निषिद्धत्वेनोक्तानि ) परिहरेत् ।

शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाध च विदध्यात् ।

शुष्कं पर्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत, हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतं च भोजनं भोजयेत् । सामान्यमेतदाप्रसवात् ।

—सु० शा० १० ।

तदा प्रभृति व्यवायं व्यायाममतितर्पणमतिकर्शनं दिवास्वप्नं रात्रिजागरणं शोकं यानारोहणं भयमुत्कटुकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणं च न सेवेत ।

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते ।
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥

—सु० शा० ३ ।

सा यद्यदिच्छेत् तत्तदस्यै दापयेदन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः ।

गर्भोपघातकरास्त्विमे भावाः—सर्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टाः । इमांश्चान्यानुपदिशन्ति वृद्धाः । देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृयान्न मदकराणि मद्यान्यभ्यवहरेन्न यानमधिरोहेन्न मांसमश्नीयात् । सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत् । यच्चान्यदपि (न कूपमवलोकयेत्, न नदीपारं यायात् इत्यादि) स्त्रियो विद्युः ।

—च० शा० ४ ।

गर्भोपघातकरास्त्विमे भावाः, तद्यथा—उत्कटुकविषमकठिनासनसेविन्या वातमूत्रपुरीषवेगानुपरुन्धत्या दारुणानुचितव्यायामसेविन्यास्तीक्ष्णोष्णातिमात्रसेविन्याः प्रमिताशनसेविन्या गर्भो म्रियतेऽन्तःकुक्षेर्वा अकाले स्रंसते शोषी भवति वा। तथाभिघातप्रपीडनैः श्वभ्रकूपप्रपातोद्देशावलोकनैर्वाऽभीक्ष्णं मातुः प्रपतत्यकाले, तथातिमात्रं संक्षोभिभिर्यानैरप्रियातिमात्रश्रवणैर्वा।

प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्टयति। विवृतशायिनी नक्तञ्चारिणी चोन्मत्तं जनयत्यपस्मारिणं पुनः कलिकलहशीला। व्यवायशीला दुर्वपुषमह्रीकं स्त्रैणं वा। शोकनित्या भीतमपचितमल्पायुषं वा। अभिध्यात्री परोपतापिनमीर्ष्युं स्त्रैणं वा। स्तेनाऽत्यायासबहुलमतिद्रोहिणमकर्मशीलं वा। अमर्षिणी चण्डमौपधिकमसूयकं वा। स्वप्ननित्या तन्द्रालुमबुधमल्पाग्निं वा। मद्यनित्या पिपासालुमल्पस्मृतिमनवस्थितं वा। गोधामांसप्राया शार्करिणमश्मरिणं शनैर्मेहिनं वा। वराहमांसप्राया रक्ताक्षं क्रथनमनतिपरुषरोमाणं वा। मत्स्यमांसनित्या चिरनिमेषं स्तब्धाक्षं वा। मधुरनित्या प्रमेहिनं मूकमतिस्थूलं वा। अम्लनित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा। लवणनित्या शीघ्रवलीपलितं खालित्यरोगिणं वा। कटुकनित्या दुर्बलमल्पशुक्रमनपत्यं वा। तिक्तनित्या शोषिणमबलमपचितं वा। कषायनित्या श्यावमानाहिनमुदावर्तिनं वा। यद्यच्च यस्य यस्य व्याधेर्निदानमुक्तं तत्तदासेवमानान्तर्वत्नी तद्विकारबहुलमपत्यं जनयति। पितृजास्तु शुक्रदोषा मातृजैरपचारैर्व्याख्याता इति गर्भोपघातकरा भावा भवन्त्युक्ताः।

ऐन्द्रीब्राह्मीशतवीर्यासहस्रवीर्याऽमोघाऽव्यथाऽशिवाऽरिष्टावाट्यपुष्पीविष्वक्सेनकान्तेत्येतासामोषधीनां शिरसा दक्षिणेन पाणिना धारणम्। एताभिश्चैव सिद्धस्य पयसः सर्पिषो वा पानम्। एताभिश्चैव पुष्ये पुष्ये स्नानम्। सदा च ताः समालभेत। तथा सर्वासां

जीवनीयोक्तानामोषधीनां सदोपयोगस्तैस्तैरुपयोगविधिभिरिति गर्भस्थापनानि ।

—च० शा० ८ ।

उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥
अतिव्यवायमायासं भारं प्रावरणं गुरु ।
अकालजागरस्वप्नकठिनोत्कटकासनम् ॥
शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम् ।
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ॥
रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम् ।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ॥
तथा रक्तस्रुतिं शुद्धिं वस्तिमामासतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥

—वा० शा० १ ।

व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायैरौषधाहारोपचारैरुपचरेत् । न चास्या वमनविरेचनशिरोविरेचनानि प्रयोजयेत् । न रक्तमवसेचयेत् । सर्वकालं वा नास्थापनमनुवासनं वा कुर्यादन्यत्राऽत्ययिकाद् व्याधेः । अष्टमं मासमुपादाय वमनादिसाध्येषु पुनर्विकारेषु आत्ययिकेषु मृदुभिर्वमनादिभिस्तदर्थकारिभिर्वोपचारः स्यात् । पूर्णमिव तैलपात्रमसंक्षोभयताऽन्तर्वत्नी भवत्युपचर्या ।

—च० शा० ८ ।

---

तदर्थकारिभिरिति—वमनार्थकारि निष्ठीवनम्, विरेचनानुकारिणी फलवर्त्तिः ।

अथ गर्भिण्यां व्याध्युत्पत्तावत्यये छर्दयेन्मधुराम्लेनान्नोपहितेन अनुलोमयेच्च, संशमनीयञ्च मृदु विदध्यादन्नपानयोः। अशनीयाच्च मृदुवीर्यं मधुरप्रायं गर्भाविरुद्धञ्च, गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः।

—सु० शा० १०।

गर्भिणी तीक्ष्णौषधवर्जनीयानाम्।

—च० शा० ८।

व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत्।

—वा० शा० १।

अथाह कश्यपः—

यानि द्रव्याणि पुण्यानि मङ्गल्यानि शुचीनि च।
नवान्यभग्नखण्डानि पुन्नामानि प्रियाणि च॥
गर्भिण्यै तान्युपहरेद्वासांस्याभरणानि च।
न स्त्रीनपुंसकाख्यानि धारयेद्वा लभेत वा॥
धूपितार्चितसंमृष्टं मशकाद्यपवर्जितम्।
ब्रह्मघोषैः सवादित्रैर्वादितं वेश्म शस्यते॥
( प्रातरुत्थाय ) शौचान्ते गुरुदेवार्चने रता।
अर्चेदादित्यमुद्यन्तं गन्धधूपार्घ्यवाजपैः॥
क्षीयमाणं च शशिनमस्तं यान्तं च भास्करम्।
न पश्येद् गर्भिणी नित्यं नाप्युभौ राहुदर्शने॥
सोमार्कौ सग्रहौ श्रुत्वा गर्भिणी गर्भवेश्मनि।
शान्तिहोमपराऽऽसीत मुक्तयोगं च याचयेत्॥
न द्विष्यादतिथिं भिक्षां दद्यान्न प्रतिवारयेत्।
स्वयं प्रज्वलिते चाग्नौ शान्त्यर्थं जुहुयाद्घृतम्॥

पूर्णकुम्भं घृतं माल्यं पूर्णपात्रं घृतं दधि ।
न किञ्चित् प्रतिरुन्धीयान्न च बध्नीत गर्भिणी ॥
सूत्रेण तनुना रज्ज्वा स्तम्भनं बन्धनानि च ।
वर्जयेद् गर्भिणी नित्यं कामं बन्धानि मोचयेत् ॥

—जातिसूत्रीयशारीरम् ।

नित्यं स्नाता च हृष्टा च शुक्लवस्त्रधरा शुचिः ।
देवविप्रपरा सौम्या गर्भिणी पुत्रभागिनी ॥
नैवोन्नता न प्रणता न गुरुं धारयेच्चिरम् ।
उद्वेजनं तथा हास्यं सङ्घातं चापि वर्जयेत् ॥

—गर्भिणीचिकित्सितम् ।

बहुपुत्रामनन्तां च ईश्वरीं मुदितां तथा ।
ब्राह्मीं च सहदेवां च तथा चैवेन्द्रवारुणीम् ॥
जीवकर्षभकौ भार्गीं समङ्गां च तथैव च ।
रोहपादान् वटशुङ्गानात्मगुप्तां तथैव च ॥
अरिष्टपूतनां केशीं शतवीर्यां च पार्थिव !
सहस्रवीर्यां चैतानि प्राजापत्येन संहरेत् ॥
सन्दधेदथ पुष्येण धारयेदुत्तरेषु च ।
त्रैवृतं तु मणिं कृत्वा तं श्रोण्यां गर्भिणी सदा ॥

—अन्तर्वत्नीचिकित्सितम् ।

## अथ मासिकं पथ्यापथ्यम् ।

( १ ) तत्र प्रथमे मासि शङ्कित चेद् गर्भमापन्ना, क्षीरमनुपसंस्कृतं मात्रावच्छीतं काले काले पिबेदन्तर्वत्नी । सात्म्यमेव च पुनर्भोजनं सायं प्रातश्च भुञ्जीत ( च० ) मधुरशीतद्रवप्रायमाहारमुपसेवेत ( सु० ) । प्रथमे मासि गर्भिणी क्षीरमनुपसंस्कृतं मात्रावच्छीतं काले काले पिबेत् ।

तस्मिन्नपि चाद्यं द्वादशरात्रं क्षीरोद्भवं सर्पिःशालिपर्णीपलाशाभ्यां शृतं कनकरजतक्वथितं शीतोदकानुपानं पिबेत्। स्वादु शीतं द्रवप्रायं सात्म्यं च सायं प्रातराहारयेत्। यथोक्तानि च दोषकराणि परिहरेदापञ्चमान्मासात् विशेषेण (अ० स०)।

(२) द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धम् (च०)। मधुरशीतद्रवप्रायमाहारमुपसेवेत (सु०)।

(३) तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य (च०)। विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। तृतीये षष्टिकौदनं पयसा भोजयेत् पूर्ववच्च (सु०)।

(४) चतुर्थे मासे क्षीरनवनीतमक्षमात्रमश्नीयात् (च०)। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितम्। हृद्यमन्नं भोजयेत्। षष्टिकौदनं दध्नेत्येके (सु०)।

(५) पञ्चमे मासे क्षीरसर्पिः (च०) पञ्चमे क्षीरसर्पिःसंसृष्टम् (सु०) षष्टिकौदनं पयसेत्येके (सु०)।

(६) षष्ठे मासे क्षीरसर्पिर्मधुरौषधसिद्धम् (च०)। श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेत्, यवागूं वा। षष्टिकौदनं सर्पिषेत्येके (सु०)।

(७) तदेव सप्तमे मासे (च०)। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धम्। एवमाप्यायते गर्भः (सु०)।

(८) अष्टमे तु मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत्। नेति भद्रकाप्यः, पैङ्गल्याबाधो ह्यस्या गर्भमागच्छेत इति। अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान् पुनर्वसुरात्रेयः नत्वेतन्न कार्यम्*। एवं कुर्वती ह्यरोगाऽरोगबलवर्णस्वरसंहननसम्पदुपेतं ज्ञातीनां श्रेष्ठमपत्यं

---

* पैङ्गल्यस्याल्पदोषत्वादुत्तरकालं सुकरप्रतिक्रियत्वाच्चेति भावः। पैङ्गल्यं नाम आहारप्रभावकृता पैत्तिकी नेत्रवर्णव्यापत्।

जनयति ( च० ) । अत ऊर्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदा-प्रसवकालात्, एवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते । अष्टमे बदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवण-मदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः । ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेत् । अनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति । ( सु० ) गर्भिणीं तु न्युब्ज्जा-मास्थापयेदनुवासयेद्वा । तथास्या विवृतमार्गतया सम्यगौषधमनु-प्रविशति ( अ० स० ) ।

क्षीरपेया च पेयात्र सघृतान्वासनं घृतम् ।
मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।
शताह्वाकल्किती बस्तिः सतैलघृतसैन्धवः ॥ ( वा० )

( ९ ) नवमे तु खल्वेनां मासे मधुरौषधसिद्धेन तैलेनानुवासयेत्, अतश्चैवास्यास्तैलपिचुं योनौ प्रणयेत् गर्भस्थानमार्गस्नेहनार्थम्* ( च० ) ।

शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ।
बहुस्नेहा यवागूर्वा पूर्वोक्तश्चानुवासनम् ॥
तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ।
वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम् ॥
निःस्नेहाङ्गी न नवमान्मासात् प्रभृति वासयेत् ॥ ( वा० )

यदिदं कर्म प्रथमं मासं समुपादायोपदिष्टमानवमान्मासात्, तेन गर्भिण्या गर्भसमये गर्भधारणे कुक्षिकटीपार्श्वपृष्ठं मृदूभवति, वातश्चा-नुलोमः सम्पद्यते, मूत्रपुरीषे च प्रकृतिभूते सुखेन मार्गावापद्येते, चर्म-

---

* स्नेहनान्मार्दवम् मृदुस्निग्धभावाच्च योनिः प्रसवकाले न विदीर्यत इत्यत्र रहस्यम् ।

नखानि च मार्दवमुपयान्ति, बलवर्णौ चोपचीयते, पुत्रं चेष्टं सम्पदुपेतं सुखिनं सुखेनैषा काले प्रजायते ( च० )।

—च० शा० ८। सु० शा० १०। वा० शा० १। सङ्ग्रह शा० ३।

## अथ पुंसवनम्।

निरुक्तिप्रयोजने :—पुमान् सूयतेऽनेनेति पुंसवननिरुक्तिः। तथा च गर्भस्य पुंस्त्वकारकं कर्म पुंसवनमिति फलितम्। कर्म चेदं सम्यक् प्रयुक्तं दैवमप्यतिवर्त्तत इति पौरुषिकाः। गर्भस्थापनत्वात् रूपादिगुण-सम्पद्विधायकत्वाच्चापि कर्मेदं न निरर्थकमित्यन्ये। वचांस्यपि—(१) "तत्र यदि प्राक्कृतेन कर्मणा स्त्रीगर्भः कर्त्तुमाक्षिप्तस्तदा पुरुषप्रयत्ने सत्यपि पुंगर्भः कर्त्तुं न शक्यते। तस्मात् पुंसवनमनर्थकमेवेत्याशङ्क्याह—"बली पुरुषकारो हि दैवमप्यतिवर्त्तते" इत्यरुणदत्तः। (२) पिबेत् पुत्रस्योत्पादनाय स्थितये च—सङ्ग्रहशा० १"। तत्कालमपि पीतो व्यक्तस्यापि परिस्थापनं रक्षाभिधानां स्थितिं करोति—इन्दुः। लब्धगर्भायाश्च लक्ष्मणादिनस्यदानं गर्भस्थापनार्थम्, स्थितगर्भायाश्च मासत्रयाल्पान्तरे पुत्रापत्यजननार्थं नस्यदानम्—डल्हणः। (३) यद्येवं ( शुक्रार्त्तवयोर्न्यूनाधिकसमत्वं हेतुश्चेत् ) तर्हि प्रागुक्तं पुत्रीयकरणं निरर्थकम्? नैतदस्ति ( सामान्यात् शुक्रार्त्तवबलाबलनियमात् विशेषस्य पुंसवन-

---

पुंसवनमिति—लिङ्गपरिवर्त्तनं च नासम्भवमिति नव्या अपि मन्यन्ते। दृष्टं च मानवातिरिक्तप्राणिषु लिङ्गपरिवृत्तिकरकर्मसाफल्यं वैज्ञानिकैः। तत्राहारजलवायुभेषजद्रव्यविशेषैः पुरुषकराणां स्त्रीकराणां वा शारीरग्रन्थीनां बलाबलत्वमाक्षिप्य शुक्रार्तवविशेषकृतो मूललिङ्गप्रवृत्तिहेतुरभिभवितुं शक्य इति तेषामभिमतम्। प्रयत्यते चास्यां दिशि निपुणं साम्प्रतिकैर्विद्वद्भिरिति दिक्।

कर्मणो बलवत्तरत्वात्, सामान्यस्यान्यत्र पुंसवनकर्मणोऽविधानेऽसम्यग् विधाने वा चरितार्थत्वाच्च ), किञ्च श्रेयसा कर्मणा विना नैव रूपादिसङ्गमिनो भवन्ति पुत्राः; उक्तं हि—एवं जाता रूपवन्तः सत्ववन्तश्चिरायुषः । भवन्त्यृणस्य मोक्तारः सत्पुत्राः पुत्रिणे हिता इति, तस्मात् पुत्रीयकरणं सार्थकमेवेति डल्हणः ( सु० शा० ३ ) ।

**कर्मकालः**—तयोः कर्मणा वेदोक्तेन विवर्त्तनमुपदिश्यते प्राग्व्यक्तीभावात् सम्यक् । कर्मणां हि देशकालसम्पदुपेतानां नियतमिष्टफलत्वम् तथेतरेषामितरत्वम् । तस्मादापन्नगर्भां स्त्रियमभिसमीक्ष्य प्राग् व्यक्तीभावात् गर्भस्य पुंसवनमौषधमस्यै दद्यात् इति ।

—च० शा० ८ ।

अव्यक्तः प्रथमे मासि सप्ताहात् कललीभवेत् ।
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥
बली पुरुषकारो हि दैवमप्यतिवर्त्तते ॥

—वा० शा० १ ।

---

प्राग्व्यक्तीभावादिति—यावन्न स्त्रीत्वं पुंस्त्वं वा गर्भस्य व्यक्तं भवति तावदेव तद्वक्ष्यमाणं कर्म लिङ्गपरिवृत्तिकरं भवति । व्यक्तिस्तु द्वितीये मासे भवति यदुक्तं 'द्वितीये मासे घनः सम्पद्यते' इत्यादि । किं वा तृतीये मासेऽङ्गप्रत्यङ्गाभिव्यक्तेर्व्यक्तीभावो ज्ञेयः, द्वितीये तु मासे ग्रन्थ्यादिरूपे गर्भे प्रत्यङ्गव्यक्तीभावो न व्यक्तः । तेन वक्ष्यमाणं कर्म ( पुंसवनं ) मासद्वयं यावदिति चक्रपाणिः । अरुणदत्तस्त्वाह—सप्ताहादनन्तरं यावन्मासं तावदव्यक्ताकृतिः कललीभवेत् । अत्र कललीभूते यावत् स्त्रीपुरुषाद्युत्पत्तिलक्षणा व्यक्तिर्न भवति तावद् व्यक्तेः प्राक् प्रथमे मासि पुंसवनादि प्रयोजयेदिति । नव्या अपि गर्भाधानात् परं षट्सप्ताहं यावदेव अव्यक्तावस्थां ( Indefferent stage ) गर्भस्य मन्यन्ते ।

लब्धगर्भां चैनां विदित्वा प्राग्व्यक्तीभावाद्गर्भस्य पुष्ये पुंसवनानि प्रयुञ्जीत । द्वादशरात्रमित्यन्ये । तत्रापि युग्मदिनेष्विति केचित् । प्रत्यहमित्यपरे ।

—सङ्ग्रहशा० १ ।

कर्मस्वरूपम् :—गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गे अनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां सम्पदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्येण पिबेत्, तथैवापरान् जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं वाप्युपसंस्कृत्य पयसा, कुड्यकीटकं मत्स्यकं वोदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्, तथा कनकमयान् राजतानायसाँश्च पुरुषकानग्निवर्णानणुप्रमाणान् दध्नि पयस्युदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण, पुष्येणैव च शालिपिष्टस्य पच्यमानस्योष्माणमुपाघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहल्यामुपनिधाय दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना । यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा स्त्रियः पुंसवनमिष्टं तच्चानुष्ठेयम् इति पुंसवनानि ।

—च० शा० ८ ।

लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै न च तान् निष्ठीवेत् ।

—सु० शा० २ ।

पुष्ये पुरुषकं हैमं राजतं वाऽथवायसम् ।
कृत्वाग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ॥
गौरदण्डमपामार्गं जीवकर्षभसैर्यकान् ।
पिबेत् पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः ॥

क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ।
पुत्रार्थे दक्षिणे सिञ्चेत् वामे दुहितृवाञ्छया ॥
पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ।
नासयास्येन वा पीतं वटशृङ्गाष्टकं तथा ॥
ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ।

—वा० शा० १ ।

लक्ष्मणावटशृङ्गसहदेवाविश्वदेवानामन्यतमं क्षीरेऽभिपुत्य त्रींश्चतुरो वा बिन्दून् दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना वामे तु दुहितृकामा । न चैतां निष्ठीवेत् । तथा पुष्योद्धृतायाः श्वेतबृहत्या मूलकल्काद्रसं नावयेत् । तद्वच्चोत्पलपत्रं कुमुदपत्रं लक्ष्मणामूलं वटशृङ्गानि चाष्टौ च नावयेत् । शुक्लमाल्याम्बरधरा च नारी पुष्योद्धृताया लक्ष्मणाया मूलकल्कमुदुम्बरमात्रं पयसा पिबेत् पुत्रस्योत्पादनाय स्थितये च । तद्वत् गौरदण्डमपामार्गं जीवकर्षभकौ शङ्खपुष्पीमश्वगन्धां सहचरमग्निजितमग्निजिह्वामष्टौ वा वटशृङ्गानि । शालिपिष्टस्य च पच्यमानस्योष्माणमाघ्राय तद्रसं देहल्यां स्थिता पूर्ववन्नावयेत् । यच्चापि ब्राह्मणा वृद्धस्त्रियो वा ब्रूयुस्तच्च कुर्यात् । ततः प्रजास्थापनानि धारयेत् ।

—सङ्ग्रहशा० १ ।

# चतुर्थोऽध्यायः ।

## अथातो गर्भिणीपरीक्षणविज्ञानीयमध्यायं व्याख्यास्यामः ।

प्रश्नदर्शोदरस्पर्शश्रुतियोनिपरीक्षणैः ।
षोढा स्त्रियं परीक्षेत श्रोण्याः सम्मापनेन च ।

### प्रश्नः ।

तत्रमानि गर्भिणी प्रष्टव्या :—

(१) अन्तिमरजोदर्शनतिथिः, गर्भस्फुरणारम्भतिथिः, गर्भान्तिमचेष्टन-तिथिश्च ।

(२) स्तनोदरपरिवर्त्तनानि ।

(३) प्राक्तनमधुनातनं च गर्भिण्याः स्वास्थ्यम् ।

(४) भूतपूर्वाणां सगर्भावस्थानां प्रकृतिः संख्या च ।

(५) पूर्वं भूतानां प्रसवानां प्रकृतिः । जातापत्यानि जीवन्ति मृतानि वा ? मृतानि चेत् कदा मृतानि ? जन्मन आदौ, परं जन्मकाले वा । कश्च मरणहेतुः ? का चान्तिमशिशोर्जन्मतिथिः ?

(६) मूत्रसंस्थानपाचकसंस्थानयोरवस्था । कियन्मानं कतिधा च मूत्रं प्रसिच्यते । हृल्लासवान्तिक्षुन्नाशाजीर्णविबन्धातीसारलिङ्गानि चोप-लभ्यन्ते किमु ?

(७) अन्याङ्गिकविकारजातानामितिवृत्तम् । योनिव्यापदश्च ।

प्रजायिनी त्वेवं प्रष्टव्या :—

१—कदाऽऽव्यः प्रादुर्भूताः ?

२—जरायुविदरणं जातं न वा ? जातं चेत्, कदा ?

३—प्रवाहणाय चेष्टते न वा इति ।

---

प्रश्नः History or Questioning.

## दर्शनम् ।

तत्र चक्षुषा दृश्यानि गर्भिणीवैलक्षण्यानि, दुःस्वास्थ्यलिङ्गानि, जठरार्बुदलक्षणानि, कष्टप्रसवद्योतकम् अङ्गवैरूप्यं च दर्शनपरीक्षाविषयाः—

(१) गर्भिणीवैलक्षण्यानि—स्तनोदरमुखयोनिगतानि वर्णाकृतिपरिवर्त्तनरूपाणि गर्भजन्यलक्षणान्येव गर्भिणीवैलक्षण्यानि । तानि च पूर्वं विस्तरश उक्तानि ।

( २ ) दुःस्वास्थ्यलिङ्गानि—कार्श्यशोफपाण्डुत्वरक्ताल्पतादिरूपाणि ।

( ३ ) जठरार्बुदलक्षणानि—उदरस्य गर्भापेक्षया विषमाकारा विषमकाला चाभिवृद्धिः ।

( ४ ) अङ्गवैरूप्यम्—अत्युन्नतोदरतया लम्बितोदरतया ह्रस्वकायतया पृष्ठवंशावक्रतया पादविगुणतया च श्रोणिवैरूप्यं संलक्ष्यते ।

## उदरस्पर्शनम् ।

अत्र हि गर्भिण्या उदरे हस्तद्वयं संस्थाप्य तदन्तर्गतानामवयवानां परीक्षणं क्रियते । प्रधानतमश्चायं विधिः, बहुज्ञेयज्ञापकत्वात् निरपायत्वात् अदुःखकरत्वाच्च । योनिपरीक्षणस्य बह्वर्थसाधकत्वेऽपि न नियमेन निरपायत्वं न चादुःखकरत्वम् । गर्भो विद्यते न वा ? किमवतरणः किमासनश्च गर्भः ? उपद्रुतो न वा ? कश्च प्रसवक्रमः ? इति चत्वार्यर्युद्दिश्य विधिरयं प्रवर्त्तते यथावसरम् ।

गर्भनिर्णयाय :—तत्र सुखमुत्तानशायिन्या ईषदुन्नमितशिरोग्रीवायाः पार्श्वकृतप्रसृतबाहोः स्वल्पाकुञ्चितप्रविभक्तसक्थिकाया रिक्तमूत्राशयाया

---

दर्शनम् Inspection. उदरस्पर्शनम् Abdominal palpation.

अनावृतोदराायाश्च स्त्रिया दक्षिणपार्श्वे जानुसन्निधौ तदभिमुखं स्थित उष्णीकृतकरो द्वाभ्यामपि हस्ताभ्यां तदुदरं नाभिपार्श्वयोः संस्पृशेत् अङ्गुलिमुखैश्च मन्दं निर्पीडयेत् उदरभित्तेः स्थौल्यातिवेदनाविज्ञानहेतोः। एवं हि उदरपेश्यः शैथिल्यमास्थिता न परीक्षकस्य प्रत्यवायमावहन्ति। ततश्च गभीरमभिस्पृशेदङ्गुल्यग्रैरर्बुदस्य प्रवृद्धगर्भाशयस्य वा प्रतिरोधविज्ञानाय। अथ चेन्नाभिसमीपे न किमपि प्रतिरुन्धन्निव प्रतीयते, शनैर्हस्तावतार्य्य महाश्रोणिदेशगतान् विशेषान् तथैव परीक्षेत। तत्रापि चेत्प्रतिरोधाभावस्तदा यथाशक्यं श्रोणिकण्ठेऽङ्गुलिनिमज्जनाय प्रयतेत। तदर्थञ्च सततं गभीरमुच्छ्वसेदिति स्त्री वाच्या। उच्छ्वासकाल एव च कराङ्गुलिभिर्दृढं प्रपीड्यते। एवं च प्रतिनिःश्वासमुत्तरोत्तरावकाशलाभेन अङ्गुल्यग्राणि गभीरमाविशन्ति, निवेदयन्ति च श्रोणिकण्ठप्राप्तां काम-प्यभिवृद्धिम्।

अथ चेन्नाभिदेशे प्रतिरोधो ज्ञायते, शनैर्हस्तावुन्नीय नाभ्यग्रपत्रयोर्मध्यदेशः प्रतिरोधसीमविज्ञानाय परीक्षणीयः। इदन्तु प्रतिरोधस्य विशेषविज्ञानम्—परिवृद्धगर्भाशयो हि गोलकाकृतिप्रायो मृदुस्पर्शः समवृद्धो विरताकुञ्चनशीलो मध्यमदेशवर्त्ती च भवति, विपरीतस्थानसंस्थानस्पर्शप्रायाश्चार्बुदादिका इति।

उदयावनरणानिर्णयाय—एतदर्थं च भिषक् दक्षिणसन्निधौ पार्श्वतस्तथैव वर्तमानो यथोक्तस्थितामेव स्त्रियं त्रिविधदेशग्रहैः परीक्षते, सति संशयेऽपि तु पादाभिमुखो भूत्वा चतुर्थदेशग्रहेणापीति पूर्वतो विशेषः।

( १ ) प्रथमग्रहः—मध्यरेखामुभयतो गर्भाशयस्योत्तरभागे गर्भाशयस्कन्धं कराङ्गुलिभिर्यथा क्रोडीकृतं स्यात्तथा हस्तौ निधाय, एकेन गर्भाशयं स्थिरीकृत्य, अपरस्य च करतलेन तत्र तत्र मन्दं पीडयता गर्भस्य किमङ्गमत्र वर्त्तत इति विनिर्णयेत्। प्रायेण वर्त्तुलपिण्डमिव तत्र किमपि प्रतीयते। शिरसा नितम्बेन वा तेन भाव्यम्। तत्र बहुचेष्टं मध्यकायनिरपेक्षचेष्टं समवर्त्तुलं लघुतरं ग्रीवापरिखान्तरितपृष्ठानुबन्धं कठिन-

प्रथमे उदीयमानो गर्भभागः श्रोणिकण्ठे प्रविष्टः प्रविश्य वा तदतिक्रान्त इत्येवमनुमीयते, द्वितीये तु नाद्यावधि श्रोणिकण्ठं प्राप्त इति। श्रोणिकण्ठमतिक्रान्तं तु शिरसि किमासनमधिशेते गर्भ इति पार्श्वान्यतरे महाश्रोण्यां गभीरतरमङ्गुलिनिमज्जनादनुमातव्यम्। तत्र यस्मिन् पार्श्वे पार्श्वेतरात् अङ्गुलयो गभीरतरमाविशन्ति तत्पार्श्वगतमेव तिर्यक्श्रोणिव्यासं गर्भशिरोऽधितिष्ठतीति नियमः। वामे वामं, दक्षिणे च दक्षिणम्। तथा च गर्भपृष्ठस्यापि वामदक्षिणभावं परिज्ञाय सुखेन गर्भासननिर्णयो जायते। तद्यथा—यदा हि गर्भशिरो दक्षिणतिर्यग्व्यासे वर्त्तते, गर्भपृष्ठं चापि दक्षिणतः, तदा दक्षिणपश्चिमानुशीर्षासनमित्येवमिति सर्वं सुस्पष्टम्। अथ चेत् श्रोणिकण्ठं रिक्तं पश्येत्, स्तोकं कराङ्गुलीरुन्नीय महाश्रोणिपार्श्वयोरवस्थितान् गर्भभागाननुसन्दधीत। तत्रानुलम्बं वर्त्तमाने गर्भे उत्तराधरगर्भध्रुवयोरन्यतरः श्रोणिकण्ठस्योपरिष्टाल्लभ्यते। तिर्यग् वर्त्तमाने परिप्लवदास्थिते वा तु गर्भे स एव वंक्षणान्तरिकप्रदेशयोरन्यतरं कुक्षिदेशयोरन्यतरं वा क्रमेणाधितिष्ठति।

एवञ्च, उदरस्पर्शनेन गर्भस्यावस्थानासनावतरणोदयाः सुखं विज्ञायन्त इति सिद्धम्। तत्र गर्भपृष्ठस्य तिर्यगनुलम्बभावेन तिर्यगनुलम्बा गर्भावस्थितिः, पूर्वापरभावेन वामदक्षिणभावेन च तत्तद्गर्भासनानि निर्णीयन्ते। केन ध्रुवेणायमवतरतीति तु लक्षणविशेषैर्ध्रुवद्वयस्य भेदविज्ञानेन निश्चीयते। शिरोऽवतरणे चिबुकानुशीर्षयोरुच्चावचावस्थानेन समावस्थानेन च विभिन्नोदयानां निर्णयः। श्रोण्यवतरणे उदयविशेषविज्ञानं तु प्रायेण दुःशकम्। अनुप्रस्थावतरणे च शिरसो वामदक्षिणभावं पृष्ठस्य च पूर्वापरभावं विज्ञाय गर्भासनानां निर्णयः क्रियते।

उपद्रवोपस्थितिविज्ञानार्थ:—एतदर्थं च भिषक् त्रीणि परीक्षेत—उदीयमानस्य गर्भभागस्य श्रोणिकण्ठेन सह कः सम्बन्धः? कीदृक्स्पष्टतया च गर्भावयवा अनुभूयन्ते? कश्च गर्भाशयसङ्कोचानां गर्भाशयपेशीषु परिणामः? इति।

(१) उदीयमानगर्भभागस्य श्रोणिकण्ठेन सह सम्बन्धः—स च स्थिराऽस्थिरभावरूपः । श्रोणिकण्ठेन सम्यग् गृहीतो गर्भभागः स्थिरीभूतो न वेत्येव तात्पर्यम् । तत्र अप्रजातायां नवमे मासि प्रजातायास्तु सति प्रसवारम्भे गर्भशिरः स्थिरीभवति । श्रोणिकण्ठगर्भावयवयोराकारमान-वैषम्ये सबाधे चावतरणपथे कालेऽपि गर्भशिरसो न स्थैर्यम् । तत्रेमे भावा उदीयमानगर्भभागस्यास्थिरीभावे हेतवो भवन्ति :—मिथ्योदयाः, शिरस्तोयम्, सङ्कुचितश्रोणिः, लम्बितोदरं गर्भाशयस्थानभ्रंशो वा, पुरस्था-ऽपरा, गर्भोदकातिरेकः, अर्बुदानि, बहुगर्भता, वियोन्याकृतिगर्भाश्च । स्थैर्यास्थैर्यविज्ञानाय च तृतीयग्रहविधिना गर्भशिरो गृहीत्वा इतस्ततः परिचालयेत् ।

(२) याहक् स्पष्टतया च गर्भावयवा अनुभूयन्ते :—तत्र स्वाभाविक-दशायां गर्भाङ्गानुभवनं न विशेषेण दुष्करम्, अन्यत्र सुसंहितपेशीकाया दृढसङ्कुचितोदरपेशीकायाश्च स्त्रियाः । अतोऽन्यथा दुष्करप्रतीतिस्तु काममपि वैकृतदशामेव सूचयति, तद्यथा :—गर्भोदकातिरेकः, गर्भाशयार्बुदानि, बीजकोषार्बुदानि, जलोदरम्, गर्भाशयान्तर्भवा शोणितस्रुतिः, अयथास्थिता-ऽपरा, गर्भाशयदृढाकुञ्चनम्, रक्तगुल्मविशेषः, उपशुष्ककगर्भश्च ।

(३) गर्भाशयसङ्कोचानां गर्भाशयपेशीषु परिणामः :—प्रसवकाले हि क्रमशो गर्भाशयपेशीषु कतिपयपरिवर्तनानि जायन्ते । वैकृते विलम्बित-प्रसवे च तान्येव स्फुटतमानि भवन्ति, गर्भाशयसङ्कोचान् आकुञ्चनवलय-स्थितिं रज्जुबन्धनिकं च विशेषेण प्रभावयन्ति । प्रभावविशेषश्चायम् उदरस्पर्शनेन सुखं वेदितुं शक्यः । तत्र गर्भाशयस्योपरि हस्तसंस्थापनेन सङ्कोचानां बलं कालो विरामकालश्च परीक्ष्यः, आकुञ्चनवलयस्य च नाभेरधस्ताद् स्थितिः । वलयं ह्येतत् प्रायेण तिरश्चीनपरिखेव प्रतीयते । रज्जुबन्धनिका तु नाभिपूर्वोर्ध्वजघनकूटयोरन्तराले गर्भाशय-पार्श्वस्पर्शनेन स्थूलरज्जुरिव प्रत्ययमावहति । दक्षिणावविवर्तनात् वामैवेति तु विशेषः ।

## श्रवणम् ।

श्रवणपरीक्षया हि मातृमूलान् गर्भमूलांश्च विभिन्नान् शब्दविशेषानाकर्ण्य अपरायाः सम्भाव्यस्थितिः, गर्भस्य सत्ता जीवनमासन्नावतरणानि संख्या चापि विनिर्णेया। भिषग् हि गर्भिण्या उदरं उरोवीक्षणयन्त्रं स्वकर्णं वा समाधाय तांस्तान् शब्दविशेषानाकर्णयेत्। तत्र उरोवीक्षणयन्त्रप्रयोगे उदरस्यानावृतत्वं कर्णाधाने च तनुना कार्पासवस्त्रेण कौशेयवस्त्रेण वा तस्यावृतत्वमावश्यकम्।

अथ मातृमूलशब्दाः—

(१) गर्भाशयध्वनि :—पूर्वं ( १८३ पृष्ठे ) विस्तरेण प्रपञ्चितः।

(२) हृच्छब्दाः—मातृहृच्छब्दा अपि प्रायेण गर्भाशयस्योपरि श्रोतुं शक्याः। तत्र यदा गर्भहृच्छब्दा मन्दभावाद्धीनं संख्यायन्ते मातृहृच्छब्दाश्च त्वरितभावादधिकं—यथा नाम विलम्बितप्रसवे—तदा ज्ञानविपर्ययो मा भूदिति सर्वदैव गर्भहृच्छब्दपरीक्षणे मातुर्धमनीस्पन्दमपि भिषक् सहैव परीक्षेत। मातृहृच्छब्दा हि मातृधमनीस्पन्दकालसंख्यानं अनुकुर्वन्ति, न गर्भहृच्छब्दाः।

(३) महाधमनीस्पन्दनम्—औदर्यमहाधमन्याः स्पन्दनमपि कदाचित् गर्भाशयप्रतिसङ्क्रान्तं मन्दध्वनिरिव संश्रूयते। मातुर्धमनीस्पन्देन च तत् तुल्यकालम्।

( ४ ) आन्त्रिकध्वनिः—अन्त्रेषु द्रववाय्वोः सञ्चरणात् गुडगुडायमान इव ध्वनिविशेषः कदाचन श्रोतुं शक्यः।

( ५ ) श्वसनध्वनिः—कुत्रचित् विशेषतश्च कष्टश्वसने मर्मरायमाणः श्वसनध्वनिरपि गर्भाशयं प्रतिसङ्क्रान्तो वामपार्श्वे संश्रूयते।

---

श्रवणम् Auscultation. ( १ ) Uterine Souffle. ( २ ) Cardiac Sounds. ( ३ ) Aortic Pulse. ( ४ ) Intestinal Sounds. ( ५ ) Respiratory Sounds.

( ६ ) घर्षणध्वनिः—उदर्यकलाशोथे गर्भाशयोदरभित्त्योः सङ्घर्षणाज्जायमानोऽयं ध्वनिरनुश्रूयते यदा कदा ।

( ७ ) भग्नध्वनिर्बुद्बुदध्वनिर्वा :—गर्भाशयगुहा गर्भाशयप्राचीरं वाऽनयोः समुत्पत्तिस्थानम् । गर्भगलनदशायां च प्रायेणोपलभ्येते । कदाचित्तु वातोदरभित्तौ उदरप्राचीरेऽपि उत्पत्तिर्दृष्टा ।

( ८ ) पेशीशब्दः—सङ्कुचत्पेशीसूत्रादुत्पद्यमानोऽयं ध्वनिर्गर्भाशयस्योपरि मन्दनाद इव आकर्ण्यते ।

अथ गर्भमूलशब्दाः—

( १ ) गर्भहृच्छब्दः—पूर्वम् ( १८४ पृष्ठे ) उपवर्णितः ।

( २ ) नालध्वनिः—अयमपि पुरा ( १८६ पृष्ठे ) व्याख्यातः ।

( ३ ) गर्भचेष्टनध्वनिः—गर्भचेष्टनकाले गर्भाशयभित्तौ जायमाना अनियतकालभवाश्च मन्दमन्दाभिघाताः कदाचन श्रोतुं शक्याः ।

## योनिपरीक्षणम् ।

गर्भनिर्णयाय प्रसवक्रमविनिश्चयाय च परीक्षैषाऽनुष्ठीयते । संयुक्तयोन्युदरपरीक्षणरूपो युग्मविधिरपि योनिपरीक्षणस्यैव प्रकारविशेषः । तत्र सामान्यविधौ वामपार्श्वशयानाया उत्तानशायिन्या वा स्वल्पाकुञ्चितसक्थिजानुकाया खट्वान्ताश्रितनितम्बायाः संशोधितबहिर्भगायाश्च रिक्तगुदवस्तिकायाः स्त्रिया विशुद्धपाणिर्भिषक् वामांगुष्ठतर्जनीभ्यां भगोष्ठावपसार्य दक्षिणकरस्य तर्जनीं तर्जनीमध्यमे वा बहिर्भगेन यथा संस्पर्शो माभूत्तथा योन्यन्तः प्रवेशयेत्, गर्भाशयग्रीवां योनिच्छदिं योनिकलां योनिमुखं च तत्तद्विशेषविज्ञानाय यथाक्रमं परीक्षेत । सङ्क्रमणभयाच्च

---

( ६ ) Friction Sounds. ( ७ ) Crepitary Sounds—Crackling or Bubbling. ( ८ ) Muscular Susurrus.

योनिपरीक्षणम् Vaginal Examination.

सति विशेषप्रयोजन एवास्य विधानं श्रेयस्करम् । अन्यत्र तूदरस्पर्शनेन गुदपरीक्षणेन वा निर्वहणीयोऽर्थः । योनिदुष्टौ तु सर्वथैव निषिद्धोऽयं विधिः ।

ग्रीवार्थं हि भिषजा तदाकृतिप्रमाणमार्दवविकासविदारार्बुदादिकाः सहान्यैर्विशेषैः परीक्षणीयाः । तत्र गर्भनिर्णयदृशा ज्ञेयानि मार्दवादिविशेषलक्षणानि पूर्वं ( १६७ पृष्ठे ) व्याख्यातानि । प्रसवदृष्ट्या त्विमे विशेषा निश्चेतव्याः । अधरगर्भशय्यान्तर्गतत्वात् ग्रीवायाः कियत्कायमानहानिर्जाता ? किमङ्गुलप्रमाणं तन्मुखविकसनम् ? प्रतीयमानस्य चोदीयमानगर्भभागस्य का प्रकृतिः ? उदीयमानगर्भभागः स्थिरीभूतो न वा ? अभिन्नो भिन्नो वा जरायुः ? अभिन्नश्चेत् आवीकाले केन रूपेण स्वात्मानं योनौ प्रकाशयति ? स्तोकं ग्रीवामुखप्रमाणेन, अधिकं गोस्तनाकारेण वा * भिन्नश्चेत् अधिशिरोनामा उदीयमानभागस्योपरि जायमानः

---

* अत्रेदमवधेयम्—अभिन्ने जरायौ गर्भोदकस्य स्थानभेदेन द्विधा प्रविभागो भवति उदीयमानगर्भभागस्य पुरतः स्थितं स्वल्पमानं पूर्वगर्भोदकं (Fore-Waters ) पश्चिमतोऽवस्थितं प्रचुरमानं तु पश्चिमगर्भोदकं (Hind-Waters) नामेति । उभयोः परस्परानुबन्धस्तु वर्त्तत एव । तथापि प्राकृतप्रसवे यदा गर्भशिरोऽधरगर्भशय्यां सम्यगापूर्य्य स्थिरीभवति तदा तयोर्मिथोऽनुबन्धो विच्छिद्यते, न च गर्भाशयसङ्कोचकाले प्रपीडितं पश्चिमगर्भोदकं पुरतः प्रवहति । एवञ्च स्वल्पायतनः पूर्वगर्भोदकधरो जरायुभागोऽपि ( अस्यैव वारिपुटकमिति संज्ञानम् ) सङ्कोचकाले केवलमातन्यत एव न विशेषेण प्रवर्धते, शरावानुकारश्च तिष्ठति । अतोऽन्यथा वैकृते तु प्रसवे ( मिथ्योदयावतरणश्रोणिसङ्कोचादिविकारात्मके ) यत्र उदीयमानगर्भभागो नाधरगर्भशय्यां सम्यगापूरयति तत्र परस्परानुबन्धस्य तादवस्थ्यात् प्रत्यावीकालं प्रपीडितं पश्चिमगर्भोदकं पुरस्तात् प्रवहति, वृद्धमानेन पूर्वगर्भोदकेन भृशमवपीडितो जरायुश्च गोस्तनाकारेण योनावधिकं प्रलम्बते ।

श्वयथुर्निःसंशयं तथात्वेन प्रतीयते न वा ? * अयथाऽस्थिताऽपरा ग्रीवा-मुखप्रत्यासन्ना तु न वर्त्तते ? अष्ठाः किम् नाभिनालहस्तपादाः ? इति ।

योनिच्छदिं तु अर्बुदार्थं श्रोणिकण्ठसङ्कीर्णतार्थं च परीक्षेत, योनिकलां च तद्रूपास्रावव्रणव्रणवस्तुनाडीव्रणार्बुदादिपरिज्ञानार्थम् । योनिद्वारवीक्षणे पुनर्भगस्य प्रमाणं विकसनशीलता व्रणविदारादिविकृतावस्था च परीक्षणीया ।

## संयुक्तयोन्युदरपरीक्षणरूपो युग्मविधिः ।

सोऽयं विधिर्गर्भाशयस्य प्रमाणाकृतिमार्दवविज्ञानाय, श्रोण्यर्बुदनिर्णयाय, अधरगर्भशय्यायाः स्पर्शविशेषपरीक्षणाय, गर्भाशयान्तश्चलद्द्रव्यविनिश्चयाय च प्रयुज्यते । परीक्षाप्रकारस्त्वित्थम्—उत्तानशायिन्याः सङ्कुचितापकृष्टसक्थिकाया रिक्तवस्तिकायाश्च स्त्रियाः पार्श्वतः सम्मुखतो वा वर्त्तमानो भिषक् वामकरेण भगौष्ठावपकृष्य दक्षिणकरस्य तर्जनीं तर्जनीमध्यमे वा योनौ गर्भाशयबहिर्मुखं यावत् सम्प्रवेशयेत्, वामहस्तं च ततो वस्तिप्रदेशे निधाय तदङ्गुलिमुखैर्मध्यरेखायामुदरभित्तिमवपीडयेत्, परीक्षेत चैवं करद्वयाङ्गुलिमध्यगतं जठरार्बुदविशेषम् । उदरस्थहस्तस्य पार्श्वपरिचालनेन जठरार्बुदस्य रूपरेखाऽपि निर्णेया । यदि चैवं किमपि नानुभूयेत तदा योन्याः पश्चिमकोणे कराङ्गुली निधाय, उदरहस्ताङ्गुलीश्च गम्भीरं श्रोण्यामवपीड्य योनिगुदान्तरीयस्थालीपुटम् परीक्षणीयम् ।

---

* कदाचिद्धि अनिबद्धमधिशिरोऽभिन्नजरायुरिव प्रत्ययमावहत्संशाययति चेतः । तत्रायं भेदः—गर्भाशयसङ्कोचकाले जरायुराततो भवति, व्यपगते तु सङ्कोचे पुनः शिथिलः, अधिशिरस्तु नैवं परिवर्त्तते । किञ्च जरायुः प्रपीडितः प्रोन्नमति, नैवमधिशिरः । शिरोरुहा अपि शिरोगतेऽधिशिरसि प्रतीयन्ते । इति ।

संयुक्तयोन्युदरपरीक्षणरूपो युग्मविधिः Combined Abdomino-Vaginae Examination or Bi-Manual Examination.

गर्भाशयमार्दवपरीक्षणं गर्भाशयान्तश्चलद्द्रव्यपरीक्षणं च यथाऽनुष्ठीयते तत् तु विस्तरेण पूर्वं मार्दवगर्भप्रत्याघातपरीक्षणविधावस्माभिः सन्दर्शितम् ।

[ ५६ चित्रम् ]

योनिपरीक्षणम् ।



संयुक्तयोन्युदरपरीक्षणरूपो युग्मविधिः ।

## श्रोणिमापनम् ।

श्रोणिमापनं नाम श्रोण्या विविधव्याससमानमापनम् । इतिवृत्तेन आकृत्या उदरस्पर्शनेन, योनिपरीक्षणेन च यदा श्रोण्या आकारवैषम्यं

---

श्रोणिमापनम् Pelvimetry ( *External* & *Internal* ).

सन्दिह्यते तदा निर्णयार्थं विधिरेष उपयुज्यते। बाह्याऽभ्यन्तरभेदेन च द्विविधं श्रोणिमापनं भवति। तत्राद्यं सुकरम्। द्वितीयं तु यथार्थमान-प्रदर्शकमपि कष्टतम एव विधिः, स्त्रियां मूर्च्छितायामेव यन्त्रसम्प्रयोगस्य दर्शनात्। शक्यं चानुमातुं बाह्यमानेनापि मानमाभ्यन्तरम्। विभिन्न-व्यासानां नामानि स्थिरविन्दवो मानाङ्काश्च पूर्वमुपवर्णिताः। ते च तत्रैव ( ११-१२-१३ पृ० ) द्रष्टव्याः।

[ ५७ चित्रम् ]

बाह्यश्रोणिमापनम्।



पुरःकूटान्तरालिको व्यासः।

तत्र बाह्यविधिमेयास्त्विमे व्यासा भवन्ति—

( १ ) पुरःकूटान्तरालिकः।

( २ ) जघनधारान्तरालिकः।

( ३ ) शिखरकान्तरालिकः।

( ४ ) कटिसन्धानिकान्तरालिकः ।

( ५ ) पश्चिमकूटान्तरालिकः ।

( ६ ) निर्गमद्वारस्यानुदीर्घव्यासः ।

( ७ ) निर्गमद्वारस्यानुप्रस्थव्यासश्चेति ।

तत्र प्रथमद्वितीयतृतीयार्थं सन्निकृष्टसक्थिकाया उत्तानशयानायाश्च स्त्रिया वंक्षणाधरपार्श्वे तदभिमुखो भिषक् तिष्ठेत्, गृह्णीयाच्च संदंशानुकारं बाह्यश्रोणिमापकयन्त्रं द्वाभ्यामपि हस्ताभ्याम् । ततश्च यन्त्रस्य प्रान्तदेशा

[ ५८ चित्रम ]

बाह्यश्रोणिमापनम् ।



जघनधारान्तरालिको व्यासः ।

वङ्गुष्ठतर्जनीभ्यां सन्धाय, मध्यमाङ्गुलिसाहाय्येन तत्तत्स्थिरबिन्दूनभिस्पृशन् यथास्थानं यन्त्रमुखं निवेशयेत्, वृत्तखण्डक्रमाङ्कांश्च शरनिर्दिष्टान् पठित्वा व्यासमानं विजानीयात् । चतुर्थस्य तु कृते उत्थितां पार्श्वशयानां वा स्त्रियं परीक्षेत । पञ्चमाय पुनर्गर्भिणीं पार्श्वेऽधोमुखं वा शाययीत ।

पद्मार्थे हि पार्श्वशयानाया यन्त्रफलकमेकं त्रिकानुत्रिकसन्धिस्थले ( अनुत्रिकाग्रेऽपि क्वचित् ) द्वितीयं तु सन्धानिकाधरस्थले निवेशयेत्, त्रिकानुत्रिकसन्धिस्थौल्यनिरसनाय च लब्धमानं यवकैकमानं सार्धयवकमानं वा ह्रसनीयम्। सप्तमस्तु तावत् अधोकुञ्चितजङ्घोरुके उत्तानासने परी-

[ ५६ चित्रम् ]

बाह्यश्रोणिमापनम्।



कटिसन्धानिकान्तरालिको व्यासः।

क्ष्यः। कुकुन्दरकूटयोरन्तर्धारे चिह्नयित्वा मानस्फोतेन व्यासो मेयः। किं वाऽङ्गुष्ठनखाभ्यां स्थिरबिन्दून् स्वयमभिस्पृशेत्, सहायकश्च विवृत्तमुखेन यन्त्रेण व्यासमानं विलोकयेत्।

---

अधोकुञ्चितजङ्घोरुकमुत्तानासनम् Lithotomy Position. विवृत्तमुखम् With the blades Crossed.

अत्रेदं वक्तव्यम्—जघनधारान्तरालिको व्यासः प्रवेशद्वारस्यानुप्रस्थ-व्यासात् द्विगुणप्रायो भवति, कटिसन्धानिकान्तरालिकश्च तस्यैवा-नुदीर्घव्यासात् सार्धत्रिप्राङ्गुलाधिक इति बाह्यमानेनैव श्रोणिकण्ठमानं भिषजाऽनुमातुं शक्यम् । योनिपरीक्षणेनापि श्रोणिकण्ठस्य वास्तविकोऽ-

[ ६० चित्रम् ]

**आभ्यन्तरश्रोणिमापनम् ।**



श्रोणिकण्ठस्य तिर्यगनुदीर्घव्यासो यथा मीयते तथाऽत्र दर्शितम् ।

नुदीर्घव्यासोऽवधार्यते । तद्यथा दक्षिणहस्तस्य तर्जनीमध्यमे उत्तानशयानाया उपधानोन्नमितनितम्बायाश्च स्त्रिया योनौ प्रवेश्य मध्यमाङ्गुलिमुखेन त्रिको-त्सेधिकास्पर्शनाय यतनीयम्, तर्जनीमूलं च यत्र भगसन्धानिकाधरं स्पृशति तत्स्थलं द्वितीयतर्जन्या अङ्कनीयम् । ततश्च योनितो दक्षिणकरं निःसार्य मध्यमाग्रतः तर्जनीमूलाङ्कं यावत् दैर्घ्यं मापयेत् । एवं हि श्रोणिकण्ठस्य तिर्यगनुदीर्घव्यासः प्राप्यते, लभ्यते च प्राङ्गुलार्धात् पादानप्राङ्गुलं

यावत् दैर्घ्यह्रसनात् प्रवेशद्वारस्य वास्तविकोऽनुदीर्घव्यासः । त्रिकात्सेत्रि-कायाः सुखप्राप्तिस्तु श्रोणिसङ्कोचं द्योतयति ।

अपि च जघनधारान्तरालिके पुरःकूटान्तरालिके च व्यासे प्राङ्गुलमितो यो मानभेदः स स्थिरसाम्यः, सूचयति च जघनधारावक्रिम्णः श्रोण्याश्च प्राकृतदशाम । अन्यथाभावस्तु सङ्कुचितश्रोणीकाया आयतश्रोणीकाया वा स्त्रिया दृश्यते । तत्र निश्चितमानभेदस्य हीनत्वे श्रोण्यायामः, मानभेदस्य तथात्वेऽपि व्यासद्वयस्य हीनमानत्वे श्रोणिसङ्कोच इत्यनुमीयते । वस्तुतस्तु श्रोणिप्रमाणापेक्षया श्रोणिकण्ठगर्भशिरसारापेक्षिकप्रमाणमेव विशिष्यते । उत्तानशयानायाः स्त्रिया गर्भशिरो गृहीत्वा श्रोणिकण्ठेऽवपीडनेन च सुखेन तद् विज्ञेयम् ।

---

तिर्यगनुदीर्घव्यासः Diagonal or oblique conjugate.

वास्तविकानुदीर्घव्यासः Obstatrical or True conjugate.

# प्रथमोऽध्यायः ।

## अथातः प्रसवविज्ञानीयमध्यायं व्याख्यास्यामः ।

प्रसवो नाम कर्मविशेषः, येन गर्भो गर्भोदकम् अपरा जरायुश्चेति सर्वं गर्भाशयाद् वियुज्य बहिर्भवति । द्विविधश्चैष प्राकृतवैकृतभेदात् । तत्र प्राकृतप्रसवो नाम यत्र गर्भोऽवाक्शिरा उद्भिन्नमध्यशीर्षो निरुपद्रवः स्वभावेनैव (भिषक्साहाय्यमनपेक्ष्येति यावत्) अहोरात्राभ्यन्तरं प्रसूयते । अतोऽन्यथा प्रसवो वैकृतः । वचनञ्च—"स चोपस्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवृत्यावाक्शिरा निष्क्रामत्यपत्यपथेन, एषा प्रकृति-र्विकृतिः पुनरतोऽन्यथा" इति । च० शा० ८ ।

आसन्नप्रसवः—अनियतकाललक्षणीयमवस्था । प्रसवारम्भस्य द्वित्र-दिनात् पूर्वं लक्षणानि प्रादुर्भवन्ति, अप्रजातासु व्यक्तानि, अव्य-क्तानि च प्रजातासु । क्वचित्तु प्रजातासु सर्वथैव लक्षणाभावः । अत्र-श्वीनाया लक्षणवर्गस्त्वयम्—मिथ्याऽऽव्यः, ग्रीवाल्पविकसनम्, ग्रीवाति-मार्दवम्, श्लेष्मासृग्दर्शनम्, बहिर्भगशोफश्चेति । मिथ्याऽऽव्या हि अनि-यतकालागमा भवन्ति, स्थानविशेषमनधिकृत्य च प्रायेण भवन्त्येवोदरे प्रतीयन्ते । ग्रीवाल्पविकसनं प्रायेण प्रजातास्वेव दृश्यते, अप्रजातासु च ग्रीवातिमार्दवम् । ग्रीवासरण्यापूरणी श्लेष्मार्गलिका नृभयोरपि निरस्यते । श्लेष्मलकलाजनितोऽन्तर्मुखसमीपे जरायुवियोगात् रक्तान्वितश्च यो

---

प्राकृतप्रसवः Normal Labour. वैकृतप्रसवः Abnormal Labour.
आसन्नप्रसवः Premonitory Stage.

नाम श्लेष्मस्रवो ग्रीवामुखान्निर्याति तदेव श्लेष्मासृग्दर्शनम् । अवतरता गर्भशिरसा शिराणां व्यवपीडनादसम्यक् प्रतिनिवर्त्तमानं तु रक्तं बहिर्भग-शोफं जनयति ।

केचित्तु गर्भाशयावस्रंसनम् गर्भशिरोऽवग्रहं चापि वर्गेऽस्मिन् निवेशयन्ति । तन्नातिसङ्गतम् । विप्रकृष्टत्वेन अद्य श्वः प्रकुर्वाणाया लक्षणत्वाऽयोगात् । उभयमप्येतत् प्रसवारम्भस्य कतिपयसप्ताहात् प्रागेव निर्वर्त्तते । गर्भाशयावस्रंसनेन विमुक्तभारमहाप्राचीरा गर्भिणी सुखेन श्वसिति लाघवञ्चानुभवति, गुरुनिम्नभागा चाभीक्ष्णं मूत्रयति कष्टेन च प्रचलति ।

प्राञ्चोऽप्याहुः—

( १ ) तस्यास्तु खलु इमानि लिङ्गानि प्रजननकालमभितो भवन्ति । तद्यथा क्लमो गात्राणां ग्लानिराननस्य अक्ष्णोः शैथिल्यम् विमुक्तबन्धनत्वमिव वक्षसः कुक्षेरवस्रंसनम् अधोगुरुत्वम् वंक्षणवस्तिकटीकुक्षिपार्श्वपृष्ठ-निस्तोदो योनेः प्रस्रवणम् अनन्नाभिलाषश्चेति ।

—च० शा० ८ ।

( २ ) जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने ।
सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥

तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखाच्छ्लेष्मा च ।

—सु० शा० १० ।

( ३ ) कुक्षेश्च स्यादवस्रंसस्त्वधोभागस्य गौरवम् ।

— जातिसूत्रीयशारीरे काश्यपः ।

## प्रसवक्रमः ।

प्रसवो हि वर्णनासौकर्याय घटनाक्रममुद्दिश्य त्रिधा विभज्यतेऽवस्था-भेदेन । तत्र प्रथमा प्रसरणावस्था नाम । सा हि आवीप्रादुर्भावादारभ्य ग्रीवाविकसनं जरायुविदरणं यावन्मीयमाना गर्भोदकप्रसेकावसाना च । कालस्तु तस्या अप्रजातासु अष्टादिद्वादशान्तः ( षोडश वा ) प्रजातासु च पञ्चादिसप्तान्तो ( दश वा ) होरामानेन दृष्टः । द्वितीया विशल्य-भावावस्था तु ग्रीवायाः पूर्णविकसनात् गर्भजन्मपर्यन्तं गण्यते, एकादि-द्व्यन्तहोरामानाऽप्रजातासु दशादिपञ्चदशान्तप्रपलमाना च ( त्रिंशद्वा ) प्रजातासु । तृतीया अपराविमोक्षावस्था पुनः गर्भजननादपरानिर्गमं यावद्वर्त्तते, अप्रजातासु सार्धहोरामिता होरार्धमिता च प्रजातासु । एवञ्च साकल्येन प्रसवक्रियाकालो द्वादशादिचतुर्दशान्तहोरामितोऽप्रजातासु ( अष्टादश वा ) षडाद्यष्टान्तहोरामानश्च ( द्वादश वा ) प्रजातासु सम्पद्यते । तदेतत् सामान्यत उक्तम् । विस्तरस्त्वत ऊर्ध्वम् ।

## प्रथमावस्था ।

आवीप्रादुर्भावो हि प्रसवारम्भलक्षणम् । आव्यस्तु प्रसववेदनाः । अनैच्छिक्यः सान्तरा नियमिताः सशूलाश्चेति च तासां स्वरूपम् । क्रमेण चैता उत्तरोत्तरं तीव्रतराः स्वल्पतरविरामा दीर्घतरकालस्थायिन्यश्च भवन्ति । या ह्यादौ त्रिंशत्प्रविपलप्रायस्थायिन्यो दशादित्रिंशदन्तप्रपलविरामाश्च दृष्टाः, ता एवोत्तरं द्विगुणकालस्थायिन्यस्त्रिगुणकालस्थायिन्यो वा द्वित्र-प्रपलविरामाः सम्पद्यन्ते, निरवच्छिन्नप्रायाश्च गर्भजन्मनि । ता इमा

---

प्रसवक्रमः Stages of Labour. प्रथमा प्रसरणावस्था First Stage or Stage of dilatation द्वितीया विशल्यभावावस्था The Second Stage or Stage of expulsion. तृतीया अपराविमोक्षावस्था The Third Stage or Placental Stage. आव्यः Labour Pains.

पृष्ठत: समुद्भूय सवक्ष्युदराभिमुखं पूर्वतोऽभिप्रवर्त्तन्ते । विपरीतसमुत्थान-गमना वाऽपि क्वचिद् दृष्टाः । तीव्रवेदनाकाले च स्त्रीरुच्चैः क्रन्दति यतते च शान्तिमधिगन्तुं पुरतः शरीरमवनम्य किमप्यवलम्ब्य वा । त्रिकदेशपीडनञ्च तदैनां सुखयति । प्रकृतिस्थानकारणानि त्वासां प्रसवा-वस्थानुसारं भिद्यन्ते । तत्र प्रथमावस्थायां त्रिकदेशे ( मुख्यतः ) गर्भा-शयपार्श्वयोश्च वेदना जायन्ते नातितीव्राः । ग्रीवातिकर्षणं गर्भाशया-कुञ्चनञ्च तासां हेतुः । द्वितीयावस्थायां पुनर्गर्भाशयत्रिकश्रोणिजङ्घोरुषु तीव्रतरा वेदना अनुभूयन्ते । तत्र प्राचीरगतनाडीनिपीडनाद् गर्भाशये, योनिमूलपीठयोरतिकर्षणाच्छ्रोणित्रिकयोः, त्रिकनाडीजालपीडनाच्च जङ्घोरुषु तासां समुत्थानम् । तृतीयावस्थायां तु प्राचीरगतनाडीनिपीडनात् गर्भाशय एव ताः प्रतीयन्ते, नातितीव्राश्च भवन्ति ।

गर्भाशयस्य पुनः पुनः सङ्कोचेन च गर्भशिरः ( अस्थिरं चेत् ) स्थिरी-भवति, ग्रीवान्तर्मुखं विकसति, जरायुभागश्च तत्प्रत्यासन्नो वियुज्यते । पूर्वगर्भोदकधरश्चायं वियुक्तो जरायुः 'वारिपुटक'रूपेण वर्धमानो ग्रीवा-सरणिं विस्फारयति । जरायुवियोगात्, ग्रैवश्लेष्मलकलायाः स्वल्पं विदरणात्, श्लेष्मार्गलिकाया विस्रंसनाच्चैव रक्तमिश्रः श्लेष्मस्रावो योनि-मुखात् प्रसिच्यते प्रसवारम्भज्ञापकः । ततश्च ग्रीवायाः पूर्णविकसने सति उपष्टम्भविनशनात् वारिपुटकं भिद्यते प्रसिच्यते च पूर्वगर्भोदकम् । विकृतावतरणे तु जरायोरकालभेदेन ग्रीवायाः सम्यग् विकसनात् प्रागपि गर्भोदकप्रसेको दृश्यते । ( २३३पृष्ठगता टिप्पणीरत्र द्रष्टव्या ) । क्वचित्तु ग्रीवायाः पूर्णविकासेऽपि दृढो जरायुर्न भिद्यते । तत्र स्वयमङ्गुल्यैव भिषक् जरायुं दारयेत् । असति त्वेवं जरायुणावृत एव गर्भो निर्गच्छति, तज्जीवनकाङ्क्षिणा च भिषजा द्रागेव जरायुं विदार्य स्वतन्त्रः क्रियते । अवस्थान्ते च प्रायेण वान्तिरपि मातुर्दृष्टा । एवञ्च गर्भाशयसङ्कोचाः,

---

वारिपुटकम् Bag of Water.

गर्भशिरःस्थैर्यं, ग्रीवाविकसनं, जरायुभेदश्चेति प्रथमावस्थायां घटनाक्रमः फलितः ।

स्मर्त्तव्यश्चात्र—द्विविधा आव्यो भवन्ति, सत्यासत्यभेदात् । तत्र सत्यासु गर्भाशयसङ्कोचसमुत्थानासु कटिपृष्ठवेदना, नियतकालोपस्थितिः, गर्भाशयस्य दृढीभवनम्, योनिपरीक्षणे जरायूत्तंसनप्रतीतिश्चेति विशेषः । असत्यासु तु वस्त्यन्त्रोदरप्राचीरसङ्कोचमूलासु उदरवेदना, अनियतकालागमनम्, गर्भाशयदार्ढ्याभावः, जरायोश्चानुत्तंसनमिति ।

## द्वितीयावस्था ।

जरायुभेदानन्तरं क्षणं शान्ता अपि प्रसववेदनाः पुनस्तीव्रायन्ते, प्रणुद्यते च तेन लब्धमार्गो गर्भो योनिद्वाराभिमुखं क्रमेण । उदरपेश्यो महाप्राचीरा चापि कर्मण्यत्र सहाया भवन्ति प्रवाहणैककार्याः । प्रवाहणञ्च प्राक् स्वेच्छाधीनमपि, उत्तरमस्या अनिच्छन्त्या अपि क्रियाः स्वभावतोऽभिजायते ।

पीडाकाले च गुर्विणी किमपि वस्तु दृढमालिङ्ग्य शय्यापादं वा स्वपद्भ्यां निपीड्य आस्ते । दीर्घमुच्छ्वस्य यथाशक्यमवष्टभ्नोति निःश्वासं, प्रवाहते च । मुखमस्या नीलवर्णं भवति । गात्रं स्विद्यते । पीडात्यये च कतिपयदीर्घश्वासान् गृह्णाति ।

प्रत्यावीकालश्च गर्भशिरोऽधस्तात् प्रपद्यते, ईषत् प्रत्युद्गच्छति च तदिरतौ । अधः प्रतिपद्यमानं च तत् मूलपीठमुन्नमयति, योनिमुखं च विकासयति, गुदनलिकां चापि प्रपीडयति । अतएव वारं वारं मलत्यागस्योत्कटेच्छां स्त्री प्रकटयति । अविशोधितमलाशयायास्तु प्रतिवेगं पुरीषमुत्सृज्यते ।

---

सत्याव्यः True Pains. मिथ्याव्यः False Pains.

एवं गतागतं कुर्वदपि गर्भशिरः क्रमेणार्वागेव प्रतिपद्यते, भगसन्धानिकाया अधस्तात् सम्प्राप्तं च पायुधारण्या स्थिरीकृतं न प्रत्युद्गच्छति, बहिष्क्रियते च ततो बलवत्तरगर्भाशयसङ्कोचेन श्रोणितलप्रचेष्टनेन च योनिमुखात्। सोऽयमतिशयेन कष्टकरः कालः स्त्रियाः परिगण्यते। वेदनाकुला आरुच्चैराक्रोशति। आक्रोशकाले च स्वभावतः प्रवाहणं निरुध्यते। तेन न गर्भशिरसः सहसा विमोक्षो भवति। सहसा मोक्षो हि मूलपीठमस्या दारयेत्। ततश्च स्कन्धदेशो मध्यगात्रं निम्नशाखे च क्रमादचिरेणैव बहिर्भवन्ति। पश्चिमगर्भोदकं चावशिष्टं प्रसिच्यते। तथा चायं द्वितीयावस्थायां घटनाक्रमः—गर्भाशयसङ्कोचाः, प्रवाहणम्, गर्भनिर्हरणञ्चेति।

## तृतीयावस्था।

एवं विगतशल्या च स्त्री प्रायेण स्वल्पकालाय(दश पञ्चदश वा प्रपलानि) आवीनां विरमणात् शान्तिमधिगच्छति। ततः प्रतिपञ्चप्रपलं पुनराव्यः समुद्भवन्ति। गर्भाशयस्तु स्थिरसङ्कोचैः ह्रसितदैर्घ्यो नाभिदेशे तिष्ठति, सङ्कोचकाले घनकठिनो विरामकाले चेषन्मृदुः प्रतीयते। प्रत्यावीवेगञ्च बहुधा शोणितास्रावो दृष्ट आविलामोद्गमनः। बलवत्तरसङ्कोचेन च ततो वियुक्ताऽपरा योनिमुखाद् बहिर्भवति। योनौ वाऽवतिष्ठते सङ्कोचदौर्बल्यात् कदाचित्। जरायुश्चापि निर्गच्छन्त्याऽमरया सहैवाकृष्यमाणो विवृत्तस्तरद्वयः सन् बहिरायाति। ततश्च पुनः शोणितस्रुतिर्जायते। साकल्येन च प्राकृतप्रसवे दश विंशतिर्वा प्रशुक्तयो रक्तस्य स्रवन्ति। तत्र चतुष्पञ्चप्रशुक्तयोऽपराप्रतिपत्तेः प्राक् निस्रवन्ति, शेषास्तु प्रपन्नापरामनुवर्त्तन्त इति विशेषः। स्वभावतश्चायं रक्तस्रावः प्रतिरुध्यते गर्भाशयस्य स्थायिसङ्कोचेन शिराधमनीप्रपीडनात्। गर्भाशयसङ्कोचः, अपरान्तर्विमुक्तिः, अपरानिर्गमश्चेति च घटनाक्रमः। काले चास्मिन् सूतायाः प्रायेण शैत्यानुभूतिर्वेपथुश्चापि प्रजायते स्वेदेन शीतगात्रत्वात्, परिश्रान्त-

शरीरत्वात्, अपरीयरक्तसंवहनावरोधेन औदर्यरक्तसंवहनस्य पुनर्व्यवस्थानाच्च ।

अपरावियुक्तिनिर्गमप्रकारस्त्वित्थम् — उत्तरगर्भशय्यायाः सङ्कोचस्थिरसङ्कोचाभ्यां यथा यथाऽपरादेशः संवृणुते तथा 'तथा तल्लग्नाऽपरा पारस्परिकसम्बन्धविच्छेदात् वियुज्यते । रक्तमपि पृष्ठतः परिस्रुतं तां वियोजयति । एवं विमुक्ता च सा कदाचित् उद्वृत्तच्छत्रनिभेव कदाचिच्च अनुदैर्घ्यदशायां पुटीकृतकायेव बहिः प्रपद्यते ।

[ ६१ चित्रम् ]

अपराविमुक्तिः ।



चित्रेऽस्मिन् गर्भाशयभित्तिसंहरणेन वियुज्यमानाऽपरा निदर्शिता ।

प्राच्योऽप्याहुः—

प्रथमावस्था :—( १ ) ततोऽनन्तरमावीनां प्रादुर्भावः, प्रसेकश्च गर्भोदकस्य ।

—च० शा० ८ ।

( २ ) तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखाच्छ्लेष्मा च ।

—सु० शा० १० ।

( ३ ) आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः।

—वा० शा० १।

द्वितीयावस्था—( १ ) सा यदा जानीयात् विमुच्य हृदयम् उदरमस्यास्त्वाविशति, वस्तिशिरोऽवगृह्णाति, त्वरयन्त्येनामाव्यः, परिवर्त्ततेऽधो-गर्भः। इति।

—च० शा० ८

( २ ) गर्भः प्रयात्यत्रावेगं तल्लिङ्गं हृद्विमोक्षतः।
आविश्य जठरं गर्भो वस्तेरुपरि तिष्ठति॥
आव्यो हि त्वरयन्त्येनाम्.................।

—वा० शा० १।

( ३ ) यदा गर्भोदकं योनौ सशूलं सम्प्रवर्त्तते।
कालेन चोदितो गर्भो विमुच्य हृदयोदरम्॥
वस्तिशीर्षमधोभागमवगृह्णाति जन्मनि।
ग्लानिश्च जायतेऽत्यर्थं योन्युत्पीडनभेदनम्॥
इत्येतैः कारणैर्विद्यात् गर्भस्य परिवर्त्तनम्।
अथास्याः प्रसवश्चेति.....................॥

—जातिसूत्रीयशारीरे कश्यपः।

तृतीयावस्था—यदा च प्रजाता स्यात्तदैवैनामवेक्षेत कदाचिदस्या अपरा प्रपन्नाऽप्रपन्ना वेति।

—च० शा० ८।

## अथ प्रसवहेतुः।

आवीमूलानां गर्भाशयसङ्कोचानां प्रादुर्भाव एव प्रसवकारणम्। केन हेतुना कथञ्च काले तेऽभिप्रवर्त्तन्त इति तु पर्यवेक्ष्यम्।

---

प्रसवहेतुः Causes of Labour.

त्रिविधा हि नाड्यो गर्भाशयमनुप्राणयन्ति—(क) अनुत्रिकनाडीद्वारीकृत्य प्रसृता नाड्यो मेरुजाः, या नाम सुषुम्नाशीर्षस्थितेन कटिसुषुम्नास्थितेन चैकैकेन केन्द्रेण नियन्त्र्यन्ते । (ख) महाधामनिकात्, आन्त्रिकात् अधिवरितकाख्य नाडीचक्रान्निर्गताः परिगर्भाशयनाडीचक्रप्रवेशिन्यो नाड्यः । (ग) ग्रैवनाडीगण्डसमुत्थाश्च नाड्यः । एता एव नाड्यः सुषुम्नाशीर्षस्थितस्य केन्द्रस्य संक्षोभात्, अथवा कटिसुषुम्नास्थितस्य स्वतन्त्रनाडीग्रन्थिस्थितस्य वा केन्द्रस्य प्रतिसङ्क्रमितक्षोभात् प्रवृत्तांश्चेष्टावेगान् गर्भाशयं प्रापयन्ति ।

केन्द्रक्षोभकरास्त्विमे भावा भवन्ति :—(क) आङ्गारिकबाष्पस्याधिक्यम्, महातिक्तार्गटविषतिन्दुकप्रभृतीनि द्रव्याणि, तीव्रज्वरः, अतिरक्तस्रुतिश्च । (ख) ग्रीवाविस्फारणम्, जरायुवियोगः गर्भाशयरक्तकुल्यासु आङ्गारिक बाष्पस्य प्रमाणाधिक्यम्, स्तनप्रहर्षः, गर्भाशयक्षुब्धता चेति । तत्राद्यो वर्गः सुषुम्नाशीर्षस्थितं केन्द्रं द्वितीयस्तु कटिसुषुम्नागतं स्वतन्त्रनाडीग्रन्थिगतं वा केन्द्रं समुत्तेजयतीति विशेषः ।

कालप्रसवहेतुवादे तु बहुविधा विप्रतिवादाः सन्ति । तत्र नानाविधभावानां समुदय एव प्रसवस्य कालारम्भे हेतुर्न केवलमेको भाव इति तु सम्मतः पन्थाः । विप्रतिवादास्त्वित्थम् :—

(१) ग्रीवाविस्फारणम्—प्रारम्भिकमासेषु मांसधातोर्भृशमुपचयात् वर्धमानकायमानस्यापि गर्भाशयस्य न स्थौल्यप्रमाणं हीयते । उत्तरमासेषु तु स्फीतिकृता तनुतैव तस्य दृष्टा । न चेयमवस्था परतोऽधिकं सम्भाव्यते । गर्भवृद्धिमसहमानो हि गर्भाशयस्तदाऽधरगर्भशय्यामन्तमुखं च प्रति गर्भं पीडयति । ग्रीवान्तमुखं च तेन विकसति । तदिदं ग्रीवाविस्फारणमेव गर्भाशयसङ्कोचानां प्रारम्भे हेतुर्भवति । अतएव च बलाद्

---

संक्षोभः Direct Irritation. प्रतिसङ्क्रमितक्षोभः Reflex irritation.

(१) Dilatation of the Cervix.

ग्रीवाविस्फारणेन सङ्कोचान् संजनय्य प्रसवं प्रवर्त्तयन्ति भिषजः स्वेनाऽप्रवर्त्तमानमित्येके। यमलगर्भे गर्भोदकातिरेके च गर्भाशयस्य सत्यपि प्राक्कालिके तन्तुतरभावे न पूर्वकालिकः प्रसवो दृश्यते, अनुप्रस्थावतरणे औदर्य्यगर्भदशायां च स्फीतिकृततनुताया अभावेऽपि यथाकालं प्रसवो जायते । एवञ्चान्वयव्यतिरेकाभावान्नेदमेव केवलो हेतुरित्याहुरपरे ।

( २ ) जरायुवियोगः—अन्तिमे मासि गर्भधरकलायामपचितिर्जायते, वियुज्यते च तेन जरायुः । सोऽयं जरायुवियोगोऽपि बहुभिर्हेतुत्वेन दृष्टः । परं तु नेदं सहन्ते, प्राक्तदशायां तादृशापचितेरदर्शनात् ।

( ३ ) आङ्गारिकवाष्पस्याधिक्यम्—मातृरक्ते प्रवृद्धं बाष्पमिदं गर्भाशयसङ्कोचान् जनयतीति केचित् । दृष्टं च गर्भकालान्ते मातुरसृजि तदाधिक्यमपि । किन्तु क्रमेणैतत् सम्पद्यते, कथन्नाम सहसैव सम्भूय सङ्कोचान् प्रवर्तयतीति तु चित्रमेव । अतएव गौणोऽयं हेतुरित्यन्ये वदन्ति ।

( ४ ) गर्भाशयप्रक्षुब्धता—गर्भकाले गर्भाशयस्य विरताकुञ्चनशीलता वस्तुतस्तत्क्षोभजनितैव । मन्दमन्दसङ्कोचाश्चैताः सम्भावितार्त्तवस्रावकाले उत्तरोत्तरं तीव्रायन्ते, दर्शयन्ति च निरुद्धेऽप्यार्त्तवे तदन्तर्व्यापारप्रक्रमम्। सोऽयं क्रमेण वर्द्धमानो गर्भाशयक्षोभोऽपि सहान्यैर्भावैर्हेतुत्वेन सम्भाव्यते बहुभिः ।

( ५ ) गर्भसंवर्त्तनद्रव्याणि—ये नाम द्रव्यविशेषा वर्धमानगर्भेण प्रागुपयुज्यन्ते त एव सति प्रगल्भे गर्भे क्रमेण मातृरुधिरे सञ्चीयन्ते, जनयन्ति च काले स्वप्रभावेण गर्भाशयसङ्कोचान् । मतञ्चेदं तर्कसम्मतमिति बहूनां प्रकृतिविदामभिमतम् । परिपक्वापरात एव केचन द्रव्य-

---

( २ ) Detachment of the Membranes. ( ३ ) Excess of Carbon Dioxide in the Circulation. अपचितिः Degeneration. (४) Increased Irritability of Uterus. ( ५ ) Metabolic Products of Foetus.

विशेषाः समुत्पद्यन्ते ये नाम सुषुम्नागतं प्रसवकेन्द्रं व्युत्तेजयन्तीति तु केचित् ।

( ६ ) आन्तररसः—क्रमेण क्षेत्रसञ्जननरसस्य सति बलक्षये पश्चिमपोषणिकास्रावप्रभावजोऽयं विशेष इत्याधुनिकाः ।

( ७ ) प्रकृतिः—इतरे तु नानावादेभ्य उद्विज्य प्रकृतिरेवेदृशीत्युक्त्वा विश्राम्यन्ति । हृच्चक्रं यथा प्रविपलैकप्रायम्, श्वसनचक्रं चतुष्प्रविपलमात्रम्, आर्त्तवचक्रं च चतुःसप्ताहमितम्; तथैव गर्भकालचक्रमपि दशमासमानप्रायमिति तेषामभिप्रायः ।

प्राञ्चोऽपि प्रसूतिमारुतयोगं कालोपस्थितिं चैव हेतुत्वेन पश्यन्ति, तद्यथा :—

( १ ) स चोपस्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवृत्यावाक्शिरा निष्क्रामत्यपत्यपथेन—इति ।

—च० शा० ६ ।

( २ ) कालस्य परिणामेन मुक्तं वृन्ताद्यथा फलम् ।
प्रपद्यते स्वभावेन नान्यथा पतितुं ध्रुवम् ॥
एवं कालप्रकर्षेण मुक्तो नाडीनिबन्धनात् ।
गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते ॥ इति ॥

—सु० नि० ८ ।

---

( ६ ) Internal Secretion ( Hormone ) ( ७ ) Natural Selection.

# द्वितीयोऽध्यायः ।

## अथातः प्रसवाङ्गविज्ञानीयमध्यायं व्याख्यास्यामः ।

सन्तीह खलु केचन ईदृशा भावा यैरविकृतसमुदितैः साध्यते प्रसवः । चत्वारश्च ते—प्रसाविका शक्तिः, अपत्यपथः, अपत्यम्, अपत्यगतयश्चेति । तत्र—

प्रसाविका शक्तिर्नाम गर्भाशयसङ्कोचकरो वायुरेवापानसंज्ञः । प्रवाहणकार्यो व्यानश्चापि कर्मण्यत्र सहायो भवति । कार्यकारणयोरभेदाच्च गर्भाशयसङ्कोचाः प्रवाहणञ्च शक्तिपदेनेह विवक्षितानि ।

सुश्रुतश्चात्र—

पक्वाधानालयोऽपानः कालकर्षति चाप्ययम् ।
समीरणः शकृन्मूत्रशुक्रगर्भार्तवान्यधः ॥

—नि० १ ।

अयञ्चात्र विशेषः—

गर्भाशयसङ्कोचा हि सविरामाः सवेदनाश्च भवन्ति । उत्तरोत्तरञ्च विरामकालस्य स्वल्पीभावः । सङ्कोचकाले स्त्रिया रक्तभारोऽन्तर्गर्भाशयभारश्च वर्धते, त्वरितो धमनीनाड्याः स्पन्दः ( द्वादशाधिकः प्रायेण ), श्वसनं मन्दं भवति क्षणमवरुध्यते वा, भ्रूणहृत्स्पन्दनं मन्दायते ( षष्टि सप्तति वा प्रतिप्रपलम् ), तीव्रायते च गर्भाशयध्वनिः । अधरगर्भशय्याविस्फायनात् गर्भाशयस्यानुदैर्घ्यव्यासो दीर्घायते ह्रस्वायते चानुप्रस्थव्यासः । गर्भाशयप्राचीरं स्थूलं भवति । प्रत्युद्गत इव च गर्भाशयस्तदा स्पर्शेन

---

प्रसवाङ्गभावाः The Factors or Phenomena of Labour. प्रसाविका शक्तिः Powers which play into labour. सङ्कोचः Contraction.

प्रतीयते । गर्भश्चासौ तदन्तराकाशह्रसनात् ग्रीवानिरोधविदूरायाम-मधस्ताद् प्रपीड्यते ।

विरामकाले तु लक्षणानां वैपरीत्यम् । एतच्च विरतिप्रयोजनं भिषजो व्याचक्षते—प्रजायिन्याः क्षणिकं विश्रामसुखम्, गर्भस्य निपीडनकृच्छ्रा-पहारः, सङ्कोचकालेऽवरुद्धस्य चापरारक्तसंवहनस्य पुनः प्रतिष्ठापनञ्च । अत एव गर्भाशयस्य कादाचित्केऽविरताकुञ्चनविकारे रक्तसंवहनावरोधाद् गर्भमरणम् । प्रतिविरामं च शिथिलोऽपि गर्भाशयो न भूतपूर्वां स्वावस्था-माप्नोति स्तोकेनाकुञ्चनस्य तादवस्थ्यात् । एवमवस्थितस्याकुञ्चनस्यैव च स्थिरसङ्कोच इति संज्ञानम् । तथा च प्रतिवेगं संहरणस्वभावो गर्भाशयः क्रमेण स्वान्तराकाशह्रसनात् गर्भमधस्तात् प्रवर्त्तयति । ग्रीवा-विकसनेन लब्धावकाशश्च गर्भो बहिर्निर्याति । अन्यथाऽवकाशालाभे तु गर्भस्य पीडनमात्रमेव सम्पद्येत न तु प्रसूतिः ।

एवं जायमानाश्च गर्भाशयसङ्कोचा ग्रीवाविकसने, गर्भाशयद्वारविवरणे, अधरगर्भशय्याविस्फायने उत्तरगर्भशय्यामानह्रसने च प्राग् गर्भजन्मनः परिणमन्ति । गर्भाशयसंवरणे च जन्मनः परम् । तदेतत् विस्तरश उत्तरत्र इहैव वक्ष्यामः ।

प्रवाहणन्तु पुनर्गृहीतरुद्धश्वासाया औदर्यपेशीमाहात्म्यकेन महाप्रा-चीराकुञ्चनेन निर्वर्त्तते । निःश्वासकर्मसहायकानामौरस्यपेशीनामपि सहकारित्वं कर्मण्यत्र स्फुटम् ।

## अपत्यपथः ।

अपत्यपथो नाम महावकाशो जननपथः, गर्भाशयग्रीवाधरांशयो-र्योनेश्च विस्फारेण निर्मीयमाणः । प्रवृद्धगर्भाशयस्य हि प्रसवदशा त्रेधा प्रविभागः कल्प्यते उत्तरगर्भशय्या, अधरगर्भशय्या ग्रीवा चेति । तत्र—

---

अविरताकुञ्चनम् Tetanic Contraction. स्थिरसङ्कोचः Retraction.

उत्तरगर्भशय्या—( उत्तरांशो वा ) परिवेष्टनकलायाः पूर्वप्रत्यावर्त्तन-सीमत ऊर्ध्वं स्थितेन गर्भाशयभागेन निर्म्मीयते ( अर्थात् उदर्याख्यकला गर्भाशयस्य यद्देशात उद्गत्य मूत्राशयं गच्छति तद्देशासीमत उपरि स्थितेन गर्भाशयभागेन तन्निर्मितिः )। अस्यैव च दृढसंहतपरस्पराविष्ट-तिरश्चीनपेशीसूत्रबहुलस्योत्तरांशस्य सङ्कोचैर्गर्भोऽप्यधस्तात् प्रणुद्यते प्राधान्येन। उदर्यकला चात्र दृढं प्रतिबद्धा।

अधरगर्भशय्या—( अधरांशो वा ) पुनरन्तमुखोत्तरांशयोर्मध्यव-र्त्तिना गर्भाशयभागेन निष्पद्यते। पेशीसूत्राणि त्वस्य शिथिलं संहतानि अनुदैर्घ्योधिकानि च भवन्ति। उदर्यकलापि केवलं पृष्ठभागमेव प्रावृणोति, शिथिलं च। उत्तरांशो यदा संकुचति तदास्य वृत्तसूत्राणि शिथिली भवन्ति, अनुदैर्घ्यसूत्राणि च सङ्कोचं गतानि ग्रीवामेव केवलं निःसरतो गर्भस्योपरि ऊर्ध्वमाकर्षन्ति। अत एव प्रसवकर्मणि निष्क्रियोऽयं भाग इत्युच्यते। संहरणवलयश्चानयोरेवोत्तराधरभागयोः संयोगसीमन्यु-पलभ्यते।

ग्रीवा—त्वन्तमुखादधःस्थितो गर्भाशयभागः। वृत्तसूत्रमयी चेयम् अधरांश इव उत्तरांशसङ्कोचकाले शिथिलीभूताऽवतिष्ठते।

तथा चेदं फलितम्—गर्भाशयगात्रग्रीवाभागौ विपरीतधर्म्माणौ भवतः। गात्रं यदा शिथिलमवतिष्ठते तदा ग्रीवा दृढं संकुचिता वर्त्तते, यथा प्रागारम्भात् प्रसवस्य। आरब्धे तु प्रसवे उत्तरांशः संकुचति ग्रीवाधरांशौ च शिथिलीभवतः। किञ्च, उत्तरांशो यथा यथा स्थिरमाकुञ्चति तथा तथा

---

प्रवाहणम् Bearing down action. अपत्यपथः Birth Canal, the Passage. उत्तरगर्भशय्या An Upper Zone—the Upper, or the Contractile, Uterine Segment. अधरगर्भशय्या A Lower Zone—the Lower, or Non-Contractile, Uterine Segment. निष्क्रियः Passive. विपरीतधर्मता Polarity of uterus.

[ ६२ चित्रम् ]

प्रसवारम्भे संहरणवलयस्य स्थितिः ।




r.r संहरणवलयम् । o. i अन्तर्मुखम् । o. e. बहिर्मुखम् । संहरणवलयादूर्ध्वमधस्ताच्च क्रमेणोत्तराधरगर्भशय्ये विभावनीये ।

[ ६३ चित्रम् ]

ग्रीवाविकसनम् ।



अत्र, अप्रजातायाः स्त्रिया ग्रीवाविकसनक्रमो दर्शितः ।

ह्रस्वीभवन् स्थूलायते, अधरांशस्तु स्फारीभूतस्तनुतां गच्छति । तथा च तनूकृताया अधरशय्याया उपरि स्थूलीभूतस्योत्तरांशस्य याऽधरधारा स्थूलोष्ठमिव पृथग् लक्ष्यते तस्या एव वलयाकारत्वात् स्थिरसङ्कोचसमुत्थितत्वाच्च 'संहरणवलयम्' 'आकुञ्चनवलयम्' वेत्यभिधानम । स्पर्शकाले च अस्यैवाधस्तनो नतदेशस्तिरश्चीनपरिखेव प्रतीयते ।

अपत्यपथश्च ग्रीवाविकासादिना यथा निर्वर्त्तते तदनुव्याख्यास्यामः—

( १ ) ग्रीवाविकसनम्—ग्रीवाविकसनं नाम ग्रीवाविस्फारणम् । कर्म चेदं मृदुशिथिल-

---

संहरणवलयम् आकुञ्चनवलयं वा The Retraction ring, contraction ring or Bandle's ring ( १ ) The Taking-up of the cervix.

भूताया ग्रीवाया उत्तरगर्भशय्याकुञ्चनादधः प्रवर्त्तमानस्य गर्भाण्ड-स्योपरि गर्भाशयानुदीर्घसूत्राणां सङ्कोचैरुत्कर्षणात् सम्पद्यते। तत्र, अप्रजातायाः प्राक् अन्तर्मुखं विकसति, ततो ग्रीवाया ऊर्ध्वयोनि-कोशः, अन्तर्योनिकांशश्च ततोऽपि परम्। स्फारीभूता चैवं गर्भाशय-ग्रीवाऽवरगर्भशय्यया सह मिलित्वैकीभवति। बहिर्मुखमेव केवलं तनूकृतौष्ठं संवृतं तिष्ठति गर्भाशयद्वाररोधि। प्रजातायास्तु बहिर्मुखं प्रथमत एव विकसितं भवति। तत्र पूर्वमन्तर्मुखं ततश्चोर्ध्वयोनिको ग्रीवांशो विकसति, अन्तर्योनिकांशस्तु स्थूलौष्ठतुल्यः संवृत एव वर्त्तते गर्भाशयद्वाररोधनशीलः।

( २ ) गर्भाशयद्वारविकसनम्—अवाङ् प्रपद्यमानो हि गर्भोऽ-नुदीर्घसूत्राणामाकुञ्चनेन विव्रियमाणं गर्भाशयद्वारं बलात् विकासयति। गर्भाशयगुहा च योनिगुहया सम्यगनुबध्यते। ग्रीवाविकसनकाले च ग्रैवग्रन्थयः प्रभूतं श्लेष्माणं स्रवन्ति जननपथस्नेहनं सुखं गर्भनिर्गमाय। निर्गच्छता च गर्भेण योनिरपि विस्फार्यते। शङ्क्वाकृति च गर्भशिरः सर्वोत्तमं विस्फारणयन्त्रम्।

( ३ ) अधरगर्भशय्याविस्फायनम्—प्रसवारम्भे हि गर्भशय्या अधरा संहरणवलयादन्तर्मुखं यावद् वर्त्तमाना पादानत्रिप्राङ्गुलप्रायग-भीरा भवति। उत्तरं तु ग्रीवाभागमेलनात् कायमानमस्या वर्धते। तत्र प्रागुक्त-विपरीतधर्मवशात् संहरणवलयादूर्ध्वस्था गर्भाशयपेश्यो यदा सङ्कु-चन्ति तदा तदधःस्थाः शिथिलीभवन्ति ( अन्यत्रानुदीर्घसूत्रेभ्यः )। गर्भश्च सङ्कोचसंहरणैरुत्तरशय्यावकाशाल्लघनादधः पीडितः शिथिली-भूतायामधरशय्यायामवतीर्य तां विस्फारयति। अतएव गर्भाशयस्तदा दीर्घीभूत इव संलक्ष्यते। ततश्च गर्भाशयद्वारविवरणाल्लघ्वावकाशो

---

( २ ) The Dilatation of the Uterine Orifice. ( ३ ) The Expansion of the Lower Uterine Segment.

गर्भो बहिरायाति। मूढगर्भदशायामनिष्क्रामति गर्भे तु यथा यथोत्तर-शय्या सङ्कुचति तथा तथाऽधरशय्याऽधिकं विस्फायते, विदीर्यते च ततः परं प्रतनुभूता गर्भपीडनभरासहनात्। उत्तराधरगर्भशय्ययोः सीम-सन्धिभूतं संहरणवलयं च प्राकृतप्रसवे दुर्ज्ञेयमपि दीर्घप्रसवे तिरश्चीन-स्रोतेव आदौ सन्धानिकाया उपरिष्टात् ततश्च नाभिदेशे उदरस्पर्शनेन ज्ञातुं शक्यते। उपर्युपर्युद्गच्छच्चेदम् अधरगर्भशय्याया विस्फारातिशयं प्रकटयति।

(४) गर्भाशयकायमानह्रासः—पेशीनां सङ्कोचसंहरणैरुत्तरगर्भ-शय्याया कायमानह्रसनात् यथा नाम गर्भः स्वाशयाद्विमुच्यते तदुक्तं प्राक्। निःसृते च गर्भे सङ्कोचसंहरणैरेव गर्भाशयो ह्रस्वोभवन् रिक्तदेशमात्मना पूरयति। अन्तराकाशाऽस्य हीयते, भित्तिश्च स्थूलायते। प्रसवारम्भे प्राङ्गुलपादैकस्थूलं यत्प्राचीरं द्वितीयावस्थान्ते तदेव प्राङ्गुलत्रिपादस्थूलं सम्पद्यते। अन्तराकाशश्च हीयमानः सम्भावितमात्रः स्यात्।

अथ गर्भाशयसङ्कोचानां विविधाङ्गेषु परिणाम उच्यते।

**सङ्कोचानां श्रोणयवयवेषु मूलपीठे च परिणामः**—श्रोण्यङ्गानि हि स्वस्थानतोऽपसरणात् गर्भनिर्गमेऽवकाशदानेन सौकर्यमापादयन्ति। तत्र मूत्राशयो गर्भाशयग्रीवया संसक्तः, ग्रीवोत्कर्षणेन सहाकृष्टश्च स लघुश्रोणिगुहां परित्यज्य उदरगुहां प्रपद्यते। एवं योनिमूत्रप्रसेकयोरधर-तृतीयांशः पूर्वतोऽपरगुदं मूलपिण्डिकाश्रोणितलपेश्यश्च(योनिपश्चिमस्थाः) पश्चिमतो गर्भनिर्गमपीडिता नीचैर्भ्रंशयन्ति। अवतरता च गर्भशिरसा श्रोणिसिराणामवपीडनान् न सम्यक् प्रतिनिवर्तते रक्तम्। तथा च सिरा-रक्तभारवर्धनात् स्वभावतश्चापि रक्तातिसञ्चरणान् धातुषु लसीका चीयते।

---

(४) Diminution in the size of the Uterus. (१) The effect of the Uterine contractions on the Pelvic contents and Perinaeum.

योनिः प्रस्रवति । धातूनां विस्फारातिशयसामर्थ्यम् मार्गस्नेहनात् सुखेन गर्भनिर्गमश्च तयोः फलम् ।

(२) सङ्कोचानां गर्भाण्डे परिणामः—आदौ गर्भाशयसङ्कोचा न्यूनप्रतिरोधायां दिशि गर्भाण्डं प्रवर्त्तयन्ति । सहैव चाधरगर्भशय्याया गर्भाण्डस्योपरि समाकर्षणात् जरायुर्गर्भधरकलया हीनाधिकं वियुज्यते ।

[ ६४, ६५, ६६ चित्राणि ]

**सङ्कोचानां गर्भाण्डे परिणामविशेषः ।**







गर्भाशयसङ्कोचैः पीड्यमानो गर्भो यथा नाम स्वल्पप्रतिरोधदिशि प्रक्रमन् ग्रीवासरणिं च विकासयन् योन्यभिमुखो भवति यथा च वारिपुटकस्य निर्माणभेदने तदत्र दर्शितम् ।

---

(२) The effect of the uterine contractions on the Ovum.

तेन च मन्दं रक्तस्रुतिः । रक्तञ्चेदं ग्रैवग्रन्थिनिर्गमेन श्लेष्मणा सह निःसरत् प्रसवारम्भस्य ज्ञापकं भवतीत्यासन्नप्रसवाप्रसङ्गे श्लेष्मासृग्दर्शन-पदेन दर्शितम । वारिपुटकनिर्माणमपि जरायुवियोगादेव सम्भवति । ततश्च सम्यग्विकसिते गर्भाशयमुखे सङ्कोचवर्जनात्युत्तंसितं पुटकम् उप-ष्टम्भविनशनाद्भिद्यते प्रसिच्यते च तदन्तर्गतं पूर्वगर्भजलम् । भिन्ने तु जरायौ क्रमेणाधःप्रणुद्यमानो गर्भस्तैस्तैर्वक्ष्यमाणनिष्क्रमणप्रकारोक्तगतिविशेषैरपत्यप-थानुकूलतां व्रजन् निष्क्रामति पश्चिमगर्भोदकेनानुवर्त्तमानः । अपराऽपि तलदेशीयया गर्भधरकलया वियुक्ता सती जरायुणा सह बहिः प्रपद्यते यथाकालम् ।

इदन्त्वत्र स्मर्त्तव्यम्—अन्तर्जरायुर्बहिर्जरायुश्च प्रायेण सार्धमेव भिद्येते । कदाचिदेव केवलमन्तर्जरायुर्वियोगदेशे क्वचिदूर्ध्वदेशे वा भिन्नो भवति गर्भोदकं च तयोरन्तराल व्याप्नुवत् अतिरिक्तपुटकमेकं निर्माति । अथ चान्तर्जरायुमार्गेण स्यन्दमानमपि गर्भोदकं बहुधा पुटकमीदृशं निर्वर्त्तयति । अतिरिक्तं चेदं पुटकं प्रसवकाले यदा भिद्यते तदा मुख्य-पुटकभेदेन भ्रमसम्भवः । कदाचित्तु जरायुद्वयमन्तर्जरायुर्वा केवलं शिरो-निर्गमं यावदपि न भिद्यते विदीर्यते च तदा गर्भग्रीवां परितः प्रायेण । कदाचिच्च समग्र एव गर्भो जरायुणा वेष्टितो जायते तदभेदात् ।

## अपत्यम् ।

अपत्यं नाम गर्भो यः पुनः शक्त्या प्रणुद्यमानोऽपत्यपथान्निष्क्रामति वारिपुटकपुरःसरः । अपरा च सह जरायुणाऽनुगच्छत्येनम् । तथा चापत्यपथस्य पथिका इम इति फलितम् ।

### अपत्यगतयः ।

अपत्यगतयो नाम गर्भस्यापत्यपथादवतरतो मार्गानुकूला गतयः । सङ्कोचनम्, अन्तर्वर्त्तनम्, प्रसरणम्, पुनरावर्त्तनम्, बहिर्वर्त्तनञ्चेति च ताः

---

अतिरिक्तपुटकम् Amnio-chorionic pouch. पथिकाः The passengers or Bodies passing. गतयः Movements.

पञ्चविधाः । क्रमस्त्वेष प्रायिकः, सङ्कोचप्रसारयोः क्वचन विपर्ययेणापि दर्शनात् । निष्क्रमणप्रकारश्च प्राकृतवैकृतभेदेन द्विविधो भवतीति सर्वमेतत् तत्तदासनानां व्याख्याने भविष्यति स्पष्टम् ।

---

निष्क्रमणप्रकारः The Mechanism of Labour.

# तृतीयोऽध्यायः ।

## अथातः प्रसवोपक्रमविज्ञानीयमध्यायं व्याख्यास्यामः ।

सूतिकागारम्ः—यत्र गर्भिणी सूते प्रसूता च तिष्ठति तत्सूतिकागारम् । प्रजायिन्याश्च प्रथममेवागारमन्विच्छेत्, प्रशस्तं रम्यं निवातातपं प्रवातैकदेशमतमस्कमसङ्कीर्णं सुखप्रविचारं च । प्रागेव च निरर्थकं वस्तुजातमपसार्य्य प्रसवसम्भाराणां सन्निवेशाविशेषेण गृहमिदं प्रसाधयेत् । यथामानं सूत्तंसितवितानमनुच्चावचं सुखास्तरणञ्च शयनं तस्मिन्नुपकल्पयेत् । प्रजननकुशलामनुरक्तां क्लेशसहां च परिचारिकां पूर्वत एव नियोजयेत् ।

तत्रेमानि अग्रोपहरणीयद्रव्याणि भवन्ति:—

( क ) वस्त्रेषु—शय्यास्तरणप्रावरणानि देहांशुकानि च ऋत्वनुकूलानि मातृपुत्रयोः ।

( ख ) पात्रेषु—पञ्च सप्त वा वर्धमानकाः,[१] पेयपात्राणि,[२] पुरीषपात्रम्,[३] उष्णजलदृतिः,[४] तप्तजलघरे च द्वे गलन्तिके[५] ।

( ग ) भेषजेषु—भूतघ्नानि,[१] मोहनमूर्च्छनानि,[२] शमनानि,[३] रेचनानि,[४] गर्भाशयोत्तेजनानि,[५] उज्जीवनानि[६] च स्युः ।

---

निवातातपमिति प्रचण्डवातातपरहितम् । नाह गर्भवृद्धिक्षपितशिथिलसर्वधातुः प्रवाहणवेदनाक्लेदरक्तस्रुतिविशेषशून्यशरीरा च स्त्री प्रचण्डवातातपम् सहते । एवं गर्भाशयतमोगृहे चिरमुषितो बालोऽपि । ( ख ) १ Basins. २ Medicine glass and Feeding cup, ३ Bedpan. ४ Hotwater bottle or bag, ५ Jugs. ( ग ) १ रसकर्पूरम् (corrosive sublimate), Lysol, Dettol, Tincture of Iodine, Idoform powder or gauze. २ Chloroform, Ether, Stovaine, Morphia and Scopolamine, Nitrous Oxide and Oxygen. ३ Morphia, Chloral and Bromides, Amyl Nitrite. ४ एरण्डतैलम्, सामुद्रलवणम ( Mag. Sulph.),Liquid extract of Cascara Sagrada, ५ Ergot,Pituitrine Sulphate of Quinine, मेथिकाक्काथः सगुडः । ६ मकरध्वजः

( घ ) यन्त्रशस्त्रेषु—बस्त्युपकरणानि,[१] उत्तरबस्तिसाधनानि,[२] अन्तःक्षेपणिका,[३] श्रोणिमापनम्,[४] नाडीशलाके,[५] कफापकर्षणी,[६] स्वेदनयन्त्रम्[७] आघ्रापणी,[८] जिह्वासन्दंशः,[९] ह्रस्वदीर्घे द्वे कर्त्तरिके,[१०] गर्भाशयसन्दंशौ,[११] शरारीमुखम्,[१२] धमनीसन्दंशाः,[१३] गर्भशङ्कुः[१४] (आकर्षकसन्दंशः), योनिवीक्षणम्[१५], योनिविस्फारणानि,[१६] गर्भाशयलेखनानि,[१७] शिरोवेधकम्,[१८] शिरःसम्पीडकम्,[१९] बडिशम्[२०] वृद्धिपत्रम्[२१], तालयन्त्रम्,[२२] मुद्रिका,[२३] सीवनोपकरणानि,[२४] लवणोदकपूरणयन्त्राणि[२५] च।

( ङ ) प्रकीर्णेषु—फेनिका,[१] नखमार्जनी,[२] नखकर्त्तनकम्,[३] करच्छदौ,[४] बृहतिका,[५] नालबन्धसूत्रम्,[६] उदरपट्टानि,[७] शोषककार्पासः,[८] व्रणवस्त्राणि,[९] बलातैलम्, मधुटङ्कणम्,[१०] उद्धूलनम्,[११] तुलायन्त्रञ्चेति[१२]।

---

कस्तूरीयोगा मद्यादिकं च। (घ) १ Enema Syringe and Douche apparatus. २ Vaginal and Uterine douche tubes, intrauterine catheter, glass vaginal nozzle. ३ Hypodermic Syringe. ४ Pelvimeter. ५ A female metal catheter and a male catheter No. 10. ६ Mucous aspirator. ७ A portable steriliser. ८ Chloroform inhalor. ९ Tongue forceps. १० Long and Short scissors. ११ Two volsella or American forceps. १२ Plugging forceps. १३ Artery forceps. १४ Axis traction forceps. १५ Vaginal speculum. १६ Champetier de Ribe's bag, sea-tangle tents, Hegar's delators. १७ Curettes. १८ Perforator. १९ Cranioclast or combined cranioclast and cephalotribe. २० Braun's hook. २१ Scalpel. २२ Spoon forceps. २३ Finger knife. २४ Suture materials—curved needles, Perineal needle, Needle-holder, silkworm gut, cutgut. २५ Essentials for saline infusion.

(ङ) १ Soap. २ Nail brush. ३ Nail cutter. ४ Rubber gloves. ५ Apron. ६ Ligature for cord. ७ Abdominal binders. ८ Absorbent cotton wool. ९ Gauze, mulmul. १० Glycerine and Borax. ११ Starch and boracic powder. १२ Weighting machine.

## प्रासविकशुद्धिः ।

इदमेव प्रसूतिविदो वैदुष्यं यदत्राकर्मणि सर्वथाऽप्रमत्तः स्यात्तथा चत्रास्य परिचारकवर्गः । यन्त्रशस्त्राणां हस्तयोर्जननावयवानामुपयुज्यमानस्य सम्भारद्रव्यस्य चेतरस्य विशोधनं शस्त्रकर्मणीव सम्यगनुष्ठेयम् । वक्त्रच्छदं विभृयात् । योनिपरीक्षणञ्च सत्येव प्रयोजने नानेकशश्च विदधीत । प्रसवो हि प्राकृतं कर्म, यथाऽस्य प्रकृतिविघातो न स्यात्तथा प्रयतेत । न चानावश्यकं किमप्यनुतिष्ठेत् । अयथाकुर्वाणो हि सङ्क्रमणव्यापदम् जनयति कृच्छ्रसाध्यामसाध्यां वा ।

अहो चात्र विधातुः संरक्षणविशोधनकौशलम् । बहिर्भगदेशे बहुविधजीवाणुभिः सङ्क्रान्तत्वाद्दूषितप्रायेऽपि अन्तर्भगमम्लेन योन्यास्रावेण भूतघ्नस्वभावेनात्मानं रक्षन्निर्दुष्टप्रायमेव तिष्ठति, गर्भाशयगुहा च योनेरदुष्टत्वात् श्लेष्मार्गलिकया निरुद्धदोषप्रसरत्वाच्च सर्वथा विशुद्धा । प्रसवकाले च गर्भनिर्गमात् प्राक् परतश्चापि समग्रो जननपथो गर्भोदकेन प्रक्षाल्यते निर्गच्छता गर्भशिरसा जरायुणाऽपरया च परिमार्ज्यते । सूतिकाकाले तु सूतिकास्रावो योनिपथं क्षालयति, श्वेतकणिकाश्च तदास्रावगता जीवाणून् नाशयन्ति । किन्तु नैतेन सर्वथा योनिर्विशुद्ध्यति । अवशिष्टो जीवाणुवर्गः सूतिकाकाले रक्तस्कन्देन रक्ताम्बुना वा लब्धपोषणो निर्बाधं वर्धते । गर्भाशयश्च विवृतमुखस्तेषां प्रसरनिरोधऽसमर्थः । तत्र स्वाभाविकी व्याधिक्षमतैव परित्राणाय प्रभवति ।

---

प्रासविकशुद्धिः obstetrical cleanliness. विशोधनम् Sterilisation. वक्त्रच्छदः Mask. सङ्क्रमणम् Infection. भूतघ्नम् Anticeptic. निर्दुष्टम् ( दूषकजीवाणुरहितम् ) Aseptic. विशुद्धा ( जीवाणुमात्ररहिता ) Sterile.

## आसन्नप्रसवोपक्रमः।

यथैव विजानीयाल्लक्षणैरासन्नप्रसवेयमिति, मलाशयशोधनाय रेचनमेरण्डतैलमस्या दापयेत्। ततश्च द्वित्रहोरानन्तरं बस्तिं दद्यात्। अन्तराऽन्तरा स्वयं मूत्रयेद् गर्भिणी। अशक्ये त्वेवं परिकर्मिणी नाडीशलाकया मूत्रमस्या निर्हरेत्। उष्णोदकेन चैनां स्नापयेत्। भगदेशञ्चापि सर्वथा विशोधयेत्। केशान् कर्त्तयित्वा, फेनिकोदकाभ्यां प्रक्षाल्य भूतघ्नद्रवेण केनचित् लेपमाचरेत्। केचित्तु केशकर्त्तनमात्रमेवोपदिशन्ति। लेपादिकन्तु यन्त्रशस्त्रोपयोगसम्भावनायामेव कार्यम्। प्रसवारम्भे च पुनरपि बस्तिप्रणिधानमावश्यकम्।

सर्वञ्चोपकरणजातं विशुद्धं यथावस्थितञ्च स्यादिति परिचारिकामादिशेत्। सा च तथा कुर्व्वीत। शयनमस्या उपकल्पयेत्। वस्त्राणि च निर्म्मलानि शिथिलतराणि तां परिधापयेत्।

गर्भिणी चेत्पुरा न परीक्षिता स्यात्, प्रश्नदर्शनादिविधिभिः सम्यक् परीक्षणीया। परीक्षिताया अपि विषमं वा यदि वीक्षेत, योन्युदरपरीक्षया पुनरपि तांस्तान् विशेषानवगच्छेत्। आहूतश्च भिषक् सद्य एव गच्छेत्। तेन हि मिथ्यावतरणम्, उदयविशेषाः, नालभ्रंशः, गर्भोन्मादपूर्वरूपाणीत्येवं बहवो ज्ञातव्यविषयाः काले विज्ञाता भवन्ति।

एषा च चतुःसूत्री प्रसवप्रबन्धस्य, यत्र भिषक्कर्त्तव्यानां संक्षेपेणोद्देशकथनम्।

(१) स्त्रिया बलरक्षणम्।

(२) वेदनायाः शमनम्।

(३) गर्भनिर्हरणाय जायमानेषु नियतिप्रयत्नेषु साहाय्याचरणम्।

---

आसन्नप्रसवोपक्रमः Preparation of labour.

( ४ ) बाधकानां व्यापत्कराणां च कर्मणामननुविधानम् । इति ।

निखिलञ्चैतत् प्रसवकर्मणोऽवस्थात्रये विभज्य विस्तरेण वक्ष्यते । तद्यथा—

## प्रथमावस्था ।

( १ ) बलरक्षणाय मुहुर्मुहुः सुजरं लघुभोजनमस्यै दद्यात् द्रवप्रायम् ।

( २ ) मृदुवेदनाकाले स्त्री कस्मिंश्चिदवर्ज्ये कर्मणि निरता स्यात् । तेनान्यमनस्का वेदनां न वेत्ति न च क्लेशभयात् त्रस्ता भवति । त्रिकपीडनसंवाहने चैनां सुखयतः । तीव्रवेदनया उद्विजमानाम् उन्निद्रतया परिक्लान्तशरीरां च स्त्रियं दृष्ट्वा स्वापजननयोगानुपयुञ्ज्यात्* । ते ह्यस्या वेदनाशमनाय निद्रायै बलाभिरक्षणाय च प्रभवन्ति । संज्ञाहरणं तु द्वितीयावस्थायामेव प्रशस्यते ।

( ३ ) अथैनामुपदिशेत् ( जागृताम् ) चङ्क्रमस्व आस्याकामा वा आसन्दीमासीथा इति । तेन हि गुरुत्वबलादवक्रान्तो गर्भो गर्भाशयग्रीवाविकसने महत्साहाय्यमातनोति । प्रतिकूलावतरणादिषु जरायोरकालविदरणाशङ्कने तु शयनाश्रयणमेव हितम् । लम्बितोदरीं पुरानतगर्भाशयां पार्श्वजिह्मगर्भाशयां च स्त्रियं मत्वा कवलिकागर्भेण महता वाससा उदरमावेष्ट्य उत्तानं वक्रिमपार्श्वतो वा तां शाययीत । एवं हि गर्भशिरः सम्यक् प्रणुन्नं श्रोणिकण्ठे स्थिरीभवति न चाकाले जरायुर्भिद्यते ।

न च सम्प्रति स्त्री प्रवाहेत, अकालयोगात् । सति ग्रीवाविकसने आवीकाले च प्रवाहणं कालप्रवाहणम् । अकालप्रवाहणात् व्यर्थमेवास्यास्तत्कर्म भवति, शक्तिः क्षीयते जरायुश्चाप्यकाले भिद्यते । यदि तु

---

* अहिफेनसत्वस्य ( Morphia ) रक्तिकार्धचतुर्थांशमानस्य ( 1/4 gr. ) अन्तःक्षेपः । कालप्रवाहणं हि गर्भमधस्तात् प्रवर्त्तयति विवृतद्वारत्वात् गर्भा-

विकसितेऽपि ग्रीवामुखे जरायुर्न भिद्यते तर्हि भिषगेत्र शरेषिकया दीर्घसूच्या वैनं दारयेन् निष्प्रयोजनत्वात्।

मूत्रपुरीषपूर्णं च वस्तिगुदं गर्भस्यावतरणं शिरसः स्थैर्यं गर्भाशयसङ्कोचानां सम्यग्भावे च बाधके भवत इति ते उभे अपि प्रसवारम्भेऽवश्यं रेचनीये।

( ४ ) योनिपरीक्षणम्, बलाद् ग्रीवाविकासनम्, सन्दंशोपचारः, विवर्त्तनम्, संज्ञाहरणञ्च कालेऽस्मिन् न कर्त्तव्यानि।

## द्वितीयावस्था।

( १ ) ततश्चैषा प्राणाप्यायनाय सान्त्वनीयाभिर्वाग्भिराश्वास्यमाना पर्युपास्या भवति।

( २ ) वेदनाऽसहे तु प्रत्यावीकाले संज्ञाहरद्रवं मन्दं मन्दमाघ्रापयेत्। मोहनमूर्च्छनभेदाच्च द्विविधं संज्ञाहरणम्। तत्राद्ये न पूर्णतः संज्ञा विनश्यति। केवलं सम्मोह एव जायते। द्वितीये तु संज्ञायाः प्रतिसंक्रमितचेष्टायाश्चापि पूर्णोपघातो दृष्टः। तत्र प्रथमो विधिः प्रसववेदनानां शमनाय द्वितीयस्तु शस्त्रकर्मणि संज्ञाविनाशनाय प्रयुज्यते। संज्ञाहरद्रवाघ्रापणन्तु गर्भाशयस्य प्रतिसङ्कोचं तदारम्भपूर्वरूपे प्रारम्भणीयम् तद्विरतौ च विरमणीयम्। एवञ्च सङ्कोचयोरन्तराले सा पुनरपि प्रतिबुद्धप्रायेव भवति। अमन्दं दीर्घकाल ( चतुर्होराभ्योऽधिकं ) माघ्रापणं तु न श्रेयस्करम्। द्वे च सज्ञाहरणद्रवे, एकं मधुरगन्धि[१] अपरञ्चोग्रगन्धि[२]। तत्राद्यं बहुलप्रचारम्। गर्भोन्मादमधुमेहवमनातिशयस्य।

अकालप्रवाहणे तु संवृतप्रायद्वारो गर्भाशय एव निम्नतो भ्रश्यते नतु अलब्धावकाशो गर्भ इत्यत्र हृदयम्। शरेषिका Stilatte. दीर्घसूची Knitting-needle.

मोहनम् Partial or Obstetrical Anaesthesia ( Analgesia ). मूर्च्छनम् Complete, General or Surgical Anaesthesia. १—Chloroform. २—Ether.

निर्दोषाः । प्रथमे मूलावदरणस्य द्वितीये भ्रवनाडीनामुरःकर्णमूलिकाख्य-पेश्याश्चोपघातस्य तृतीयेऽक्षकास्थिभग्नस्य च सम्भावितत्वात् । तस्मात् त्रयाणामपि समवेतानां प्रयोगतः कार्यं निर्वहणीयम् । जातस्य चलोचन-मुखनासाविवराणि पिचुना टङ्कणाम्लद्रवसिक्तेन विशोधयेत्, अपनयेच्च नाडीशलाकया कण्ठाच्छ्लेष्माणमपि ।

किञ्च, प्रसूयमानस्य गर्भस्य प्रथमावस्थायां प्रतियामं द्वितीयाव-स्थायां च प्राक् प्रतिहोरं ततश्चान्तराऽन्तरा यथाप्रयोजनं हृच्छब्दमाकर्ण-येत् । एवं गर्भिण्या अपि काले काले ज्वरधमनीस्पन्दगर्भाशयसङ्कोच-मुखङ्गितादीन् परिलक्षयेत् ।

( ४ ) अनावश्यकं योनिपरीक्षणं सन्दंशप्रयोगश्च कुशलैर्नाद्रियते । तत्र विदीर्णमात्रे जरायौ सकृद्योनिपरीक्षणमावश्यकं नालादिभ्रंशविज्ञाना-येति केचित् । प्रजातास्वेव केवलमित्यन्ये । प्रागज्ञाते तु गर्भशिरःस्थैर्ये तदप्यनावश्यकमित्यपरे । विलम्बिते तु प्रसवे विलम्बहेतुपरिज्ञानार्थं कार्य-मेव योनिपरीक्षणम् ।

## नवजातसङ्कोपनम् ।

जातमात्रश्च बालः प्रकृत्यैव तारस्वरेण रोदिति श्वसिति च । विपरीते तु पादयोर्गृहीत्वा ऊर्ध्वधारणेनावाङ्मुखीभूतस्य पृष्ठदेशं मन्दं मन्दं करतले-नाऽभिहन्यात् । मुखपश्चिमतश्च स्थितं श्लेष्माणं नाडीशलाकयाकृष्य निर्हरेत् । शीतोदककणाभिषेकं कुर्यात् । गुदे वास्य मध्यमाङ्गुलिं सहसा प्रवेशयेत् । कृत्रिमश्वसनक्रियां वा वक्ष्यमाणामनुतिष्ठेत् येनाऽयं सङ्क्लेशविहतान् प्राणान् पुनर्लभेत ।

प्रत्यागतप्राणं च प्रकृतिभूतमभिसमीक्ष्य मातुरूर्वोर्मध्ये पार्श्वं शाय-येत् । नाभिनाडीञ्चास्पन्दमानां कल्पयेत् । एवं कल्पने हि बालः सद्य

आविर्भूतेन फौफ्फुसरक्तसंवहनेन समाकृष्टं द्वित्रप्रशुक्तिमानं शोणितमधिकमधिगच्छति। तच्चास्य बलबृंहणाय सम्पद्यत इति तथैव कुर्यात्। एष च प्रकल्पनविधिः—गर्भनाभितो द्विप्राङ्गुलमाभञ्जनं कृत्वा निष्पीड्य तनूकृतं नाभिनालं शुद्धसूत्रेण बध्नीयात् इत्येको बन्धः। अन्तर्भगे शिथिलमवस्थितं नाभिनालमाकृष्य योनिमुखसमीपेऽपि तथैव बध्नीयादिति च द्वितीयः। तत्र द्वितीयो बन्धः अज्ञातेऽपि यमलगर्भेऽन्तर्गतस्य गर्भान्तरस्य जीवनं रक्षति, व्यर्थरक्तस्रुतिकृतं शय्यातलदूषणं वारयति, गर्भाशयाद्वियुज्य स्रस्तां चापरां निर्दिशति। अन्ये त्वाहुर्यदमरातो रक्तस्रुतिस्तद्विमोक्षे सौकर्य्यमावहतीति द्वितीयबन्धो न देयः, अन्यत्र यमलगर्भादिति। ततश्च नाभिनाडीं शनैर्गृहीत्वा प्रथमबन्धनादेकाङ्गुलमूर्ध्वं कर्त्तर्य्या द्विधा कुर्य्यात् आच्छादयेच्च तां भूततन्द्रवसिक्तेन कार्पासप्लोतेन। विमुक्तबन्धनञ्च बालम् ऋत्वनुकूलेन वाससा परिवेष्ट्य परिकर्मिण्यै अर्पयेत्। सा च तं सुरक्षितस्थले वामपार्श्वे शाययेत्। एवं शयानस्य हि मुखाच्छ्लेष्मा च्यवते सम्यक्, शुक्तिच्छिद्रावरोधश्च सुष्ठु सम्पद्यते।

## तृतीयावस्था।

( १ ) प्रसूता चेत् सूतिसङ्क्लेशतः क्षीणबलाऽवसन्ना वा स्यात् हृद्योज्जीवनानां प्रयोगेण हर्षणीया, आभिरक्षितव्या च वस्त्राच्छादनादिभिः शीतवाताभियोगात्।

( २ ) वेदनाशमनानि सम्मोहनसम्मूर्च्छनानि चात्र नापयुज्यन्तेऽनपेक्षितत्वात्।

( ३ ) यथा च गर्भाशयो नाकुञ्चनाद्विरमति तथा यतनीयम्। तदभावे हि नामरा वियुज्यते, गर्भाशयस्यैव रोणं न जायते, नावरुध्यते रक्तस्रुतिः, वातश्चापि लब्धावकाशो गर्भाशयमाविशति। तथा च सति विश-

ल्यभावे पार्श्वशयानां स्त्रियं विवर्त्य उत्तानां कारयेत् आच्छादयेच्चोदरं वस्त्रेण । करतलञ्च गर्भाशयस्कन्धस्योपरि सम्यगास्थेयं यावदन्तमवस्थायाः । तद्धि गर्भाशयस्य चेष्टनाचेष्टने दृढप्रशिथिलभावौ वृद्धिह्रासौ वा परिज्ञापयति । तत्र नाभेरधः करस्य करभदेशोऽनुप्रस्थमुदरे गर्भाशयस्कन्धस्योपरि तावत्तथा चास्थाय निमज्जनीयो यावदयं पृष्ठवंशेन नोपरुध्यते यथा च समग्रगर्भाशयस्कन्धः करतलक्रोडगतो न स्यात् । न चानावश्यके विधिविरहिते च गर्भाशयस्य मर्दनपीडने विधेये, अनेकोपद्रवदर्शानात् । तद्यथा—यदा प्रमादेन गर्भाशयस्य गात्रपूर्वदेश एव हस्तेनाभिस्पृष्टमर्दितः स्यात्त्र स्कन्धभागस्तदाऽवरगर्भशय्या सङ्कुचति स्कन्धस्तु शिथिलः शिथिलप्राया वाऽत्रतिष्ठते । एवं स्कन्धस्यानावश्यकम् अतिबलप्रयुक्तञ्च मर्दनमपि गर्भाशयस्य विषमाकुञ्चनाय अपराया आंशिकविच्छेदाय वा स्यात् । विषमाकुञ्चितस्तु गर्भाशयः कदाचिद् बन्दीकरोत्यपरामतिरक्तस्रुतिं च जनयति ।

अथास्याः स्वयमेव गर्भाशयस्य सङ्कोचसंहरणाभ्यां तल्लग्नाऽपरा वियुज्यते बहिष्क्रियते च योनौ लघुनैव कालेन ( प्रपलदशकेनैव ) । किन्त्वेवं गर्भाशयाद्बहिर्भूताऽपि योनेर्दौर्बल्यात् तद्गर्भ एव चिरं तिष्ठति न शीघ्रं योनिमुखान्निःसरति । तत्र योनिगताया उपेक्षणं व्यर्थम् । तस्यास्तु वक्ष्यमाणेन विधिना निष्कासनमेव वरं मन्यते कुशलैः । गर्भाशयसंसक्तां तु नैनां बलान्मोचयेत् अन्यत्र दृढसंसक्तिसङ्कोचदौर्बल्यादिहेतुभिर्होरान्तेनापि स्वयमवियुज्यमानायाः । बलान्मोक्ते हि खण्डशो विच्छिद्यतेऽपरा, न निःशेषं बहिरायाति, गर्भाशयस्य चासम्यक्संहरणाच्छोणितातिस्रुतिर्जायते ।

एभिर्लक्षणैश्चैनां मुक्तगर्भाशयां विद्यात्—नाभिनालवर्धनम्, स्कन्धोन्नमनम्, गर्भाशयचलता, वस्तिशीर्षपिण्डिका, नालानुत्कर्षणं चेति । तत्र—

[ ६८ चित्रम् ]

अपराविमोक्षः ।



चित्रेऽस्मिन् गर्भाशये वियुज्य स्थिताऽपरा दर्शिता, न तु तद्बहिष्कृता ।

( १ ) **नाभिनालवर्धनम्**—यथैवामरा गर्भाशयाद् वियुज्य योनिं प्रतिपद्यते तथैव बहिर्योनिको बद्धसूत्रनालभागः पञ्चषाङ्गुलं यावद्वर्धते । योनौ कुण्डलीभूतस्य निर्गमात् वृद्धिभ्रान्तिर्न स्यादतो द्वितीयबन्धदानात् प्राक् नालमाकृष्य तत्सरलीकरणन्त्वावश्यकम् ।

( २ ) **स्कन्धोन्नमनम्**—यो नाम गर्भाशयस्कन्धो निर्गते गर्भे औदर्य्यपरश्यङ्गैर्भिषग्हस्तेन च पीडितो विस्फारितं गात्राधरांशे योनौ च निमज्ज्य सन्धानिकायाः किञ्चिदूर्ध्वमेव वर्त्तते, स एव अमराविभोगे वियुक्तापरायास्तद्देशाप्रक्रमणान् प्रत्युद्गतः सन् आनाभि ततोऽप्युत्तरं वा प्रतिष्ठते ।

[ ६६ चित्रम् ]

अपराविमोक्षः ।



अत्र तु सैव गर्भाशयं परित्यज्य योनिं गता दर्शिता ।

( ३ ) गर्भाशयचलता—नापरा हि गर्भाशय एवं निमग्नः श्रोणि-कराठे रुद्धत्वान्नेतस्ततो चालयितुं शक्यते । निरपरस्तु स एव तथा प्रत्यु-द्धृतो मुक्तबाधः सन् परिचालनार्हो भवति ।

( ४ ) वस्तिशीर्षपिण्डिका—गर्भाशयाद्विमुच्य अधःस्रस्तेयमपरा पुरःस्थितानवयवान् उद्गमय्य सन्धानिकाया उपरि पूर्णवस्तिनिभां काञ्चित् पिण्डिकां जनयति । अस्पष्टप्रायञ्चेदं लक्षणम् ।

( ५ ) नालानुत्कर्षणम्—पादाभिमुखो हि भिषक् गर्भाशयान्तरभागं पाणिभ्यां पार्श्वयोर्गृहीत्वा शनैरूर्ध्वं कर्षति । तत्र गर्भाशये संसक्ता चेदपरा, तदाकर्षणेन बहिर्योनिकं नाभिनालमपि सहैवोत्कृष्यते । अन्यथा तु नैवम् ।

त्रयश्चात्र विधयो यैर्गर्भाशयाद्योनितो वाऽप्रपन्नापरा निष्कास्यते— बाह्यतो निपीडनम्, हस्तेनाहरणम्, नाभिनालकर्षणं चेति ।

(१) बाह्यतो निपीडनम्—उदरभित्तिनिहितेन हस्तेन (हस्ताभ्यां वा) गर्भाशयस्कन्धः सङ्कोचकाले ग्रहीतव्यः, द्विशस्त्रिशो वा उत्तराधर-क्रमेण मर्दनीयः । एवं हि अपरा योनौ निर्याति । ततश्च गर्भाशयं त्रिकामार्गाभिमुखं निम्नतः पृष्ठतश्च प्रपीडयेत् । येन तदग्रतः स्थिताऽपरा योनेर्बहिर्निष्कासिता स्यात् ।

(२) हस्तेनाहरणम्—गर्भाशयगताऽपरा अपत्यपथप्रविष्टेन हस्ते-नापि सुखं वियोज्य निष्कास्यते । एवं योनिगताया अपि हस्तेनाहरणं सुशकम् । किन्तु सङ्क्रमणभयात्कष्टकरत्वाच्च यत्र पूर्वविधिना नार्थ-सिद्धिस्तत्रैव विधिरयं समाश्रयणीयः ।

(३) नाभिनालकर्षणम्—पुरा बहुलप्रचारोऽपि विधिरयं साम्प्रतं न व्यवह्रियते विविधोपद्रवदर्शनात् । इत्थमाकृष्टाऽपरा यदि पूर्णतो बहिरायाति तदा न काचिद्विशेषहानिर्जायते । किन्तु यदा विच्छिन्नः कश्चित् तत्पिण्डैकदेशोऽन्तरेव तिष्ठति हस्तेन च योनिविष्टेन निष्कास्यते तदा महती सङ्क्रमणव्यापत् सम्भाव्यते । किञ्च शिथिले गर्भाशये दृढसक्ता-पराया बलादाकर्षणे गर्भाशय एव अपावृत्तः स्यात् । योनिस्थापराया निर्हरणे तु मन्दवेदनाकरत्वात् प्रशस्तोऽयं विधिरित्याहुरेके ।

निर्गच्छन्तीञ्चैनां परिकर्म्मिणी पाणिभ्यां सन्धारयेत् जरायुविदार-भयात् शय्यायां सहसा निपातभयाच्च । धृतां चैवं शनैः शनैरधः कर्षेत् येन गर्भाशयान्तर्लग्नो जरायुः सम्यग् वियुज्येत । अविच्छिन्नो निरवशेष-श्च यथा स प्रपद्यते तथा यतनीयम् । अत्राहुः केचित् "निर्गतामपरां बहुशो विवर्त्तयेत्, तेन रज्जुवत् वर्त्तुलीभूतो जरायुरविदीर्ण एव शनैर्निर्याति"

---

(१) Expression from above. (२) Manual removal. (३) Traction upon the cord. अपावृत्तः Inverted.

इति । यदि तु छिन्न इव जरायुं पश्येत् तदा वर्जयेदपराकर्षणम् । स्वयं च भिषक् अङ्गुलीभिर्यथासम्भवमुक्तचक्रैर्जरायुं गृहीत्वा शनैराकर्षेत् स्तोकेन (प्राङ्गुलप्रायं यावत्)। पुनः पुनरप्येवं विदध्यात् यावत्सकलो जरायुर्न निर्गच्छति। अथ चेत् छिन्नावशिष्टो जरायुर्गर्भाशयमुखाल्लम्बते सन्दंशेन गृहीत्वा (अङ्गुलीभिर्न सम्यग्गृहीतो भवति) आहरणीयः कर्त्तनीयो वा मुखाभ्यन्तरतस्तदसम्भवे । स्थानौ लम्बमानो हि यदि चेत् चिरं तिष्ठति न निर्याति तदा सरणिभूतं तमाश्रित्य दोषसङ्क्रमणमपि गर्भाशयान्तः प्रसरति । अन्तःशिष्टो लघुरंशस्तु नापात्तकरः सूतिकास्रावेण सह सुखं निर्हार्य्यत्वात् ।

## अपराजरायुपरीक्षणम् ।

निर्गतां त्वपरां सजलवर्धमानके प्रक्षिप्य, सम्यक् क्षालितां च करयोः सन्धार्य, तदुत्तरतलं परीक्षणीयम् साकल्येनागता न वेति परिज्ञानाय । तत्र पूर्णनिर्गताया एव पिण्डकानिकायः परस्परं सन्धत्ते । विदीर्णाऽपि कराभ्यां पीड्यमाना पूर्णावयवत्वादविदीर्णेव प्रतिभाति । न कुत्रापि गर्त्तस्थलं दृश्यते । छिन्नावशिष्टत्वात् अपूर्णायास्तु पुनः पीडिताया अपि पिण्डकापगमकृतो गर्त्तस्तथैव तिष्ठति न पूर्य्यते ।

ततश्च पुनरपि जले निक्षिप्य जरायुर्निरीक्षणीयः किमयं पूर्ण आहोस्विदपूर्ण इति । तत्राऽखण्डितो जरायुरुक्तप्रमाणो महाविवरैकयुतः परितोऽपरां प्रतिबद्धश्च भवति । अतोऽन्यथा तु खण्डितः । सहि छिन्नांशत्वात् हीनप्रमाणो दीर्ण इव च दृश्यते । केवलं बहिर्जरायुरेव च गर्भधरकलया संसक्तत्वादेवं छिन्नः स्यात्, असंसक्तोऽन्तर्जरायुस्तु प्रायेण पूर्ण एव निर्याति । अथ चेत् छिद्रविशेषद्वयम् असरापार्श्वोत्तरच्छिद्रान्यतरं यावत् प्रगता रक्तप्रणालिकाश्च जरायौ दृश्येरन्, तदा द्वीपीभूताऽतिरिक्ताऽपराऽपि काचिदन्तस्तिष्ठतीति जानीयात् ।

---

द्वीपीभूताऽतिरिक्ताऽपरा Placenta Succenturiata (Island) or Secondary Placenta

अन्तःशिष्टोऽमरांशस्तु रक्तस्रुतिं जनयति गर्भाशयस्यापसंवृतिं करोति जीवाणुसङ्क्रान्तश्च विषलक्षणान्युत्पादयति। तस्मात् गर्भाशये हस्तं प्रवेश्य तन्निष्कासनमेव वरं मन्यते कुशलाः।

## मूलाधारवीक्षणम्।

मूलावदारविज्ञानाय मूलाधारपीठं दोषघ्नद्रवसिक्तेन पिचुना विशोध्य, भगोष्ठौ चापसार्य्य, आलोकावभासितं सम्यक् परीक्षेत। प्रायेण योन्याः पश्चिमभित्तिरेव दीर्य्यते। योनावङ्गुलिं प्रवेश्य स्पृष्ट्वाऽपि तद्विदारान् जानीयात्। सद्यश्च विदारानुसीवनं वरम्। दिनान्तेनापि चताननुसीव्यादेव।

## अर्गटोपयोगः।

गर्भाशयो यथावत् संवृतः स्यात्, छिन्नशिष्टश्च जरायुः सूतिकास्रावेण सह निर्हरेदिति हेतोः प्रायेण द्रव्यमेतत् भिषग्भिरुपयुज्यते। पानापेक्षया च तदन्तःक्षेपणमेव वरम्। अपरानिर्गमानन्तरं चैतत् प्रयोज्यं न पूर्वम्।

## प्रसूताया विशोधनम्।

प्रसवान्ते हि दूषितवस्त्रादिकमपहरेत्, भगदेशं परिभगदेशं च विशोधयेत् पिचुभिः। पिचवस्तु मृदुना दोषघ्नद्रवेण परिषिक्ताः स्युः। पूर्वापरक्रमेण च तैर्मार्जयेत्। न च सकृदुपयुक्तं पुनर्युञ्जीत। भगोष्ठौ पिदधता च यथा नाम द्रवो नान्तर्भगमनुविशेत् तथाऽनुष्ठेयम्। भगान्तर्विशोधनं तु प्राकृतप्रसवेऽनावश्यकम्।

## भगकवलिका, उदरवेष्टनञ्च।

ततश्च रसकर्पूरद्रवानुषिक्तं पिचुं भगस्योपरिष्टात् विन्यस्य कवलिकां दत्त्वा पट्टेन बध्नीयात्। अग्रपश्चादधोरुं लम्बमानेन च महता वाससा

उदरमस्या वेष्टयेत् । चतुर्भिश्च लघुसन्दंशिकाभिर्यथास्थानं तद्वासो धारयेत्, महाशिखरकयोरधः, तयोरुपरि, नाभिसमीपे, अग्रपत्रान्तिके च । गर्भाशयश्च तेन श्रोण्यभिमुखं तथा पीडनीयो यथा नोर्ध्वं नाभेर्गच्छति । शिथिले स्थूले वा तूदरे बृहद्वस्त्रखण्डमपि उपधानीकृत्य नाभ्यग्रपत्रयोरन्तराले गर्भाशयस्कन्धपीडनाय स्थापयेत् । परिश्रान्तश्रोणिसन्धिपेशीकां च स्त्रियं वेष्टनमेतत् सुखयति ।

## धमनीप्रतिघाताः शारीरोष्मा च ।

तत्र धमनीस्पन्दनं प्रायेणाशीतिसंख्यातो न्यूनं शारीरोष्मा चापि नवनवतिकांशमानादून एव भवति । तथैव च भाव्यम् । शताधिको धमनीप्रतिघातस्तु बहिरन्तर्वा जायमानां रक्तस्रुतिं दर्शयति । संज्ञाहरद्रव्याणामुपयोगतोऽपि धमनीस्पन्दानां त्वरणं सम्भवति, परं नैतद्दुर्लक्षणमिति चिन्त्यमेव । प्रसवोत्तरं च क्रमेण मन्दायमाना एव धमनीस्पन्दवेगाः श्रेयोवहाः । तस्मादप्रमत्तः सन् होरां यावत् मातुर्धमनीस्पन्दान् मुखवैवर्ण्यादिकांश्च भावान् अन्तराऽन्तरा परीक्षेत ।

## बालोपचारः ।

अथ बालं बलातैलेनाऽभ्यज्य फेनिकया च संशोध्य कोष्णेन वारिणा स्नपयेत्, आच्छादयेच्च विमलेन वाससा सम्यक् । ततश्च सहजौ वैरूप्याभिघातौ कुमारस्य निरीक्षेत । गुदविवरं मूत्रप्रसेकद्वारं च विद्यते न वा ? अण्डग्रन्थी वृषणयोरवतीर्णौ किम् ? तालुस्त्वस्य क्वचिन्न भिन्नः ? इत्येवम् । पूयमेहिन्याश्च प्रसूतस्य शिशोः सारकाम्लीयरजतद्रवं प्रतिशतैकशक्तिकं विन्दुद्वयमानेन नेत्रयोः क्षिपेत् । तथा कुर्वाणो हि दृष्टिविघातकात् दुरभिष्यन्दादेनं रक्षति । नाभिनालञ्च सम्यक् परीक्षेत । रक्तञ्चेत् स्रवति पुनर्बध्नीयात् । ततश्च प्रोञ्छ्य, चूर्णटङ्कणं प्रक्षिप्य, कार्पासखण्डेन च सम्यक् पिधाय मूत्रसंसर्गदोषवारणाय ऊर्ध्वमुखमवस्थि-

तस्य शिथिलोदरबन्धमाचरेत् । अत एवाहुः प्राञ्चः—"अग्रे सूत्रेणोप-निबध्य कण्ठेऽस्य शिथिलमवसृजेत्" इति । क्षौमपरिवृतं च बालं मातुः पार्श्वे शय्यायां वाऽन्यत्र क्षौमवस्त्रास्तृतायां शाययेत् । न चातः परं स्नापयेदानाभिनालपातात् । स्नाने हि तदार्द्रताभयं विद्यते । नाभिनाडी तु पञ्चभिः सप्तभिर्वा दिनैः क्रमेण शुष्यमाणा पतति ।

(५) एतानि च तृतीयावस्थायां परिहार्याणि—आदित एव अपरानि-ष्कासनयत्नः, नालाकर्षणम्, योनिपरीक्षणञ्च ।

अथाहुः प्राञ्चः—

सूतिकागारम् :—प्राक् चैवास्या नवममासात् सूतिकागारं कारयेत् अपहृतास्थिशर्कराकपाले देशे, प्रशस्तरूपरसगन्धायां भूमौ, प्राग्द्वार-मुदग्द्वारं वा बैल्वानां काष्ठानां तैन्दुकैङ्गुदकानां भल्लातकानां वारुणानां खादिराणां वा । यानि चान्यान्यपि ब्राह्मणाः शंसेयुरथर्ववेदविदः तद्वसना-लेपनाच्छादनापिधानसम्पदुपेतं वास्तुविद्याहृदययोगाग्निसलिलोदूखल-वर्चःस्थानस्नानभूमिमहानसमृतुसुखञ्च सेवयेत् ।

—च० शा० ८ ।

नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ । तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधति-न्दुकभल्लातकनिर्म्मितसर्वागारं यथासंख्यं तन्मयपर्यङ्कमुपलिप्तभित्तिं सुवि-भक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाऽष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षा-मङ्गलसम्पन्नं विधेयम् ।

—सु० शा० १० ।

प्रवेशविधिः—ततः प्रवृत्ते नवमे मासे पुण्येऽहनि प्रशस्तनक्षत्रयोग-मुपगते प्रशस्ते भगवति शशिनि कल्याणकरे मैत्रे मुहूर्ते शान्तिं कृत्वा

---

शान्तिं कृत्वा = शान्तिहोमं कृत्वा ।

गोब्राह्मणमग्निमुदकञ्चादौ प्रवेश्य गोभ्यस्तृणोदकं मधुलाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान् सुमनसो नान्दीमुखानि च फलानीष्टानि दत्त्वोदकपूर्व-मासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्ति वाचयेत्। ततः पुण्याहशब्देन गोब्राह्मणमनुवर्त्तमाना प्रविशेत् सूतिकागारम्। तत्रस्था च प्रसव-कालं प्रतीक्षेत ।

—च० शा० ८ ।

प्राक् चैव नवमान्मासात् सूतिकागृहमाश्रयेत् ।
देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥
तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ।

—वा० शा० १ ।

सम्भारद्रव्याणि :—तत्र सर्पिस्तैलमधुसैन्धवसौवर्चलकालविड्विडङ्ग-कुष्ठकिलिमनागरपिप्पलीपिप्पलीमूलहस्तिपिप्पलीमण्डूकपर्णीलाङ्गलीवचा-चव्यचित्रकचिरबिल्वहिङ्गुसर्षपलशुनकतककणकणिकानीपातसीबल्वजभू-र्जकुलत्थमैरेयसुरासवाः सन्निहिताः स्युः ।

तथाश्मानौ द्वे, द्वे च कुण्डमुसले, द्वे उदूखले, खरवृषभश्च, द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ शस्त्राणि च तीक्ष्णायसानि, द्वौ च विल्वमयौ पर्य्यङ्कौ, तैन्दुकैङ्गुदानि च काष्ठानि अग्निसन्धुक्षणानि ।

स्त्रियश्च बह्व्यो बहुशः प्रजाताः हार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणा-चाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तविषादाः क्लेशसहिन्यो-ऽभिमताः ।

ब्राह्मणाश्चाथर्ववेदविदो यच्चान्यदपि तत्र समर्थं मन्येत। यच्चा-न्यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत्कार्यम ।

—च० शा० ८ ।

---

नान्दीमुखानि च फलानि = नान्दीमुखश्राद्धोपहितानि फलानि, किम्वा नान्दी मुरजः, तन्मुखाकृतीनि फलानि खर्जूरादीनि । उदकपूर्वम् = आचमनपूर्वकम् ।

## आवसथिकोपचारः ।

प्रथमावस्था—आवीप्रादुर्भावे तु भूमौ शयनं विदध्यात् मृद्वास्तरणोपपन्नम् । तदध्यासीत सा । तां ताः समन्ततः परिवार्य यथोक्तगुणाः स्त्रियः पर्य्युपासीरन्नाश्वासयन्त्यो वाग्भिर्ग्राहिणीभिः सान्त्वनीयाभिः ।

सा चेदावीभिः सङ्क्लिश्यमाना न प्रजायेत, अथैनां ब्रूयात् "उत्तिष्ठ, मुसलमन्यतरद् गृह्णीष्व, अनेन तदूखलं धान्यपूर्णं मुहुर्मुहुरभिजहि, मुहुर्मुहुरवजृम्भस्व, चङ्क्रमस्व चान्तरान्तरा" इत्येवमुपदिशन्त्येके । तन्नेत्याह भगवानात्रेयः । दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते । विशेषतश्च प्रजननकाले प्रचलितसर्वधातुदोषायाः सुकुमार्य्या नार्य्या मुषलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्यात् । दुष्प्रतीकारतमा च तस्मिन् काले विशेषेण भवति गर्भिणी । तस्मान्मुषलग्रहणं परिहार्यमृषयो मन्यन्ते । जृम्भणं चङ्क्रमणञ्च पुनरनुष्ठेयमिति ।

अथास्यै दद्यात् कुष्ठैलालाङ्गलकीवचाचित्रकचिरबिल्वचव्यचूर्णमुपघ्रातुम । सा तत्र मुहुर्मुहुरुपजिघ्रेत् । तथा भूर्जपत्रधूमं शिंशपाधूमं वा । तस्याश्चान्तराऽन्तरा कटीपार्श्वपृष्ठसक्थिदेशानीषदुष्णेन तैलेनाभ्यज्यानुसुखमवमृद्नीयादित्यनेन कर्मणा गर्भोऽवाक् प्रतिपद्यते ।

—च० शा० ८ ।

प्रजनिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत् । ततः कृतोपधाने मृदुनि विस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति ।

—सु० शा० १० ।

अथैनामुपस्थितगर्भां कृतकौतुकमङ्गलां पुन्नामफलहस्तां स्वभ्यक्ता-मुष्णोदकपरिषिक्तां सघृतां यवागूं पाययेत् । ततः सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूमिशयने शयानामुत्तानामाभुग्नसक्थिपृष्ठामहतवाससोऽशङ्कनीयाः प्रियदर्शनाः परिणतवयसः प्रजननकुशलाः प्रगल्भाः कृत्तनखाः स्त्रियः सूतिकां सूनृताभिर्वाणीभिराश्वासयन्त्यः पर्य्युपासीरन् ।

—सङ्ग्रह शा० ३ ।

अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ।
हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ॥
पाययेत् सघृतां पेयां तनौ भूशयने स्थिताम् ।
आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनः पुनः ॥
अधो नाभेर्विमृद्नीयात् कारयेज्जृम्भचङ्क्रमम् ।

—वा० शा० १ ।

अथ हीमानि रूपाणि गर्भिण्या उपलक्षयेत् ।
यानि दृष्ट्वा विजानीयाद्बालजन्मन्युपक्रमम् ॥
मुखग्लानिः क्रमोऽङ्गानामक्षिबन्धनमुक्तता ।
कुक्षेश्च स्याद्वस्रंसस्त्वधोभागस्य गौरवम् ॥
पृष्ठपार्श्वकटीबस्तिवङ्क्षणं चातितुद्यति ।
योनिप्रस्रवणोदार्यभक्तद्वेषारतिक्लमाः ॥
एतानि दृष्ट्वा रूपाणि कृत्वा ब्राह्मणवाचनम् ।
प्रविशेयुः स्त्रियो वृद्धाः कुशलाः शस्तधाविताः ॥
गर्भिणीं सान्त्वयेयुस्ता हर्षयेयुः प्रियंवदाः ।
आश्वासयेयुर्धर्मार्थी चोदयन्तं प्रजापतिम् ॥

---

विशिष्टकाले यो रक्षाबन्धो बाह्वादौ बध्यते स कौतुकशब्दवाच्यः, कौतुकार्थं मङ्गलं कौतुकमङ्गलम् ।

लोकान् पुत्रवतीनां च सुखानि विविधानि च ।
कीर्त्तयेयुरपुत्राणां दुःखानि निरयादिषु ॥
अदितिं कश्यपं देवमिन्द्राणीमिन्द्रमश्विनौ ।
आयुष्मतां पुत्रवतां मङ्गल्यानां च कीर्त्तनम् ॥
तन्त्रीवर्णोऽल्पशः स्रावः पिच्छिलः पुत्रजन्मनि ।
किंशुकोदकसङ्काशः पुत्रिकाजन्म शंसति ॥
सूतेरूर्ध्वं तु ये स्रावा निन्दितास्ते शमयेत्तु तान् ।
तस्या अस्यामवस्थायामुपयाचेत देवताः ॥
आत्याधूनं स्त्रिया गर्भे विवृतं चापरामुखे ।
आहीषु वर्त्तमानासु सा विवर्त्तेत गर्भिणी ॥
तीक्ष्णेषु आविशूलेषु क्षिप्रं नारी प्रजायते ।
विलम्बिताभिरावीभिर्गर्भः क्लेशयते स्त्रियम् ॥
केचिदस्यामवस्थायां व्यायामं मुसलादिकम् ।
जृम्भाचङ्क्रमणाद्यञ्च भिषजो ब्रुवते हितम् ॥
वर्जनीयन्तु तत्सर्वं भगवानाह कश्यपः ।
व्यायामः सेव्यमानो हि गर्भिण्यामाशु नाशयेत् ॥
अतिचङ्क्रमणेनापि हन्याद्गर्भमुपस्थितम् ।
अत्यर्थं प्राप्नुयाद्रोगं देहान्तकरणं महत् ॥
उपविष्टाऽमकृत्तस्मादनिविरणाऽन्नपान्विता ।
वृद्धस्त्रीद्रव्यसम्पन्ना प्रजायेत प्रजार्थिनी ॥
वचा लाङ्गलिकी कुष्ठं चिरबिल्वैलाचित्रकाः ।
चूर्णितं मुहुराजिघ्रेत् तथा शाघ्रं प्रजायते ॥
आजिघ्रेद्भूर्जधूपं वा नमेरागुग्गुलोस्तथा ।
अधः प्रपद्यते गर्भस्तथा शीघ्रं विमुच्यते ॥
पार्श्वसन्धिकटीपृष्ठं तैलेनोष्णेन स्रावितम् ।
मृद्नीयुरवकर्षयुः शनैः प्राज्ञयः स्त्रियः सुखम् ॥

दुर्बलां पाययेन्मद्यमित्येके, नेति कश्यपः ।
पूर्वाक्लिष्टा तथैवाऽसौ यवागूं तृषिता पिबेत् ॥

—जातिसूत्रीयशारीरे कश्यपः ।

द्वितीयावस्था—अस्यामवस्थायां पर्य्यङ्कमेनामारोप्य प्रवाहितुमुपक्रामयेत् । कर्णे चास्या मन्त्रमिममनुकूला स्त्री जपेत्—

"क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु वैशल्यञ्च दिशन्तु ते ॥
प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम् ॥" इति ।

"इहामृतञ्च सोमश्च चित्रभानुश्च भामिनी ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥
इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं प्रमुञ्चतु स्त्री ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥" इति च

ततश्चैनां तथोक्तगुणाः स्त्रियोऽनुशिष्युरनागतावीर्मा प्रवाहिष्ठाः । या ह्यनागतावीः प्रवाहते, व्यर्थमेवास्यास्तत्कर्म भवति, प्रजा चास्या अविकृता विकृतिमापन्ना वा श्वासकासशोषप्लीहप्रसक्ता भवति । यथा हि क्षवथूद्गारवातमूत्रपुरीषवेगान् प्रयतमानोऽपि अप्राप्तकालान्न लभते कृच्छ्रेण वाऽप्यवाप्नोति, तथा नागतकालं गर्भमपि प्रवाहमाणा । यथा चैषामेव क्षवथ्वादीनां सन्धारणमुपघातायोपपद्यते तथा प्राप्तकालस्य गर्भस्याऽप्रवाहणम् । सा यथानिर्देशं कुरुष्वेति वक्तव्या । तथा च कुर्वती शनैः पूर्वं प्रवाहेत, ततोऽनन्तरं बलवत्तरम् । तस्यां प्रवाहमाणायां स्त्रियः शब्दं कुर्य्युः—"प्रजाता प्रजाता धन्यं धन्यं पुत्रम्" इति । तथाऽस्या हर्षेणाप्यायन्ते प्राणाः ।

—च० शा० ८ ।

अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्यानुब्रूयाच्चैनामेका सुभगे प्रवाहस्वेति, न चाप्राप्तावीः प्रवाहस्व, ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु प्रवाहेथाः शनैः शनैः पूर्वम्, ततो गर्भनिर्गमे प्रगाढम्, ततो गर्भे योनिमुखं प्रपन्ने गाढतरमाविशल्यभावात्। अकालप्रवाहणात् बधिरं मूकं कुब्जं व्यस्तहनुमूर्ध्वाभिघातिनं कासश्वासशोषोपद्रुतं विकटं वा जनयति ।

—सु० शा० १० ।

अथ परिवृत्तगर्भां पर्य्यङ्कमेनामारोप्य कुशला स्त्री पादतोऽस्या निषण्णा योनिमनुलोममनुसुखमभ्यज्य स्फिजौ पादाभ्यां पीडयेत्। योनिं च पुनः पुनः प्रसाधयेत्। ब्रूयाच्च सुभगे शनैः शनैः प्रवाहयस्व सुप्रसन्नस्ते मुखवर्णः पुत्रं जनयिष्यतीति । अन्या तु वामकर्णेऽस्या मन्त्रमिमं जपेत्— "क्षितिजलमित्यादि"। तथाऽपराऽनुशिष्यात् अनागतायां वेदनायां मा प्रवाहिष्ठा इत्यादि । तद्वच्चान्यतमा स्त्री जातमात्रमेव बालं बालोपचरणीयेन विधिनोपपादयेत् ॥

—सङ्ग्रहशा० ३ ।

.......................... खट्वामारोपयेत्ततः ॥
अथ सम्पीडिते गर्भे योनिमस्याः प्रसारयेत् ।
मृदु पूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ॥
हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलानिलैः ।
प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः ॥

—वा० शा० १ ।

---

विशिखान्तरम् = अपत्यमार्गं योनिम् । विमुक्ते गर्भनाडीप्रबन्धे = विगते गर्भमार्गप्रतिरोधे, विवृते गर्भाशयमुखे इति यावत् । ऊर्ध्वाभिघातिनम् = ऊर्ध्वजत्रुगतरोगिणम् । विकटम् = अयथास्थाननिवेशितावयवम् । प्रसारयेत् = अभ्यङ्गादिदानेन ।

तृतीयावस्था—यदा च प्रजाता स्यात्तदैवैनामवेक्षेत काचिदस्या अपरा प्रपन्नाऽप्रपन्ना वेति। तस्याश्चेदपरा न प्रपन्ना स्यात्, अथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद् बलवन्निपीड्य सव्येन पृष्ठत उपसङ्गृह्य सुनिभृतं निर्धुनुयात्। अथास्याः सव्यपादपार्ष्ण्या श्रोणीमाकोटयेत्। अस्याः स्फिजावुपसङ्गृह्य सुपीडितं पीडयेत्। अथास्या बालवेण्या कण्ठतालु परिस्पृशेत्। भूर्जपत्रकाचमणिसर्पनिर्मोकैश्चास्या योनिं धूपयेत्। कुष्ठतालीशकल्कं बल्वजयूषे मैरेयसुरामण्डे तीक्ष्णे कौलत्थे वा मण्डूकपिप्पलीसम्पाके वा सम्प्लाव्य पाययेदेनाम्। तथा सूक्ष्मैलाकिलिमकुष्ठनागरविडङ्गपिप्पलीकालागुरुचव्यचित्रकोपकुञ्चिकाकल्कं खरवृषभस्य वा जीवतो दक्षिणं कर्णमुत्कृत्य दृषदि जर्जरीकृत्य बल्वजयूषादीनामाप्लावनानामन्यतमस्मिन् प्रक्षिप्याप्लाव्य मुहूर्तस्थितमुद्धृत्य तदाप्लावनं पाययेदेनाम्। शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य चैनां तैलस्य पिचुं ग्राहयेत्। अतश्चैवानुवासयेत्। एतैरेव चाप्लावनैः फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनहस्तिपर्णीप्रपन्नुपहितैरास्थापयेत्। तदास्थापनमस्याः सह वातमूत्रपुरीषैर्निर्हरत्यपरामासक्तां वायोरेवाप्रतिलोमगत्वात्। अन्यान्यपि हि वातमूत्रपुरीषाणि बहिर्गमनशीलानि सज्जन्ति।

· च० शा० ८।

अथापराऽपतन्त्यानाहाध्मानौ कुरुते, तस्मात् कण्ठमस्याः केशवेष्टितयाऽङ्गुल्या प्रमृजेत्, कटुकालाबुकृतवेधनसर्षपसर्पनिर्मोकैर्वा कटुतैलविमिश्रैर्योनिमुखं धूपयेत्, लाङ्गलीमूलकल्केन वाऽस्याः पाणिपादतलमालिम्पेत्, मूर्ध्नि वाऽस्या महावृक्षक्षीरमनुसेचयेत्, कुष्ठलाङ्गलीमूलकल्कं वा मद्यमूत्रयोरन्यतरेण पाययेत्, शालमूलकल्कं वा पिप्पल्यादिं वा मद्येन; सिद्धार्थककुष्ठलाङ्गलीमहावृक्षक्षीरमिश्रेण सुरामण्डेन वाऽऽस्थापयेत्, एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरवस्तिं दद्यात्, स्निग्धेन वा कृत्तनखेन हस्तेनापहरेत्। सु० शा० १०।

अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक् ।
हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा ॥
धुनुयाच्च मुहुर्नारीं पीडयेद्वांसपिण्डिकाम् ।
तैलाक्तयोनेरेवं तां पाययेन्मतिमान् भिषक् ॥

—सु० चि० १५ ।

(धूपयेद्गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः ।
हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ॥
सुवर्चलां विशल्यां वा ) जराऽप्रपतनेऽपि च ।
कार्यमेतत्तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत् ॥
कटीमाकोटयेत्पार्ष्ण्या स्फिजौ गाढं निपीडयेत् ।
तालु कण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपयः ॥
भूर्जलाङ्गलकी तुम्बी सर्पत्वक्कुष्ठसर्षपैः ।
पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥
कुष्ठतालीशकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां बिल्वजेनाऽसवेन वा ॥
शताह्वसर्षपाजाजी शिग्रुतीक्ष्णक चित्रकैः ।
सहिङ्गुकुष्ठ मदनमूत्रे क्षीरे च साधितम् ॥
तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।
शतपुष्पावचाकुष्ठ कणासर्षपकल्कितः ॥
निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ॥
कुशला पाणिनाऽक्तेन हरेत्[1] कॢप्तनखेन वा ।
मुक्तगर्भापरां योनिं तैलेनाङ्गं च मर्दयेत् ॥

—वा० शा० २ ।

---

१—नालानुसारेणोऽपहरेत् इति संग्रहे विशेषः ।

सूताथाश्चापि तत्र स्यादपरा चेन्न निर्गता ।
प्रसूताऽपि न सूता स्त्री भवत्येवं गते सति ॥
प्रजातमात्रामाश्वास्य सूतां शुक्ला द्विजा (प्रजा) विका ।
न्युब्जां शयानां संग्राह्य पृष्ठे संश्लिष्य कुक्षिणा ॥
पीडयेदवदृढमुदरं गर्भदोषप्रवृत्तये ।
महताऽक्लिष्टपट्टेन कुक्षिपार्श्वे च वेष्टयेत् ॥
तेनोदरं स्वसंस्थानं याति वायुश्च शाम्यति ।
—सूतिकोपक्रमणीये काश्यपः ।

## बालोपचारः ।

तस्यास्तु खल्वपरायाः प्रपतनार्थे कर्मणि क्रियमाणे जातमात्रस्यैव कुमारस्य कार्याण्येतानि कर्माणि भवन्ति तद्यथा—

अश्मनोः संघट्टनं कर्णयोर्मूले । शीतोदकेनोष्णोदकेन वा[1] मुखेन परिषेकः । तथा सक्लेशविहतान् प्राणान् पुनर्लभेत । कृष्णकपालिकाशूर्पेण चैनमभिनिष्पुनीयुः* यद्यचेष्टः स्यात् यावत्प्राणानां प्रत्यागमनम् । ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानोदकग्रहणादिषु ग्रामुपपादयेत् ।

अथास्य ताल्वोष्ठकण्ठजिह्वाप्रमार्जनमारभेत अंगुल्या सुपरिलिखितनखया सुप्रक्षालितोपधानकार्पासपिचुमत्या प्रथमं प्रमार्जितास्यस्यास्य च शिरस्तालु कार्पासपिचुना स्नेहगर्भेण प्रतिच्छादयेत् । ततोऽस्यानन्तरम् सैन्धवोपहितेन सर्पिषा कार्यं प्रच्छर्दनम् ।

अथ नाड्यास्तस्य कल्पनविधिमुपदेक्ष्यामः—

नाभिबन्धनात्प्रभृत्यष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्मराजतायसानां छेदनानामन्यतमे-

---

१ अर्धनार्थे वाशब्दो ज्ञेयः, तेन शीतेनोष्णेनोदकेन क्रमेण परिषेक आकण्ठनिमज्जनं वा ।

* A best method of artificial respiration (Resuscitation by rocking)

नाभिधारेण छेदयेत्ताम् । अग्रे सूत्रेणोपनिबध्य कण्ठेऽस्य शिथिलमवसृजेत् । असम्यक् कल्पने हि नाड्या आयामव्यायामहुण्डिकापिण्डलिका-विनामिकाविजृम्भिकाबाधेभ्यो भयम् । —च० शा० ८ ।

अथ जातस्योल्बमपनीय, मुखं च सैन्धवसर्पिषा विशोध्य, घृताक्तं मूर्ध्नि पिचुं दद्यात् । ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बध्वा छेदयेत् । तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग् बध्नीयात्* ।

—सु० शा० १० ।

अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्मणि कृते मधुसर्पि-रनन्तचूर्णमङ्गुल्याऽनामिकया लेहयेत्, ततो बलातैलेनाभ्यज्य क्षीरवृक्ष-कषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनम् कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवञ्च ।

अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्, पीलुबदरीनिम्बपरूषकशाखाभिश्चैनं परिवीजयेत्, मूर्ध्नि चास्या अहरहस्तैलपिचुमवचारयेत्, धूपयेच्चैनं रक्षोघ्नैर्धूपैः, रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत्, तिलातसीसर्षपकणांश्चात्र प्रकिरेत् । अधिष्ठाने चाग्निं प्रज्वालयेत्, व्रणितोपासनीयञ्चावेक्षेत ।

—सु० शा० १० ।

अथ स्वर, जातमात्रमेव बालमुल्बात् सैन्धवसर्पिषा मार्जयेत् । ततोऽस्यातिप्रबलमोहज्वरपरीतसर्वगात्रस्य कोशादुमपि रुजानुरूपम-समर्थस्यानवस्थितशेषदेहवातोऽस्कम्भाद्ययौवनाधानस्थस्य क्रकचस्प-र्शमिव करतलनशयनसंस्पर्शं कथ्यमानस्याविकल्पितमङ्गानि विक्षिपतः

---

* नाभिपरिहारार्थमिति डल्हणः । लग्नत्वपरिहारायेतीन्दुः ।

ग्रन्थादिग्रन्थिप्रतिबन्धेन त्वरितमुच्छ्वासोपचितुमिति हाराणचन्द्रः । उल्बं पूर्णं जरायुर्जरायुभागो वा । कदाचित् जरायुवृत एव गर्भो जायते, कदाचिच्च जरायुखण्डं मुखे लग्नं श्वासक्रिया सम्बाधते ।

पुनरिव मरणमनुभवतो लीयमानसंज्ञस्यातिसम्बाधयोनिपुटात्पीडित-प्राणप्रत्यानयनाय बलातैलेन परिषेकं कुर्यात् । कर्णमूले चाश्मनो: संघट्टनम् । यदि वाऽचेष्ट एव स्यात्ततः कृष्णकपालिकया शूर्पेण चैव मभिनिष्पुनीयात् । इत्यादि । अहरहश्चास्य श्रोत्रशृङ्गाटकं स्नेहाप्लुतेन प्लोतेन प्रच्छादयेत् । इत्यादि च । --संग्रह० उ० १ ।

जातमात्रं विशोध्योल्बात् बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥
अश्मनोर्वादनं चास्य कर्णमूले समाचरेत् ।
अथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमम् ॥
अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदां शतम् ॥
शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि ।
नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु ॥
स्वस्थीभूतस्य नाभिं च सूत्रेण चतुरङ्गुलात् ।
बद्ध्वोर्ध्वं वर्धयित्वा च ग्रीवायामवसञ्जयेत् ॥
नाभिं च कुष्ठतैलेन सेचयेत् स्नपयेदनु ।
क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा ॥
कोष्णेन तप्तरजततपनीयनिमज्जनैः ।
ततो दक्षिणतर्जन्या तालून्नम्यावगुण्ठयेत् ॥
शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ।
हरेणुमात्रं मेधायुर्बलार्थमभिमन्त्रितम् ॥
ऐन्द्रीब्राह्मीवचाशंखपुष्पीकल्कं घृतं मधु ।
चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥
लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ।
गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ॥

--वा० उ० १।

# चतुर्थोऽध्यायः ।

## शिरोऽवतरणे प्राकृतोदयः ।

अथातः शीर्षोदयविज्ञानीयमध्यायं व्याख्यास्यामः ।

शिरोऽवतरणं शिरसः पूर्णावनत्या मध्यशिरो यदाऽग्रतः प्रपद्यते तदा शीर्षोदयः । मध्यशिरःपदेन च पूर्वतो ब्रह्मरन्ध्रेण पश्चिमतः शिवरन्ध्रेण पार्श्वयोश्च पार्श्वकुम्भाभ्यां सीमितो देशो गृह्यते । तत्र शिरोऽवतरण-

[ ७० चित्रम् ]



शीर्षोदयः ।

मवतरणानां शीर्षोदय उदयानां प्रथमासनञ्चासनानां प्रधानं बाहुल्य-दर्शनादित्युक्तं पूर्वम् । गुरुत्वबलं गर्भाशयाद्यनुकूलनचेष्टा भ्रूणभावेना-वस्थितिश्च हेतुत्वेनापि तत्रैव दर्शितानि ( १५१, १५५, १५७ पृष्ठेषु ) ।

आसनानि—चत्वारि तावत् गर्भासनानि भवन्ति, मातुरुदरे गर्भपृष्ठस्य वामपूर्वादिखण्डक्रमेणावस्थानात्। वामपूर्वम्, दक्षिणपूर्वम्, दक्षिणपश्चिमम्, वामपश्चिमञ्चेति च खण्डचतुष्टयम्। नामानि तु तेषां श्रोण्यास्तत्तत्खण्डेषु स्थितान् गर्भाङ्गावयवविशेषानधिकृत्य निर्दिश्यन्ते। यथाऽत्रैव अनुशीर्षमधिकृत्य उच्यते—(१) वामपूर्वानुशीर्षासनम्, (२) दक्षिणपूर्वानुशीर्षासनम्, (३) दक्षिणपश्चिमानुशीर्षासनम्, (४) वामपश्चिमानुशीर्षासनञ्चेति। प्रत्यासन्नं चेह यथा नाम गर्भोऽवतिष्ठते, तदुक्तं प्राक् ( १५७, १५८, १५९ पृ० )।

निर्णयः—उदरस्पर्शनेन योनिपरीक्षया हृच्छब्दश्रवणेन च शीर्षोदयो निर्णीयते। तत्र, उदरस्पर्शनेन गर्भाशयस्योर्ध्वप्रान्ते गर्भनितम्बः, अधरप्रान्ते च गर्भशिरोऽनुभूयते। मध्ये तु गर्भपृष्ठं यथासन्नं वामतो दक्षिणतो वा पूर्वतः पश्चिमतश्च वा वर्त्तते। तद्विपरीततश्च वर्त्तन्ते हस्तपादावयवाः। तत्र पश्चिमाभिमुखे गर्भे पृष्ठं पूर्वाभिमुखे च हस्तपादभागाः सुस्पष्टमनुभूयन्त इति विशेषः। ग्रीवापरिखा तु तिरश्चीना गर्भपृष्ठदिशि अधोमुखी च प्रतीयते। श्रोणिकण्ठमतिक्रम्य वस्तौ प्रविष्टे तु शिरसि न शिरोविशेषा अधिगम्यन्ते। तत्र चतुर्थग्रहविधिना परीक्ष्यमाणे यस्मिन् पार्श्वेऽन्यपार्श्वात् गभीरतरमङ्गुल्यो निमज्जन्ति तत्पार्श्वगतमेव तिर्य्यक्श्रोण्यासं गर्भशिरोऽधितिष्ठतीति विज्ञेयम्।

योनिपरीक्षया—तु स्थिरीभूते शिरसि सुविकसिते च गर्भाशयमुखे सीमन्तरन्ध्राद्युपलक्षितं शिरः श्रोणिकण्ठे वस्तिगुहायां वा सुवृत्तार्बुदमिव प्रतीयते। तत्रादौ मध्यसीमन्तः श्रोण्यास्तिरश्चीनव्यासयोरन्यतरस्मिन् तिष्ठति, ब्रह्मरन्ध्रं शिवरन्ध्रं चापि तत्पूर्वापरप्रान्तयोः समकक्षं वर्त्तते। परतस्तु शिरसः सङ्कोचविवर्त्तनाभ्यां शिवरन्ध्रं ब्रह्मरन्ध्रापेक्षया निम्नतरं भवति। शिवरन्ध्रस्योर्ध्वस्थितिस्तु शिरःसंकोचाभावं दर्शयति। शिवरन्ध्रस्य तत्तत्खण्डविशेषावस्थानेन च गर्भासनभेदा अपि निर्णेयाः। रन्ध्रे चैते कदाचित् कपालास्थिपीडनादुपरुद्धे

अपि सन्धेयसीमन्तसंख्यानेन ज्ञातुं शक्ये। कदाचित् दुःशके त्वनुशीर्षस्य पूर्वपरावस्थानज्ञाने समग्रं करं योनौ प्रणिधाय शिरःपार्श्वे बाह्यकर्णमस्य परीक्षणीयम्। कर्णपालिर्हि अनुशीर्षस्यैवाभिमुख्यं विधत्ते।

हृच्छब्दाश्च—पुनर्नाभेरधस्तादन्यतरपार्श्वे गर्भपृष्ठस्योपरि सम्यक् श्रूयन्ते।

निष्क्रमणविधिः—निष्क्रमणविधिर्नाम श्रोणिपथाद् बहिरागच्छतो गर्भस्य मार्गानुकूलो व्यापारविधिः, येन यथाप्रयोजनं स्वासनाङ्गसंस्थित्योः परिवर्त्तनं विधाय गर्भः स्वशिरोगात्रयोर्विविधव्यासानां स्त्रीश्रोण्या विविधव्यासैः सह सङ्गतिमादधाति। श्रोण्याश्च प्रवेशद्वारेऽनुप्रस्थव्यासा, गुहाभ्यन्तरे तिरश्चीनव्यासा, निर्गमद्वारे चानुदीर्घव्यासा दीर्घतमो भवति। वक्रिमभावश्चापि जननपथस्य पूर्वाधरदिशि वर्त्तते। तेन शीर्षोदयेऽवतरद् गर्भशिरः स्वस्य ह्रस्वतमव्यासं स्थापयितुं प्रथमं संकुचति, ततो गुहाभ्यन्तरतः स्वदीर्घतमव्यासं श्रोण्या दीर्घतमे व्यासे नयनाय विवर्त्तते, सहैव च स्वदीर्घाक्षरेखां जननपथदीर्घाक्षरेखया सङ्गमयितुं प्रसरत्यपि। एवं स्कन्धनिर्गमकाले अंसकूटान्तरालगव्यासं दीर्घतमश्रोणिव्यासे स्थापयितुं पुनरपि विवर्त्तते। तथा च प्रसूयमानस्य गर्भस्य चतस्रो गतयः फलिताः अवतरणम्, सङ्कोचः, आवर्त्तनम् प्रसारश्चेति। आवर्त्तनं पुनर्द्विविधम्—अन्तरावर्त्तनं प्रत्यावर्त्तनं बहिरावर्त्तनञ्च।

अवतरणम्—गर्भाशयाकुञ्चनबलेनाधः प्रणुद्यमानो गर्भः सङ्कोचप्रसारविवर्त्तनरूपैर्व्यापारविशेषैः श्रोणिपथानुकूलतां भजन् शनैः शनैरवतरति।

सङ्कोचः—गर्भो नतशिरा एव प्रायेण वर्त्ततेऽन्तःकुक्षाविति सुविदितम्। प्रसवारम्भे च यथैव शिरः श्रोणिकण्ठिकामति-

---

निष्क्रमणविधिः Mechanism of Labour अवतरणम् Descent
सङ्कोचः Flexion

पेत्तया अनुशीर्षभागस्य सन्निहिततरो भवति। यदा च [गर्भाशयस्कन्धभागो गर्भनितम्बं साक्षादधः पीडयति तदा पीडनबलं गर्भान्तरेखामनुसरत् शिरोग्रीवसंधिमार्गेण शिरस्यायाति। तेन स्वभावत[1] एव अनुशीर्षं द्रुतमवतरति।

अन्तरावर्त्तनम्—ततो निम्नतरमनुशीर्षं प्रत्यावीकाले गर्भाशयबलेनाधः पीड्यमानं प्रतिरुन्धन्त्याः श्रोणितलभूमेः पश्चिमपार्श्वभागं

[ ७२ चित्रम् ]

शीर्षोदयः



अन्तरावर्त्तनं परिसमाप्तम्, प्रसारः प्रारब्धः।

बहिः पश्चादधश्च पीडयति। आवीनां विरतौ तु तदेव तलभूमेः प्रतिचेष्टनेन अन्तः पुरस्तादूर्ध्वञ्च प्रतिहन्यते। मुहुर्मुहुः प्रतिहन्यमानं चैवमन्तर्घूर्णादिव श्रोण्या अधिष्ठिततिर्यग्व्यासस्याग्रमात् पश्चिमाद्वा प्रान्तात् पुरतः ( चक्राष्टैकभागं चक्राष्टत्रिभागं वा[2] ) प्रचलित भगतोरणिकाक्रोडे

---

शिरोग्रीवसन्धिः—occipito spinal joint. 1 lever theory अन्तरावर्त्तनम् internal rotation. 2 1/8 or 3/8 of a circle. घाटा Nape of the Neck.

हीनप्रतिरोधाल्लघ्वावकाशं स्वात्मानं निर्गमद्वारस्यानुदीर्घे व्यासे प्रतिष्ठापयति। यो ह्यस्य निम्नतरो भवति स एव पुरतो विवर्त्तेत इति नियमः। प्रवेशद्वारेऽनुप्रस्थतिरश्चीनौ निर्गमद्वारे चानुदीर्घौ महत्तमव्यासा भवन्तीत्यतोऽपि मार्गानुकूलनसिद्धान्तादन्तरावर्त्तनं जायत इत्येके। तथाभूतस्य च मध्यसीमन्तः श्रोण्या अनुदीर्घव्यासे, अनुशीर्षं शिवरन्ध्रञ्च पूर्वतो भगतोरणिकाया अधस्तात्, ललाटं ब्रह्मरन्ध्रञ्च पश्चिमतस्त्रिकोदरे, घाटा तु सन्धानिकायाः पृष्ठतो वर्त्तन्ते ( ७२ चित्रम् )।

**प्रसारः**—अथ सन्धानिकाया अधः सम्यक् प्रतिष्ठितेऽनुशीर्षं गर्भशिरो गर्भाशयोदरपेशीभिरधः, श्रोणितलभूमिपेशीभिश्च प्रचेष्ट्यमाना-

[ ७२ चित्रम् ]
शीर्षोदयः ।



शिरोजन्मनि प्रसारप्रक्रिया ।

भिरूर्ध्वं पुरस्ताच्च प्रपीड्यते। परिणामे चोर्ध्वाधःपीडनभरस्य परस्परं प्रतिहतत्वात् पुरस्तादेव शिरसो गतिः। न चैतत् केवलमेकदैव पुरोगन्तुं प्रभवेत्, घाटायाः सन्धानिकया गृहीतत्वात्। एवञ्च गत्यन्तराभावात् प्रसरणक्रिययाऽपत्यपथवक्रतामनुसरदेव अग्रेसरं भवति। तथा निरस्यमानस्य च चिबुकं वक्षसा वियुज्यते, अनुशीर्षञ्च भगतोरणिकातो विमुच्य विवृतयोनिमुखात् प्राक् निर्याति। ततो मध्यशीर्षललाटाननचिबुकानुपूर्व्या मूलाधारमुत्तरत सकलं गर्भशिरो व्यात्तयोनिमुखाद्बहिः प्रपद्यते।

---

प्रसारः Extension.

बहिरावर्त्तनम्—कुक्षौ तिर्यगास्थितस्य गर्भस्य स्कन्धौ शिरश्च स्वानुदीर्घव्यासाभ्यां श्रोण्या विरुद्धतिर्यग्व्यासावधिष्ठाय वर्त्तेन्त इति स्थितिः। अन्तरावर्त्तनकाले तु केवलं शिरोग्रीवमस्य विवर्त्तते नान्यच्छरीरम्। तदेव च तथाविवृत्तम् उद्वलितग्रीवं श्रोण्या अनुदीर्घव्यासमाश्रित्य प्रसरद्बहिर्निर्याति। निष्क्रान्ते तु स्वतन्त्रं शिरो ग्रीवाप्रत्युद्वलनेन (चक्राष्टैकभागं) पुनरावर्त्तमानं पुनः पूर्वां तिर्यग्व्यासदिग्स्थितिं भजते। तथा चास्याधोमुखता पार्श्वमुखतायां परिणमते स्तोकेन। तदेकं बहिरावर्त्तनम् प्रत्यावर्त्तनख्यातं गौणञ्च।

ततः शिरोजन्मानन्तरं निर्गच्छतो गर्भशरीरस्य शिरोविपरीत—तिर्यग्व्याससंश्रितौ स्कन्धौ तथैवान्तरावर्त्तनेन श्रोण्या निर्गमद्वारस्यानुदीर्घव्यासं प्रपद्येते। तत्र पूर्वः स्कन्धो निम्नतरत्वात् श्रोणितलपेशी-

[ ७४ चित्रम् ]

शीर्षादयः।



स्कन्धयोरन्तरावर्त्तनं शिरसश्च बहिरावर्त्तनं सञ्जातम्।

बहिरावर्त्तनम् External Rotation. प्रत्यावर्त्तनम् Restitution

भिरनुशीर्पमिव प्रतिहन्यमानः पुरतो विवर्त्तते, भगसन्धानिकाया अध आगत्य च स्थिरीभवति । पश्चिमस्कन्धस्तु सहैव विचलितस्तिर्यग्व्यासं परित्यज्य पृष्ठतो विवर्त्तनेन त्रिककोटमाश्रयते । एवं श्रोण्या अनुदीर्घव्यासमाश्रयता स्कन्धद्वितयेन सार्धं शिरः पुनरपि चक्रस्यापरमष्टैकमार्गं तस्यामेव प्रत्यावर्त्तनदिशि विवर्त्तते बहिःस्थितम् । तेन च पूर्णतोऽस्य पार्श्वमुखता सञ्जायते । तदेतत् अपरं बहिरावर्तनं मुख्यञ्च ।

अथ विशल्यभावः—ततश्चानुशीर्षमिव भगतोरणिकाया अधः स्थिरीभूते पूर्वांसे गर्भाशयाकुञ्चनबलादवपीड्यमानः पश्चिमस्कन्धो मूलाधारे परिसर्पन् प्राक् निष्क्रामति योनिमुखात्, ततश्च पूर्वांसः, ततो मध्यशरीरं पाणिश्लिष्टोरस्कं, ततो नितम्बौ सक्थिनी चेति गर्भशल्यापगमः । नितम्बावपि स्कन्धाविवान्तराकृत्य शिम्बरकान्तरालगव्यासेन श्रोण्या अनुदीर्घव्यासमधिश्रयन्तौ तथैव जायेते । अथ च गात्रजन्मनि शिरःप्रसारस्थानीयं जननपथवक्रताकृतं गात्रपार्श्वायमनं, तत्तद्भागानां तिर्यगनुदीर्घव्यासमाश्रितिकृतं श्रोणोद्वलनस्थानीयं गात्रोद्वलनमपि च स्तोकेन भवतः ।

अन्यच्चापि प्रासङ्गिकमत्रानुवाच्यम्, शिरोरूपणम् अधिशिरश्च । तत्र—

शिरोरूपणं—नाम श्रोण्या दार्ढ्येन पीड्यमानस्य गर्भशिरस आकारसाधनम् । तच्च शिरोव्यासानां ह्रासवृद्धिभ्यां सम्भवति । केचन व्यासाः ह्रीयन्ते, कश्चिच्च तन्निष्कृतिकरो वर्द्धतेऽपि । यथाऽत्रैव आनुशीर्पनासामूलिकस्य आनुशीर्पाधरश्मश्रुविन्द्रिकस्य पार्श्वकपालिकस्य च

---

बहिरावर्त्तनं मुख्यम् External Rotation proper, विशल्यभावः Expulsion ( of the trunk ). गात्रपार्श्वायमनम् Lateroflexion of the body. गात्रोद्वलनम् Twisting or Torsion of the body, शिरोरूपणम् Moulding of he head.

व्यासस्य तय आनुशीर्षोत्तरचिबुकस्य च वृद्धिर्दृश्यते। सोऽयमायतनह्रासः शिरःकपालानां परस्परमुत्तराधरप्रपत्त्या जायते। सीमन्तानां कलामयत्वात्, सीमन्तसन्धीनां रन्ध्रमयत्वात्, अस्थिकपालानां मार्दवात्, मस्तुलुङ्गस्य क्षुद्रतनुत्वात्, ब्रह्मवारिणः सौषुम्निकनलिकायां प्रतिगमनात्, सिराकुल्यासृजः शारीरसिरासु प्रतिनिवर्त्तनाच्च न तेन काचित् क्षतिः। तत्र पुरःपश्चिमकपालौ पार्श्वकपालयोरधः पार्श्वकपालञ्च पुरतः स्थितं पश्चिमतः स्थितस्य पार्श्वकपालस्योपरि प्रपद्यते। अतिरूपणे तु दात्रिकाया जवनिकायाश्च कलाया अत्यायततया विदरणेन रक्तस्रवणान्मरणसम्भवः।

अधिशिरः—पुनरवततरतो गर्भाङ्गस्य मन्दतरमवपीड्यमाना नामुद्यत्प्रत्यङ्गानां त्वचि रक्तनिचयात्कलितो गुल्मविशेषः। तदिदं शीर्षोदये प्रथम मध्यसीमन्तमध्येऽभिनिवर्त्तमानं सङ्कोचावर्त्तनकाले शिवरन्ध्राभिमुखम् अपसरति, प्रथमासने सीमन्तस्य दक्षिणतो द्वितीयासने च वामतो (पार्श्वकपालस्य पश्चिमोत्तरकोणे) वर्त्तते प्रायेण। अनुशीर्षस्य पश्चिमावर्त्तने तु पार्श्वकपालस्य पूर्वोत्तरकोणेऽभिनिवर्त्तते वामतो दक्षिणतो वा यथासनम्, न च गर्भनिर्गमकाले स्थानात्स्थानं प्रव्रजति। जातस्य चाहोरात्रमात्रेण स्वतः प्रविलीयतेऽधिशिरः।

अथ सामान्येनोक्तं निष्क्रमणविधिं तत्तदासनेषु संसाध्य दर्शयिष्यामः, तद्यथा—

वामपूर्वानुशीर्षासनम्—इह हि प्रथमासने गर्भशिरोऽनुशीर्षमग्रेकृत्य स्वेनानुशीर्षनासामूलिकेन व्यासेन श्रोण्याः प्रवेशद्वारस्य दक्षिणतिर्यग्व्यासं पार्श्वकपालिकेन च स्वव्यासेन तदीयं वामतिर्यग्व्यासमधिष्ठाय श्रोण्यन्तः प्रविशति। ततः सङ्कोचः, तेन चानुशीर्षाधरब्रह्मरन्ध्रिको व्यास आनुशीर्षनासामूलिकस्य स्थानमादत्ते। ततोऽन्तरावर्तनम्, तेन चानुशीर्षं दक्षिणतिर्यग्व्यासस्याग्रिमप्रान्तात् पुरतः प्रचलितं भगतोरणिकाया अधः

---

अधिशिरः Caput Saccedaneum.

संविशति। तदनन्तरं प्रसारः, तेनास्य ललाटमास्यं चिबुकञ्च मूलाधार-पश्चिमतः सरभसं बहिर्भवन्ति। स्वतन्त्रं तु शिरसि प्रत्यावर्त्तनम्, येनास्यानुशीर्षं पुनः पूर्वस्थितिं भजते। ततो ह्यंसौ कूटान्तरालगव्यासेन वामतिर्यग्व्यासमधिरुह्य श्रोण्यां प्रविशतः। पूर्वांसश्च निम्नतरत्वात् श्रोणितलभूमिं स्पृशन् पूर्वतोऽन्तरावर्त्तमानो वामतिर्यग्व्यासाग्रकोटिं परित्यज्य भगतोरणिकाया अधः समापतति। सहैव च तत्कृतेन शिरसो बहिरावर्त्तनेनानुशीर्षं मातुर्वामसक्थ्यभिमुखं प्रपद्यते। परञ्च यथोद्दिष्टक्रमेणाऽप्रकाशितभागोऽपि बहिर्निर्गच्छति।

दक्षिणपूर्वानुशीर्षासनम्—अत्र द्वितीयासने तु गर्भशिरोऽनुशीर्षमग्रेकृत्य स्वेनानुशीर्षनासामूलिकेन व्यासेन श्रोणिकण्ठस्य वामतिर्यग्व्यासं पार्श्वकपालिकेन च दक्षिणतिर्यग्व्यासमधिकृत्य श्रोणौ विशति। सङ्कोचेन चानुशीर्षाधरब्रह्मरन्ध्रिको व्यासश्चानुशीर्षनासामूलिकस्य स्थानमादत्ते। तलभूमिं स्पृशदनुशीर्षन्तु अन्तरावर्त्तमानं वामतिर्यग्व्यासाग्रिमकोटितो विचलितं भगतोरणिकाया अधः प्रपन्नं भवति। ततः प्रसारेण शिरोजन्म। प्रत्यावर्त्तनेन पूर्वस्थितिं गच्छदनुशीर्षं तु चक्राष्टैकभागं दक्षिणतो विवर्त्तते। ततो दक्षिणतिर्यग्व्यासे वर्त्तमानयोरंसयोः पूर्वांसस्तलभूमिस्पर्शेनान्तरावर्त्तमानस्तद्व्यासाग्रिमप्रान्तं विहाय भगतोरणिकाया अधस्तात् समागच्छति, सहैव च शिरसो बहिरावर्त्तनादनुशीर्षं पुनश्चक्राष्टैकभागं विवृत्तं मातुर्दक्षिणसक्थ्यभिमुखतां गच्छति। ततश्च स्कन्धान्तराधिनिर्गमाद्गर्भजन्म।

दक्षिणपश्चिमानुशीर्षासनम्—इह तृतीयासने गर्भशिरोऽनुशीर्षं पश्चिमतः कृत्वानुशीर्षनासामूलिकेन स्वव्यासेन श्रोणिकण्ठस्य दक्षिणतिर्यग्व्यासं पार्श्वकपालिकेन च वामतिर्यग्व्यासमधिश्रित्य श्रोण्यन्तः प्रविशति। सङ्कोचेन चानुशीर्षाधरब्रह्मरन्ध्रको व्यास आनुशीर्षनासामूलिकस्य स्थानं गृह्णाति। ततः श्रोणितलभूम्या संस्पृष्टमनुशीर्षं दीर्घान्तरावर्त्तनेन दक्षिणतिर्यग्व्यासस्य पश्चिमप्रान्तात् वृत्तस्याष्टत्रिभागं पूर्वतो

दूरं प्रचलन्य भगतोरणिकाया अधः संविशति। सहैव च वामतिर्यग्व्यासे वर्त्तमानौ स्कन्धावपि विचलितौ प्राक् अनुदीर्घव्यासे ततश्च दक्षिणतिर्यग्व्यासे विवृत्य स्थिरतां लभेते। इति पूर्वतो विशेषः। तद्वैतत् शिरसोऽन्तरावर्त्तने सौकर्यमावहति। अन्यथा ग्रीवाया अत्युद्वलनेन व्यापद् स्यादेव। तत्र मनागंसघूर्णनमिति केचित्। विरुद्धतिर्यग्व्यास यावदित्यन्ये। ततः प्रसरणक्रियया शिरोजन्म। प्रत्यावर्त्तनेन चानुशीर्षं चक्रस्याष्टैकभागं दक्षिणतः प्रपद्यते। ततः पूर्वांसो दक्षिणतिर्यग्व्यासस्य पूर्वाग्रात् पुरोविवर्त्तते, शिरश्च मातुर्दक्षिणतो बहिरपरं वृत्ताष्टैकभागम्। एवञ्चास्य मुखं मातुर्वामसक्थ्यभिमुखम् अनुशीर्षञ्च दक्षिणसक्थ्यभिमुखं सञ्जायते कात्स्न्र्येन।

वामपश्चिमानुशीर्षासनम्—चतुर्थासने तस्मिन् गर्भशिरोऽनुशीर्षं पश्चिमतः कृत्वानुशीर्षनासामूलिकेनात्मव्यासेन श्रोणिकण्ठस्य वामतिर्यग्व्यासं पार्श्वकापालिकेन च दक्षिणतिर्यग्व्यासमभ्यास्य आगया भवतरति। अथ सङ्कोचः, तेन चानुशीर्षाधरब्रह्मरन्ध्रिको व्यास आनुशीर्षनासामूलिकस्य स्थाने समापतति। ततः श्रोणितलभूमिस्पर्शनमूलेन दीर्घान्तरावर्त्तनेनानुशीर्षं वामतिर्यग्व्यासस्य पश्चिमाग्रात् पुरतः सुदीर्घं प्रचलितं भगतोरणिकायाः क्रोडे विश्राम्यति। सार्धञ्चैव दक्षिणतिर्यग्व्यासं श्रितौ स्कन्धौ विचलतः, अनुदीर्घं व्यासमुल्लङ्घ्य वामतिर्यग्व्यासमवलम्बितौ च भवतः। अनन्तरं प्रसारः शिरोजन्मकरः। निर्मुक्ते तु शिरसि अनुशीर्षं स्तोकेन वामतः प्रत्यावर्त्तते। ततः परं पूर्वांसो वामतिर्यग्व्यासस्य पूर्वकोटितोऽन्तरावर्त्तमानो भगतोरणिकाया अधः प्रपद्यते। शिरश्च बहिरावर्त्तमानं मातुर्वामसक्थ्यभिमुखम्। पश्चातोंसगात्रनिर्गमात् गर्भजन्म।

---

दीर्घान्तरावर्त्तनम् Long internal rotation

## शीर्षोदये वैकृतनिष्क्रमणम् ।

शीर्षोदयस्य निष्क्रमणविधौ यदा कदा विकारा अपि सम्भवन्ति । यथा—

( १ ) शिरसः प्रतीपावर्त्तनम्—अयं हि पश्चिमानुशीर्षासने यदा शिरसः केनापि हेतुना पूर्णसङ्कोचो न सम्भवति तदा दृश्यते । पूर्वानुशीर्षासनेऽपि नास्य सर्वथाऽसम्भवः । यो ह्यस्य निम्नतरो भवति स एव श्रोण्यां पूर्वतो विवर्त्तत इति सामान्यनियमाद् यदैव शिरसोऽपूर्णावनत्या अनुशीर्षस्थाने ललाटस्य निम्नतरत्वं तदैव तस्य पुरोविवर्त्तनाद् मुखं सन्धानिकायाः पृष्ठे, अनुशीर्षञ्च पश्चिमतोऽपवृत्तं त्रिकोदरं सन्तिष्ठते । तथाभूतस्य च स्वतो निष्क्रमणं भिन्नेनैव विधिना कदाचित् ( श्रोणिशिरसोः कायमानं स्वाभाविकं चेत् ) सम्पद्यते, यथा हि—एवं निष्क्रामतो गर्भस्य नासामूलं ललाटैकदेशो वा भगसन्धानिकाया अधः प्राक् स्थिरी भवति, स्थिरीभूतं च तत् मध्यकीलमिवाश्रित्य गर्भशिरोऽपि चक्रगतिना सङ्कोचं गच्छति. तेन मध्यशोपानुशीर्षे मूलाधारदेशादवस्रस्य बहिर्भवतः, ततः स्वल्पप्रसरणगत्या मुखमपि ललाटवदनचिबुकानुक्रमेण बहिर्निर्याति । अतः परं च बहिरावर्त्तनेन पश्चिमतः स्थितमनुशीर्षं पूर्वाधिष्ठितदिग्भागानुक्रमेण पूर्वतो विवृत्य मातृसक्थ्यभिमुखं भवति । शेषं पूर्वेण तुल्यम् ।

स्मर्त्तव्यश्चात्र यत्—वैकृतनिष्क्रमणं प्राकृतनिष्क्रमणापेक्षया छिन्नहोरामितः कालोऽधिक एव व्यस्येति । तत्र शिरसो गतिरोधाद्, जरायाः प्राग्विदरणेन गर्भाशयमुखस्यासम्यग्विकसनाद्, आवीनां दौर्बल्याद् दीर्घतरशिरोव्यासानामुपस्थानाच्च प्रसवे विलम्बः । आनुशीर्षललाटिकव्यासस्थाने च आनुशीर्षललाटिको व्यासो योनिमुखं विस्फारयति

---

वैकृतनिष्क्रमणम् Abnormal mechanism शिरसः प्रतीपावर्त्तनम् Reversed rotation or Malrotation of the head.

सम्भावयति च सुभृशं मूलावदरणम् । कदाचित्तु निरुद्धगतिः स्वतो न निष्क्रामत्येव, 'सम्मूढं पश्चिमानुशीर्षासनम्' इति विशेषसंज्ञया च व्यपदिश्यते ।

यन्त्राद्युपयोगार्हत्वाच्च तत्र सङ्क्रमणमयम् ।

इमे चात्र शिरसोऽपूर्णसङ्कोचकरा भावा भवन्ति—

( क ) पश्चिमानुशीर्षासने समुन्नतं गर्भपृष्ठं मातुः समुन्नतस्य कटिवंशस्य पुरस्तात् तिष्ठति । उभयोरुन्नततया प्रतिकूलावस्थानो गर्भः स्वपृष्ठमृजूकृत्यैव तत्रात्मानं सङ्क्रमयति । तेन न शिरसःपूर्णसङ्कोचः ।

(ख) पार्श्वकपालिको नाम दीर्घतमोऽनुप्रस्थगर्भशिरोव्यासो यः पूर्वानुशीर्षासने त्रिकजघनसन्धानतो भगसन्धानिकां यावदनुगते व्यासेऽवतिष्ठते स एव पश्चिमानुशीर्षासने त्रिकोष्ठमध्यतः श्रोणिकङ्कतिकोत्सेधं यावत् प्रगते पूर्वस्मान्न्यूनतरे व्यासे सन्तिष्ठते । येनावतरणकाले शिरसः पश्चिमो भागः पूर्वभागापेक्षया विशालतरत्वेन सङ्कीर्णे पथि श्रोणिशिरसोः कायमानवैषम्यं चेद् विशेषतः, प्रतिरुध्यते विलम्बेन चावाक् प्रतिपद्यते । पूर्वभागस्तु पुरस्थितो मन्दं प्रतिरुध्यमानस्तदपेक्षया द्रुततमधस्तात् प्रपद्य निम्नतरो भवति । एवं शिरसः पूर्णाप्रसरणेन सङ्कोचस्यापूर्णतैव । वस्तिकण्ठेऽनवगृहीते तु शिरसि पूर्णप्रसरणसम्भावनया मुखोदयोऽपि स्यात् ।

( ग ) ह्रस्वं शिरो महती वा श्रोणिः । येन मन्दप्रतिरोधादपि न गर्भशिरः पूर्णसङ्कोचं गच्छति ।

( घ ) बहुप्रजातासु दुर्बला श्रोणितलभूमिर्निश्चेष्टप्राया भवति । तेनापि न पूर्णसङ्कोचः । एवम् आवीदौर्बल्यादपि न सङ्कोचस्य पूर्णता स्यात् ।

(२) शिरसोऽत्यावर्त्तनम्— यदा कदा पूर्वानुशीर्षासनयोः शिरसोऽ-

---

सम्मूढं पश्चिमानुशीर्षासनम् Persistent occipitoposterior position.
शिरसोऽत्यावर्त्तनम् Hyper-rotation of the head

त्यन्तरावर्त्तनं जायते, येन श्रोण्या अधिष्ठिततिर्य्यग्व्यासस्याग्रिमात् प्रान्तात् प्रचलितमनुशीर्षम् अनुदीर्घव्यासमुल्लङ्घ्य अपरतिर्य्यग्व्यासानुकारिण्यां दिशि भगशृङ्गस्याधः प्रतिष्ठितं भवति न तु सन्धानिकाया अधः। ततश्च प्रसरणादिक्रियया पूर्ववन्निर्गमः। न चानेन प्रसवकर्म व्याहन्यत इति विकारोऽयं चिन्त्य एव।

(३) अंसापवर्त्तनम्—तत्र सामान्यतः पूर्वः स्कन्धो निम्नतरत्वादग्रतो विवर्त्तत इत्युक्तम्। कदाचित्तु विरुद्धं स्थितः पश्चिमः स्कन्धो निम्नतरः सन् दीर्घान्तरावर्त्तनेन पुरतो विवर्त्तते। तेन च गर्भशिरसो बहिरावर्त्तनमपि पूर्वतो विरुद्धमेव। यथा प्रथमासने यदनुशीर्षं मुखबहिरावर्त्तनेन चक्राष्टैकभागं वामपश्चिमतो विवृत्य मातुर्वामाभिमुखं भवति तदेवात्र चक्राष्टत्रिभागं दक्षिणपूर्वतो विवृत्य मातुर्दक्षिणाभिमुखं सम्पद्यते। एषोऽपि प्रसवकर्मणोऽनुपघातकरत्वाच्चिन्त्य एव।

## अथ शिरसः प्रतीपावर्त्तने प्रसवोपक्रमः।

(१) तत्रादमवधेयम्—यावज्जरायुर्न भिद्यते तावन्मातुर्गर्भस्य चाकुतोभयत्वम्। पूर्णश्चेत्कालो लभ्येत, अनुशीर्षमपि बहुशः पुरोविवर्त्तनं स्वयमेव। तथा चावीभिः शिरश्चेदग्रेसरति न च वास्याः किञ्चिद् विषमं भासते तर्हि नानुष्ठेयं किञ्चित्, केवलं प्रतीक्ष्यम्। अकालानुष्ठानेन सुसाध्यमपि कृच्छ्रसाध्यतां भजेत।

किञ्च तदात्मीयेभ्यः सम्भाव्यप्रसवोपद्रवाः सूचनीया, हर्षणीया च गर्भिणी सान्त्वनीयाभिर्वाग्भिः, रक्षणीयं च तद्बलं लघुपथ्ययोगेन।

(२) प्रसवात् प्राक् प्रसवादौ वा पश्चिमाननं निरूप्तं चेद् बहिर्विधानेन तत् पूर्वासने परिवर्त्तनीयम्। दृष्टञ्च बहुधा प्रयत्नस्य साफल्यमपि। तथा चास्यास्तृतीयासने दक्षिणतश्चतुर्थासने च वामतो दण्डाकारमङ्गि-

अंसापवर्त्तनम् Reversed rotation of the shoulders.

स्थूलं वस्त्रखण्डमेकं पूर्वोर्ध्वकूटस्य पुरस्तादेव गर्भपूर्वस्कन्धस्य पुरःकर्षणाय, दीर्घायतमन्यद्वस्त्रखण्डञ्च यथासन्नं वामे दक्षिणे वा वङ्क्षणोत्तरदेशे गर्भहस्तपादानां पश्चिमतोऽपसारणाय स्थापनीयम्, स्थिरीकरणीयञ्च महता वाससा गर्भिण्या उदरं संवेष्ट्य। एतेन दक्षिणपश्चिमासनं दक्षिणपूर्वासने वामपश्चिमासनं च वामपूर्वासने परिवर्त्तते प्रायेण।

किञ्चात्र मातुस्तथा पार्श्वशयनमपि यथा गर्भपृष्ठमुच्चैर्वर्तेत शिरसः पूर्णावनमनाय कल्पते। तस्मात्तृतीयासने वामपार्श्वशयनं चतुर्थासने च दक्षिणपार्श्वशयनं हितायैव।

(३) सति वैफल्ये तु प्रसवमध्ये योनौ हस्तं प्रवेश्य, आवीकालेऽङ्गुलिसाहाय्येन ललाटमुत्क्षिप्यापि शिरःसङ्कोचाय यतनीयम्। सङ्कुचिते शिरस्यनुशीर्षं स्वभावत एव पुरोविवर्त्तते।

(४) अथैवं कृते प्रतीक्षितेऽपि च शिरश्चेन्नाग्रे सरति, न चापि पुरोविवर्त्तते, किंवाविवृत्तो वा त्रिकमाश्रयते, गर्भिणी वा क्षीणबला क्लाम्यति, गर्भो वा हृद्गतिज्ञानेन विपन्न इव लक्ष्यते तदा हस्तेन सन्दंशेन वा गर्भशिरः पुरोविवर्त्य निष्कासयेत्। त्रिकसंश्रितेऽनुशीर्षे तथावस्थस्यैव निर्हरणं तु न मनस्तोपाय।

हस्तविवर्त्तनम्—तत्र तावद् गर्भिणीं सम्मूर्च्छ्य तृतीयासने वामपार्श्वशयानाया योनौ दक्षिणहस्तं ( चतुर्थासने दक्षिणपार्श्वशयानाया योनौ वामहस्तं ) श्रोणिशिरसोरन्तराले प्रवेश्य शिरसि धृत्वा आवीनां विरतिकाले पुरतो वामतश्च ( चतुर्थासने पुरतो दक्षिणतश्च ) चालयेद् गर्भशिरसः पुरोविवर्त्तनाय, सहैव च गर्भिण्या उदरे बहिःस्थितमन्यम् हस्तमपि गर्भस्य पूर्वांसदेशे धृत्वा तद्दिशि एव चालयेद् गर्भशरीरविवर्त्तनाय, अन्यथा विवृत्तमपि शिरः पुनः प्रतिविवृत्तं तदवस्थमेव स्यात्। सम्यग्विवृत्ते च शिरसि महता वाससा प्रजायिन्या उदरं दृढं परिवेष्ट्य स्वतः प्रसवाय त्यजेत् सन्दंशेन वापहरेद् यथोचितम्।

---

हस्तविवर्त्तनम् Manual rotation.

सन्दंशविवर्त्तनम् —सन्दंशोपचारस्तु हस्तविवर्त्तनविनिर्मुक्तस्य एव कार्यः । सिद्धहस्तस्यापि तत्प्रयोगे योनिविदरणगर्भशिरोऽभिघातादिसम्भवात् । तत्र सम्यग् विवृते गर्भाशयमुखे सन्दंशफलके विधिना प्रवेश्य शिरो गृहीत्वा मन्दं मन्दं श्रोणिकुहरं प्रति पीडयेत् । चिरात् क्लिश्यमानायां तु अधरगर्भशय्यायां विदारभयान्नैवमुत्क्षिपेत् । ततः शनैः शनैः सावधानतया च यन्त्रं दक्षिणतो वामतो वा यथासन्नं विवर्त्तयेद् येनानुशीर्षं पुरस्तात् प्रपद्येत । सहायकश्च पूर्ववद् अंसविवर्त्तनाय बाह्यतः प्रयतेत । तदनु गर्भशिरः शनैरधः श्रोणौ कर्षेत्, सहायकश्च समाकृष्टं तत् सन्धानिकया उपरि हस्तेन सन्धार्य स्थिरीकुर्यात् । भिषक् तु शिरोविवर्त्तनानन्तरं सन्दंशफलके अपहृत्य पुनश्च यथाविधि दधित योजयित्वा गर्भं निर्हरेत् । विवर्त्तनकर्माणि च यन्त्रस्य हस्तदण्डे यथासम्भवं महत्तमवृत्तस्य वृत्तखण्डमनुसृत्य चालनीयं, येन फलकाग्रे लघुतमवृत्तस्य वृत्तखण्डे विवर्त्तेत । एवं गर्भाशयग्रीवाया योन्या वा विदरणभयं स्वल्पं भवति । किञ्च सन्दंशप्रयोगादौ सम्भवति चेच्छिरोनमनमपि कार्यमेव । कदाचित्तु शिरः सन्दंशेन धृत्वा यथैवाकृष्यते तथैव श्रोणितलभूम्या स्पृष्टं स्वयमेव विवर्त्तमानमपि दृष्टम् ।

पश्चिमतोऽपवृत्ते तु शिरसि तदवस्थ एव बलादाकर्षणे महती मूत्रावदरणभीतिः । तथापि सम्यग् अवाक् प्रतिपन्नं शिरः आवीकाले प्रत्यग्रं भवति चेत्तैव विवर्त्तनीयम्, एकतः उभयतो वा मूलपीठकर्त्तनं विधाय महता यत्नेन तथाभूतमेवोद्धरेत् । मृते तु गर्भे सन्दंशविवर्त्तनापेक्षया शिरोवेधनमेव कार्यम्, अल्पतरोपघातकरत्वान्मातुः ।

अस्मद्देशे तु पश्चिमाम्नाये प्रायशोऽविलं प्रसवविलम्बमभिसमीक्ष्य गर्भस्यावतरणे शिरसोऽवनमने विवर्त्तने च सौकर्याय प्रसाविकाभिः

---

सन्दंशविवर्त्तनम् Rotation by forceps.

'उत्कटुकासनमास्थिता प्रसूष्व' इत्युपदिश्यते । दृष्टञ्च बहुधा तत्साफल्यमपि ।

शीर्षोदये शिरोरूपणम्—प्राकृतनिष्क्रमणयानुशीर्षाधरललाटिक आनुशीर्षाधरब्रह्मरन्ध्रिकश्च व्यासौ सर्वाधिकं पीड्यमानौ क्षीयेते वर्धेते चानुशीर्षाचबुकिक आनुशीर्षोत्तरचिबुकिकश्च व्यासौ तन्निष्कृतिकरौ । तत्राधोहनौ आकाररूपणस्यासम्भवाच्छिर एव ऊर्ध्वे पश्चिमतश्च वर्धितं दीर्घायते । वैकृतनिष्क्रमणेनापवृत्ते तु शिरस्यानुशीर्षनासामूलिको व्यासः क्षीयते, आनुशीर्षाधरब्रह्मरन्ध्रिकश्च वर्धते । शिरश्च केवलमूर्ध्वे दीर्घीभूय वर्धते ।

# पञ्चमोऽध्यायः

## शिरोवतरणं वैकृतोदयाः ।

अथातो मुखोदयविज्ञानीयमध्यायं व्याख्यास्यामः ।

तत्र शिरोऽवतरणं श्रोणयवतरणं पार्श्वावतरणञ्चेत्यङ्गविशेष-कृतमवतरणत्रयं भवति । अवतरणकाले चैषामङ्गानां सङ्कोचप्रसारा-द्यवस्थाभेदेन तानि तानि प्रत्यङ्गोपाङ्गान्यग्रतः प्रतिपद्यमानानि उदयाख्यान् तांस्तान् अवान्तरभेदान् जनयन्तीति प्राग् ( १५४ पृ० )

[ ७५ चित्रम् ]



मुखोदयः ।

उक्तम् । तथा च यदा शिरसः पूर्णप्रसरणादवाङ्मुखो गर्भः श्रोण्यां विशति तदा मुखोदयः । एवम्भूतस्य च पृष्ठं खातोदरं भवति वक्षश्च

वैकृतोदयाः Abnormal presentations. मुखोदयः Face presetation.

प्रोन्नतम् अनुशीर्षं ग्रीवापृष्ठमनुस्पृशति चिबुकञ्च वक्षसा वियुज्य पुरस्तादुन्नीयते । माधवेनापि मूढगर्भगतिसंख्यान उक्तम्—'तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः' इति । त्रिविधा हि मूढगर्भा भवन्ति, असम्यगागता अनिरस्यमानाः सम्मोहिताश्च । यथोक्तं सुश्रुतेन—"तमेव कदाचिद् विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानं विगुणापानसम्मोहितं गर्भं मूढगर्भ इत्याचक्षते" इति । ( नि० ८ ) तत्र मुखोदयोऽसम्यगागतो मूढगर्भ एव ।

हेतुविज्ञानम्—तत्र ये ये भावाः शिरसः प्रसरणे सहायाः सङ्कोचे वा परिपन्थिभूता भवन्ति ते सर्वे मुखोदयस्य हेतवः । तद्यथा—

( १ ) गलगण्डादयो गलार्बुदाः, मातुः श्रोणिकण्ठवर्त्तिनः क्षुद्रार्बुदाः, उरस्तोयः, ग्रीवापृष्ठपेशीनां स्तम्भः, चिबुकस्यावस्तनाद् हस्तयोर्द्विगुणीभूयावस्थानम्, ग्रीवां बहुशः परिवेष्ट्य स्थितं नाभिनालञ्च । हेतव इमे स्वल्पं लभ्यन्ते, प्रसवारम्भतः प्रागेव च मुखोदयं जनयन्ति ।

( २ ) सङ्कुचिता श्रोणिः, पुरतः पार्श्वतो वा वक्रीभूतो गर्भाशयः, उद्गतानुशीर्षं ( सहज, न तु शिरोरूपणकृतम् ) महाप्रमाणं वा गर्भशिरश्च । प्रचुरं लभ्यमानाः प्रधानाश्च हेतव इमे प्रसवकाले यदानुशीर्षस्यावतरणक्रियां प्रतिरुन्धन्ति न ललाटस्य तदा शिरसः प्रसरणान्मुखोदयो जायते ।

---

मूढगर्भः Abnormal labour असम्यगागता: Malpresentated अनिरस्यमाना. Obstructed. सम्मोहिता. Asphyxiated.

उरस्तोय. Hydrothorax स्तम्भः Spastic Condition सङ्कुचिता श्रोणिः Contracted pelvis पु० पा० वक्रीभूतो गर्भाशय Anterior or posterior obliquity of the uterus, उद्गतानुशीर्ष शिरः Dolichocephalic head

( ३ ) गर्भोदकवृद्धिः, अपुष्टगर्भः, मृतगर्भः, यमलगर्भः, महागर्भः, अद्भुतगर्भः, पुरःस्थाऽपरा, बहुप्रजातात्वञ्चेति। त इमे गर्भस्य गर्भाशयस्य वा प्राकृताकृतिदूषणेन हेतवो भवन्ति। अत एवामी मिथ्यावतरणोदयानां सामान्या हेतवो न तु केवलं मुखोदयस्यैव।

गर्भासनानि—अत्रापि पूर्ववच्चत्वारि गर्भासनानि, मातुरुदरं गर्भपृष्ठस्य वामपूर्वादिखण्डचतुष्टयान्यतरस्मिन्नवस्थानात्।

नामनिर्देशस्तु चिबुकमधिकृत्य क्रियते। तान्यनुशीर्षासनान्येव शिरःप्रसरणेन तेषु चिबुकासनेषु परिणमन्ति, प्रथमं प्रथमे द्वितीयञ्च द्वितीये, इत्येवम्। केवलं नामसु वामदक्षिणपदयोः पूर्वपश्चिमपदयोश्च विपर्य्यासो भवति। तद्यथा—

( १ ) दक्षिणपश्चिमचिबुकासनम्—तदेतद् वामपूर्वानुशीर्षासनस्य शिरःप्रसारकृतो विशेषः। अत्र लालाटचिबुकिकः शिरोव्यासः श्रोणिकण्ठस्य दक्षिणतिर्य्यग्व्यासे, चिबुकं दक्षिणत्रिकजघनसन्धानं, ललाटभागश्च वामश्रोणिगवाक्षमधितिष्ठति।

( २ ) वामपश्चिमचिबुकासनम्—दक्षिणपूर्वानुशीर्षासनस्यैव परिणामविशेषः। अत्र तु लालाटचिबुकिको व्यासो वामतिर्य्यग्व्यासं, चिबुकं वामत्रिकजघनसन्धिं, ललाटञ्च दक्षिणश्रोणिगवाक्षमधिशेते।

( ३ ) वामपूर्वचिबुकासनम्—तदेतत् प्रसृतशिरसो दक्षिणपश्चिमानुशीर्षासनादभिन्नमेव। इह लालाटचिबुकिको व्यासो दक्षिणतिर्य्यग्व्यासं, चिबुकं वामश्रोणिगवाक्षे ललाटभागश्च दक्षिणत्रिकजघनसन्धौ सन्तिष्ठते।

---

गर्भोदकवृद्धिः Hydramnios अद्भुतगर्भः Monstor. पुरःस्थाऽपरा Placenta praevia. दक्षिणपश्चिमचिबुकासनम् Right mento-posterior (R. M. P.).

( २ ) Left mentoposterior (L. M. P.). ( ३ ) Left mento-anterior (L. M. A.).

(४) दक्षिणपूर्वचिबुकासनम् – वामपश्चिमानुशीर्षासनस्य विकारः। अस्मिन् लालाटचिबुकिको व्यासो वामतिर्यग्व्यासं, चिबुकं दक्षिणश्रोणिगवाक्षं, ललाटञ्च वामत्रिकजघनसन्धानमाश्रयते।

तत्रैषां तृतीयचतुर्थयोरेव बहुलता, गर्भपृष्ठस्य मातृपृष्ठाभिमुखत्वे शिरःप्रसरणस्य स्वाभाविकत्वात्। केचित्तु प्रथमतृतीययोर्बाहुल्यम् वदन्ति।

निर्णयः—तत्र उदरस्पर्शनेन गर्भाशयस्योर्ध्वभागे गर्भनितम्बः प्रतीयते स्वलक्षणलक्षितः, मध्यभागे तु गर्भपृष्ठं यथासनं वामतो दक्षिणतो वा पूर्वतः पश्चिमतश्च वा वर्त्तते, तद्विपरीततश्च पाणिपादम्। तत्र पश्चिमतो वर्तमाने गर्भपृष्ठे हस्तपादं शीर्षोदयापेक्षयाऽति-स्पष्टमनुभूयते शिरोवंशप्रसरणेनोन्नमितगर्भोदरवक्षःशाखानां गर्भाशय-पूर्वभित्त्या सह परमसन्निकर्षात्। पूर्वतः स्थिते तु पृष्ठे शाखानां गभीरतरमवस्थानात् कष्टतरैव प्रतीतिः। गर्भाशयाधरभागे च गर्भ-शिरोऽनुभूयते नातिक्रान्तश्रोणिकण्ठम्। आरब्धेऽपि प्रसवे न गर्भशिरः श्रोणिकण्ठरेखया कालेऽवगृह्यते, अस्थिरमेव तिष्ठति। तत्रानुशीर्षे गर्भपृष्ठदिशि वृत्तोन्नतार्बुद इव सुखमवबुध्यते, चिबुकं च शाखादिशि खुरसदृशं कष्टेन। अनुशीर्षं चिबुकापेक्षया उच्चैस्तरां च तिष्ठति। शिरःपश्चान्नत्या ग्रैवपरिखाऽपि गभीरायते, गर्भपृष्ठञ्च केवलमूर्ध्वमेव सुखेन स्पष्टं प्रतीयते न त्वधः।

योनिपरीक्षणम् – उदीयमानभाग आदौ न सुखेन प्राप्यते ऊर्ध्व-मवस्थानात्, अस्थिरश्च तिष्ठति। गोस्तनाकारञ्च वारिपुटकम्। परीक्षणकाले यथा जरायुर्न भिद्येत तथा यतनीयम्। ततोऽवाक् प्रति-पन्नं नेत्रकोटरतीरणिके गण्डास्थिनी नासिका मुखं हनुश्चेति लक्षण-विशेषाणामभिज्ञानात् सुकरं मुखोदयस्य परिज्ञानम्। अधिशिरोनिर्मा-णेन सह मुखे तु नितम्बोदयात् सम्यग् व्यावृत्तिर्दुःशकैव लक्षणविशे-

(४) Right mento-anterior ( R. M, A. )

षाणां सम्यग्ज्ञानाऽसम्भवाद्, मुखस्य गुदत्वेन गण्डकूटयोः कुकुन्दर-पिण्डत्वेन नासिकाया उपस्थत्वेन ग्रहणसम्भवाच्च। तत्र मुखं गु[दं] वेति निश्चयस्तु भिषजा विवरे कराङ्गुल्यग्रं शनैः प्रवेश्य तद्विशेष-विज्ञानेन कर्त्तुं शक्यः। मुखे प्रतीयेते दन्तमांसपङ्क्ती जिह्वा च, न चौष्ठाभ्यामङ्गुलिरवगृह्यते, मन्दं मन्दमाचूषणप्रयत्नश्चापि स्यात्। गुदे तु न तादृशपङ्क्ती, नापि जिह्वा, गुदपेशीसंवरणेनाङ्गुलिर्गृह्यते, मलेनावलिप्यते च। न च मुखे गुदे वा रभसाङ्गुलिः प्रवेश्या, तथा-प्रवेशिता हि श्वासप्रश्वासक्रियां सञ्जनय्य कण्ठगतश्लेष्मणोऽन्तः-कर्षणेन श्वासकर्म रुध्वा गर्भमुपहन्ति। किं वा सन्देहस्थले किञ्चिद् ऊर्ध्वमङ्गुलीर्नीत्वा बहिःकर्णज्ञानेन मुखोदयस्य वङ्क्षणपरिखा-जघनधाराविज्ञानेन च नितम्बोदयस्य सुकरो विनिर्णयः। नेत्रकोटर-तोरणिकयोर्मुखस्य च श्रोण्याः खण्डविशेषैः सह सम्बन्धविशेषदर्शनाद् गर्भासनानामभिज्ञानमपि सुखेन कर्त्तुं पार्य्यते। तद्यथा—प्रथमासने तोरणिकं वामपूर्वखण्डे मुखं च दक्षिणपश्चिमखण्डे तिष्ठतीत्येवम्। परीक्षणकाले च यथास्य नेत्रोपघातो न स्यात् तथा व्यवहर्त्तव्यम्।

हृच्छब्दाश्च प्रसवादौ नाभेरधस्ताद् यथापार्श्वं यथास्थानञ्च गर्भव-क्षस उपरि स्पष्टमनुभूयन्ते। पश्चिमचिबुकासनयोर्हृच्छब्दश्रवणं किञ्चिद् बाधितमपि पूर्वचिबुकासनयोरतीव स्पष्टं भवति।

निष्क्रमणविधिः—अत्रापि प्रसूयमानस्य गर्भस्य ता एव मार्गानुकूलाः पञ्च गतयो भवन्ति। सङ्कोचप्रसारयोः क्रमविपर्यास-मात्रस्तु विशेषः। तद्यथा—

अवतरणम्—गर्भाशयाकुञ्चनबलेनाधः प्रणुद्यमानं गर्भशिरः स्वानु-दैर्घ्यव्यासं तिर्यग्व्यासे (अनुप्रस्थव्यासे वा) कृत्वा श्रोणिकण्ठेऽवतरति। यथैव च शिरोऽवतरति तथैव प्रसरत्यपि।

प्रसारः—प्रथमत एव प्रसृतप्रायं शिरः सम्प्रति पूर्णतया प्रसृत्य अवाङ्मुखतां गर्भस्य करोति। अर्धप्रसृते शिरसि यदा शिरसः

पश्चिमभागोऽग्रिमभागापेक्षयाऽधिक एव प्रवृद्धो भवति तदा गर्भाक्षरेखानुगं पीडनबलं न शिरःसङ्कोचाय स्यात् किन्तर्हि तमुपस्थितप्रसारमेव वर्धयेत्। किञ्च मध्यशीर्षानुशीर्षापेक्षया स्वल्पं प्रतिरुध्यमानं चिबुकमपि द्रुतमवतरच्छिरः प्रसारयति। एवम्भूतस्य च हनुर्निम्नतरा भवति, ग्रैवात्रकग्रन्थिको नाम लघुतमो व्यासश्च श्रोण्यास्तिर्यग्व्यासे समापतति। व्यासश्चायम् आनुशीर्षाधरत्रकरन्ध्रकेण तुल्यप्रायमानोऽपि न तद्वच्छिरोरूपणकाले ह्रस्वायते।

[ ७६ चित्रम् ]

मुखोदयः।



प्रसारः पूर्णतां गतः, अन्तरावर्त्तनं च प्रारभ्यते।

अन्तरावर्त्तनम्—यो ह्यस्य निम्नतरो भवति स एव श्रोणितलभूमिप्रघट्टनेन पुरतो विवर्त्तते इति सामान्यनियमान्निम्नतरा हनुर्ह्रस्वां दीर्घां वा यथासनमावर्त्तमाना पुरतो विवृत्य सन्धानिकाया अधो

विश्राम्यति । अन्तरावर्त्तनं चैतद मध्यशीर्षोदयापेक्षया अग्रे गत्वा चिरेण च सम्पद्यते येनावर्त्तनारम्भतः पूर्वमेव मुखं गर्भमुखं योनिद्वारमापद्यते ।

[ ७७ चित्रम् ]

मुखोदयः ।



अन्तरावर्त्तन समाप्तम, सङ्कोचः प्रारभ्यते ।

सङ्कोचः - ततः स्थिरीभूतं चिबुकं मध्यकलमिवाश्रित्य चक्रगत्या सङ्कोचं गच्छन् गर्भशिरो बहिर्निर्याति । पूर्वं मुखं, ततो ललाटब्रह्मरन्ध्र-मध्यशीर्षाणि, अन्ते चानुशीर्षम ( ७८ चित्रम ) ।

बहिरावर्त्तनम—गौणं मुख्यं च बहिरावर्त्तनमत्रापि मध्यशीर्षोदय इवैव भवतः । बहिर्गतं च चिबुकं पूर्वावस्थितदिगनुक्रमेण पश्चिमतो विवर्त्तते । शेषं शरीरजन्म पूर्वतुल्यमेव ।

अत ऊर्ध्वं प्रत्यासन्नं निष्क्रमणक्रमो वक्ष्यते शिष्यबुद्धिवैशद्याय—

**प्रथमासनम्**—अत्र गर्भशिरो ग्रैवाब्रह्मरन्ध्रिकानुशीर्षोत्तरचिबुककयोर्मध्यगेन स्वव्यासेन श्रोण्या दक्षिणतिर्यग्व्यासमधिष्ठाय तदन्तः प्रविशति। ततः प्रसारः, तेन च ग्रैवाब्रह्मरन्ध्रिको व्यासस्तिर्यग्व्यासमा-

[ ७८ चित्रम् ]

मुखोदयः।



सङ्कोचः समाप्तप्रायः, शिरश्च प्रसूयते।

श्रयते। ततोऽन्तरावर्तनम्, येन चिबुकं दक्षिणतिर्यग्व्यासस्य पश्चिमप्रान्ताद् वृत्तस्याष्टत्रिभागं पुरतो दीर्घं प्रचलय्य भगतोरणकाया अधः सन्विशति सहैव च वामतिर्यग्व्यासे वर्त्तमानौ स्कन्धावपि विचलितौ प्रागनुदैर्ध्यव्यासे ततश्च दक्षिणतिर्यग्व्यासे विवृत्य स्थितिं लभेते। ततः सङ्कोचगतिना शिरोजन्म। तदनु प्रत्यावर्त्तनम्, तेन चिबुकं चक्रस्याष्टैकभागं मातुर्दक्षिणतो विवर्त्तते। ततः पूर्वांसो दक्षिणतिर्यग्व्यासस्य पूर्वप्रान्त

पुरतोऽन्तर्विवर्त्तते, चिबुकं च पुनश्चक्राष्टमभागं दक्षिणतो बहिः। अनन्तरं च स्कन्धादीनां निर्गमाद् गर्भजन्म ।

द्वितीयासनम्—सर्वं प्रथमासनमिवैव । केवलं वामदक्षिण-पदयोर्विपर्यासं विधाय पठनीयम् ।

तृतीयासनम्—इह खलु गर्भशिरो ग्रैवाब्रह्मरन्ध्रिकानुशीर्षान्तर-चिबुकिकयोर्मध्यगेन व्यासेन श्रोण्या दक्षिणतिर्यग्व्यासमधिश्रित्य तस्या मवतरति । ततः प्रसारेण ग्रैवाब्रह्मरन्ध्रिको व्यासस्तिर्यग्व्यासे सुस्थित भवति । अन्तरावर्त्तनेन च चिबुकं दक्षिणतिर्यग्व्यासस्याग्रिमप्रान्ताद् वृत्तस्याष्टैकभागं पुरतो विवृत्य भगसन्धानिकाया अधः प्रपद्यते। ततः सङ्कोचेन शिरोजन्म । प्रत्यावर्त्तनेन च पूर्वस्थितिं गच्छच्चिबुकं चक्राष्टैकभागं मातुर्वामतो विवर्त्तते । तदनु स्कन्धान्तरावर्त्तनेन पूर्वांसो वामतिर्यग्व्यासस्याग्रिमकोटिं विहाय सन्धानिकाया अधः समागच्छति, चिबुकं च बहिरावर्त्तमानं पुनश्चक्राष्टैकभागं विवर्त्तते मातुर्वामोरुं प्रति ।

चतुर्थासनम्—सर्वं तृतीयासनेन तुल्यम् । वामदक्षिणपदयो-र्विपर्यासस्तु कार्य एव ।

## मुखोदये वैकृतनिष्क्रमणम् ।

शिरसः प्रतीपावर्त्तनम्—यदा कदा पश्चिमचिबुकासनयोः शीर्षो-दयेऽनुशीर्षमिव चिबुकमपि पश्चिमत्रिकोदरं प्रवर्त्तते । शिरसा हीन-प्रसरणेन नीचैः स्थितं ललाटं पुरतो विवर्त्तते हनुश्च पश्चिमतः । तथाभूतः स्वतो निष्क्रान्तुं तु न कथमपि प्रभवेत् । यतोऽपत्यपथ-स्याकृतिः पूर्वतः कोरोदरा वक्रनलिकेव भवति । गर्भशिरश्च प्रसरणेन ( यथा शीर्षोदयस्य प्राकृते निष्क्रमणे ) सङ्कोचेन वा ( यथा मुखोदयस्य प्राकृते शीर्षोदयस्य च वैकृते निष्क्रमणे ) तदनुकूलं भूत्वैव निर्गच्छति । अत्र चेदनुकूलनत्वं स्याच्छिरसः प्रसारेणैव स्यात् । न च तच्छक्यम्,

शिरसः प्रथमत एव प्रसृतत्वात् अनुशीर्षस्य (पुरःकपालस्य वा) सन्धानिकापृष्ठे दुर्निविष्टत्वाच्च। एवं शिरःसङ्गेन मूढभूतश्च गर्भः "सम्मूढं परिवर्त्तितचिबुकासनम्" इति विशेषनाम्ना निर्दिश्यते। कदाचित्तु यदाऽतिशयेन क्षुद्रं शिरो महती वा श्रोणिरुत्तोऽपुष्टो वा गर्भस्तदा यथा-

[ ७९ चित्रम् ]

मुखोदये सम्मूढता।



शिरसः प्रतीपावर्त्तनेन शिरःसङ्गो जातः।

कथञ्चिदपि हनुरस्थ्नस्य अनुत्रिकास्थ्नोऽधः प्रवर्त्तते, तत्र च तां मध्य-

---

सम्मूढ परिवर्त्तितचिबुकासनम् Persistent Mento-posterior Case.

कीलमिवाश्रित्य शिर ईषत्सङ्कोचं गच्छति, ललाटमध्यशीर्षाणि क्रमशो बहिर्भवन्ति. शेषं च शिरः शीर्षोदय इव निर्याति ।

शिरोरूपणम्—मुखोदये हि श्रोणिकृतनिपीडनात् करोटिपटलमव-पीड्यते ललाटानुशीर्षं च प्रत्युद्गच्छतः । तेन ग्रैवाब्रह्मरन्ध्रिकः, आनुशीर्षाधरन्ब्रह्मरन्ध्रिकः, आनुशीर्षोत्तरचिबुकिकः पार्श्वकपालिकश्चेत्येते व्यासाः परिक्षीयन्ते परिवर्धेते चानुशीर्षनासामूलिक आनुशीर्षचिबुकिकश्च व्यासौ । अधिशिरश्च मुखस्य कोमलत्वात् प्रसवस्य च विलम्बितत्वा-त्स्फुटतरमभिनिर्वर्त्तते विरूपयति च सविशेषं गर्भमुखाकृतिम् ।

शुभाशुभम्—मातृगर्भयोरुभयस्यापि कृते मुखोदयः कष्टाय स्यात् उपद्रुतप्रसवत्वात्प्रायेण । कालातीतप्रसवः, मूलान्तर्दरणम्, सङ्क्रमणा-भयम्, गर्भापघातः, मूढगर्भतेति च पञ्च प्रसवोपद्रवाः । तत्राङ्गुल्या-कृतिजराय्वोरकालविदरणाद् मुखस्य च चिपिटायतत्वेन दुर्विकासित्वाच्च ग्रीवासरणिः कालेन विकसति, मुखास्थ्नां रूपणाऽसम्भवाद् दीर्घतर-व्यासा योनिमुखं प्रसारयन्ति, प्रसूते शिरसि गर्भाशयशक्तिरपि न यथा-वदुपयुज्यते, हस्तादीनां प्रवेशो योनिं सङ्क्रामति, प्रसवविलम्बः शिर-सोऽतिप्रसरणं मूढभूतस्य यन्त्रादिना हरणं च गर्भमुपहन्ति ।

उपक्रमः—त्रिविधो हि मुखोदयोपक्रमः, उदयपरिवर्त्तनमविधाय तथाभूतस्यैव चिकित्सितम्, काले परिज्ञातस्य शीर्षोदये परिवर्त्तनम् स्थानापवर्त्तनेन वा नितम्बोदये परिवर्त्तनम्, शस्त्रावचारणं चेति । तत्र—

( १ ) यदि सङ्कुचिता श्रोणिर्न स्यात्, न च कष्टप्रसूतेः पूर्ववृत्तम्, नापि च परिवर्त्तनानुगुणः कालः, तथाभूतस्यैव च जन्मेष्टं भवेत्तर्हि वक्ष्य-माणविधिना प्रजायिन्युपक्रान्तव्या । मुखोदयस्य कृच्छ्रतां तदात्मीयेभ्यः सूचयेत् । आदित एव चङ्क्रमणादिकं परिहृत्य शय्यां दापयेत् । जरायु-च्चाकालविदरणात् परिरक्षेत् ।

यस्मिन् पार्श्वे हनुः स्यात्तस्मिन्नेव शयीत, तद्धि हनोः पुरोविवर्त्तने साहाय्यमाचरति । मूत्रपीठं प्रपन्नेऽपि गर्भमुखे हनुश्चेदग्रतो न

विवर्त्तते तदाऽवीकाले ललाटमस्योत्क्षिपेद् येन हनुर्निम्नतरा सती पुरोविवर्त्तेत । अथैवमपि नैव विवर्त्तते चेद् योन्यां हस्तं प्रवेश्य तद्-ङ्गुल्या हनुं गृहीत्वा लघुतममार्गेण तां विवर्त्तेत । सहैव च बाह्यहस्तेन पूर्वांसोऽपि तद्दिशि विवर्त्तनीयः । विवर्त्तनाय सन्दंशप्रयोगं तु भिषजो नैव शंसन्ति गर्भमुखावयवानामभिघातसम्भवात् । अयतो विवृत्तायां विवर्त्तितायां वा हनौ पुनरपि गर्भाशयदौर्बल्येन प्रसवे विलम्बं चेत् पश्येत् सन्दंशेनाहरणं युक्तमेव ।

(२) काले ज्ञातस्य शीर्षोदये परिणमनमेव यद्युचितं पश्येत् तदा निम्नोक्तैर्विधिभिः शिरः सङ्कोचयेत्—

बाह्यविधिः—अस्य साफल्यार्थं शिरसोऽनवग्रहः जरायोरविदारः, औदर्य्यपेशीनाञ्च शैथिल्यं परमावश्यकम् । तत्र पूर्वोक्तौ द्वौ भाग्येन लभ्येते शैथिल्यं तु सम्मूर्च्छनेन सर्वदा सुलभम् । ईषदवनतशिरसि शयने उत्तानं शयानायाः स्त्रियाः पार्श्वे तत्पादाभिमुखमुपविश्य एकेन पाणिना गर्भमपूर्वांसेऽपरेण च नितम्बस्याधः पृष्ठदेशे गृहीत्वाऽऽ-वीनां विरतिकाले श्रोण्या बहिर्गर्भाशयस्कन्धं प्रति कर्षेत् । एतेन गर्भशिरः सङ्कोचप्रनारयोर्मध्यावस्थामापद्यते । ततः, पाणिना पूर्वांसधृतेन वक्षःस्थलं पृष्ठाभिमुखं पृष्ठधृतेन च नितम्बदेशमुदराभिमुखं पीडयेत् । एवं हि शिरोऽस्य सङ्कुच्य शीर्षोदये परिणमते । अन्ते च नितम्बस्थेन हस्तेन गर्भोऽधस्तात्प्रपीडनीयो मध्यशीर्षस्य श्रोणौ प्रवेशाय । यावच्च शिरस्तत्र न स्थिरीभवति तावद्धस्तेन दृढोदरबन्धेन वा तत्स्थिरीकरणमावश्यकम् । अन्यथा पुनरपि मुखोदयः प्रसज्येत । गर्भाशयमुखं सुविकसितं चेद्-भिन्नमपि जरायुं स्वयं दारयेत्, येन शीघ्रमेव गर्भशिरः स्थिरीभवेत् ।

अन्यच्च, यदा स्त्रीश्रोणिः प्राकृता स्वल्पं वा सङ्कुचिता स्यात्, गर्भ-शिरश्च मध्यमानं, कालश्चापि योग्यस्तदा व्यवहर्त्तव्योऽयं विधिः ।

---

बाह्यविधिः—External manipulation. (Schatz methods).

संयुक्तविधिः—सोऽयं विधिर्यदा बाह्यविधिर्न सिध्यति, गर्भाशयमुखं विकसितं भवति, शिरश्च श्रोण्यां नातिगभीरं प्रविष्टं, मातृगर्भयोर्व्यापत्तिभयान्मद्यः क्रिया चापेक्षते तदा, क्रियं सम्मूर्च्छयित्व च समाश्रयणीयः । तत्र—

( क ) द्व्यङ्गुलं विकसिते गर्भाशयमुखे उत्तानं शयानाया यस्मिन् पार्श्वे हनुः स्यात् तत्पार्श्ववर्त्तिनं करं योनौ प्रणिधाय गर्भाशये चाङ्गुली प्रवेश्य ताभ्यामस्य पुराधरहनुं तत उत्तरहनुं तदनु च ललाटमूर्ध्व पीडयेन,

[ ८० चित्रम् ]

मुखोदयोपक्रमः ।



संयुक्तविधिना मुखोदयः शीर्षोदये परिवर्त्यते ।

सहैव च बाह्येन उदरस्थेन पाणिनाऽनुशीर्षं पीडयेदधस्तात् । परिचारकश्च बाह्यविधिरिव गर्भस्य वक्षोदेशं पृष्ठं प्रति, नितम्बदेशाच्च तद्विपरीतत उदरं प्रति बाह्यतः पीडयन् साहाय्यमाचरेत् ।

---

संयुक्तविधिः Combined manipulation.

( क ) The Baudelocque –Schatz method.

यदा तु गर्भाशयमुखं सुविकसितं स्यात् तदा समग्रमेव करं गर्भाशये प्रवेश्य मुखं गृहीत्वा प्राक् श्रोणिकण्ठाद्बहिरुत्क्षिपेत् तदनु च विधिनोक्तेन शिरो नमयेत् । तदिदमुत्क्षेपणमवगृहीते शिरसि विशेषेणावश्यकं भवति ।

( ख ) किं वा सुविकसिते गर्भाशयमुखे स्त्रियं सम्मूर्च्छ्य उत्तानं शयानाया यस्मिन् पार्श्वेऽनुशीर्षं स्यात् तत्पार्श्ववर्त्तिनमेव समग्रं करं गर्भाशयेऽनुशीर्षस्योपरि प्रवेश्य शिरो गृहीत्वाऽनुशीर्षं निम्नतोऽपकर्षेन, सहैव च बहिःस्थितेन पाणिनोरःस्थलमस्योर्ध्वं पृष्ठं प्रति पीडयेत् ।

यथा च शिरसोऽपूर्णावनत्या ललाटोदये परिणतिर्न स्यादेवं यतनीयम् । ललाटोदयो हि मुखोदयादपि कृच्छ्रसाध्यो भवति । अनयैव भीत्या मुखोदयस्य शीर्षोदये परिणतिं नातिप्रशंसन्ति भिषजः ।

अथैवमपि न चेच्छिरः संकुचति, सङ्कुचितमपि वा पुनः प्रसरति, शिरश्च श्रोणिकण्ठेऽनवगृहीतम्, असङ्कुचिता मन्दं वा सङ्कुचिता स्त्रीश्रोणिः स्वतो निष्क्रमणाच्चासम्भवं तदा स्थानापवर्त्तनेन नितम्बोदय विधानमपि प्रशस्यते ।

( ३ ) सम्मूढे पश्चिमचिबुकासने तु शल्यकर्मैव परमोपायः । तत्र, जीवति गर्भे सङ्कुचितश्रोणिकाया भगास्थिच्छेदनमुदरविपाटनं वा विधीयते प्रायेण, मृते मृतप्राये वा तु शिरोवेधनम् ।

---

( ख ) The Playfair—partridge Method

स्थानापवर्त्तनम् Podalic Version. भगास्थिच्छेदनम् Pubiotomy.

उदरविपाटनम् Caesarean Section. शिरोवेधनम् Craniotomy.

# षष्ठोऽध्यायः ।

## शिरोऽवतरणे वैकृतोदयाः ( पूर्वतोऽनुवृत्ताः )

### अथातो ललाटोदयविज्ञानीयमध्यायं व्याख्यास्यामः ।

शिरो यदावतरणकाले सङ्कोचप्रसारयोर्मध्यमां स्थितिं भजते तदा ललाटोदयः । दुर्लभप्रायश्चायमुदयः, श्रोणिप्रवेशकाले शिरसः प्रसारेण मुखोदयं सङ्कोचेन शीर्षोदयं वा बहुधा परिणमनात् ।

[ ८१ चित्रम् ]



ललाटोदयः ।

हेतुविज्ञानम्—पूर्वं ये मुखोदयस्य हेतवः सङ्ख्याता ललाटोदयस्यापि त एव हेतवो भवन्ति ।

---

ललाटोदयः Brow presentation

गर्भासनानि—अत्र गर्भशिरः स्वानुशीर्षोत्तरचिबुकिकेन व्यासेन श्रोण्यनुप्रस्थव्यासमेवाधिष्ठाय तदन्तर्विशति । अतो द्वे एव गर्भासने, दक्षिणललाटासनं वामललाटासनं च । बाहुल्यं तु दक्षिणललाटासनस्यैव ।

निर्णयः—तत्रोदरपरीक्षणेन न कश्चन विशेष उपलभ्यते । ग्रैवपरिखानुप्रस्थं तिष्ठति न तिरश्चीना । एकतो हनुरन्यतश्चानुशीर्ष तुल्यसीम्नि वर्त्तेते नोन्नतनम्रम् । अनुशीर्षञ्च शीर्षोदयापेक्षया प्रोन्नतमपि न मुखोदय इवात्युन्नतं भवति । आरब्धेऽपि प्रसवे सुदीर्घव्यासोपस्थानाच्च गर्भशिरः श्रोणिकण्ठेऽवगृह्यते । गर्भपृष्ठञ्च मध्यरेखाया वामतो दक्षिणतो वाऽनुभूयते यथासनम् ।

योनिपरीक्षणकाले च प्रसवादौ शिरसः श्रोणिकण्ठादूर्ध्वमवस्थानेन न तत्प्रत्यङ्गानि सुखेन प्रतीयन्ते । अविदीर्णा जरायुर्गोस्तनाकारेण योनौ प्रलम्बते । ततोऽवाक् प्रतिपन्ने त्वेकतो ब्रह्मरन्ध्रं ललाटं गूढसीमन्तिका प्रतीयन्तेऽन्यतस्तु नेत्रकोटरतोरणिके नेत्रकोटरे गण्डकूटे च । ब्रह्मरन्ध्रललाटमुखानां दिक्परिज्ञानेन च गर्भासनविनिर्णयः । तत्र ललाटं समतलं मुखञ्च विषमतलं ज्ञायते स्पर्शेन । बृहत्तराधिशिरोनिर्माणे तु दुःशकमेव परिज्ञानम् ।

गर्भहृच्छब्दश्च श्रूयते यथासनं मध्यरेखाया वामतो दक्षिणतो वा गर्भपृष्ठस्योपरि कृच्छ्रेण गर्भशरीरस्य गर्भाशयसुमध्येऽवस्थनात् । प्रथमासनापेक्षया द्वितीयासने तु ध्वनिः स्पष्टतरा भवति ।

निष्क्रमणविधिः—श्रोणीशिरसोः प्रमाणं प्राकृतं चेद् गर्भस्य स्वतो निष्क्रमणमसम्भवम् । बृहत्तरशिरोव्यासस्य श्रोणिकण्ठे उपस्थानात् शिरः श्रोण्यां विशत्येव न । यदा तु शिरसो हीनप्रमाणत्वात्, श्रोण्या वा विशदत्वात्, शिरसोऽतिरूपणाद्वा श्रोणिकण्ठमतिक्रामति गर्भशिरस्तदा चतुर्धा तत्परिणतिर्दृष्टा, (१) ललाटोदयरूपेणैव कथञ्चिन्निर्गमः, (२) मुखोदये परिवर्त्तनम् (३) शीर्षोदये परिवर्त्तनम् (४) शिरःसङ्गेन मूढभावश्च । तत्र ललाटोदयरूपेण निर्गच्छति गर्भे ललाटस्य पुरोविवर्त्तनं

भवति तेनोत्तरहनुः सन्धानिकाया अधः प्रपतनं । ततः सङ्कोचगतिना ललाटमध्यशीर्षानुशीर्षाणि क्रमशो बहिर्भवन्ति, मुखञ्चापि सन्धानिका-प्रस्रुतः स्खलन्निर्याति । ततः प्रत्यावर्त्तनं पूर्ववत्कन्धरस्यान्तः पुरोविवर्त्तनेन शिरसो बहिरावर्त्तनञ्च जायते । स्पष्टं च तत् ।

कदाचित्तु मुखं पश्चिमतोऽप्यवृत्तं प्रसवकृच्छ्रतां पुनरपि वर्धयति । असम्भवमेव तदा गर्भजन्म । लघुकोमले तु शिरसि कदाचित् प्रसरण-क्रियया नासामुखचिवुकानि क्रमेण मूलपीठादूर्ध्वाद्बहिर्भवन्ति, परिस्खलतश्च ततो मध्यशीर्षानुशीर्षे अपि सन्धानिकाप्रस्रुतः ।

उपद्रवाः—मुखोदये य उपद्रवाः सम्भावितास्तानत्रापि जानीयात् । प्रसवातिविलम्बेन गर्भाशयविदारभीतिश्च ।

शिरोरूपणम्—ललाटोदये भृशं पीडितस्य शिरस एते व्यासाः परी-क्षीयन्त आनुशीर्षाधरब्रह्मरन्ध्रिक आनुशीर्षोत्तरचिवुकिकः पार्श्व-कपालिकश्च, आनुशीर्षनासामूलिक आनुशीर्षचिवुकिक आनुशीर्षा-धरललाटिकश्च तन्निष्कृतिकरा वर्धन्ते । तेन ललाटमस्यातीवोन्नतं भवति करोटिपटलञ्चावनतम् । अधिशिरश्च बृहत्तरं ललाटस्योपरिष्टा-न्निर्वर्त्तते ।

उपक्रमः—यथावस्थं व्यवहर्त्तव्यम् , तत्र—

(१) अनवगृहीते शिरसि—ललाटोदयं ज्ञात्वा न तथैव त्यजेत् । अवश्यमेव शीर्षोदये मुखोदये नितम्बोदये वा परिवर्त्तनीयः । तत्र शीर्षोदये परिवर्त्तनाय मुखोदयचिकित्सिते व्याख्यातेन बाह्येन विधिना यत्नोऽनुष्ठेयः, तदसाफल्ये तु संयुक्तेन । एवमप्यशक्ये नातिसंकु-चिता श्रोणिश्चेत् स्थानापवर्त्तनेन नितम्बोदयं विधाय पादैकमाकर्षेत् ।

(२) सद्योऽवगृहीतेऽपि शिरसि उदयान्तरकरणाय प्रयत्यते पूर्व-वत् । तत्र शीर्षोदयस्य श्रेष्ठतरत्वेऽपि मुखोदय एव कालेऽस्मिन् सुप्र-साध्यो भवति । तदर्थञ्च प्रत्याक्रीकाले ब्रह्मरन्ध्रदेशो योनिगताङ्गुलीभिः

पृष्ठाभिमुखमूर्ध्वमुन्नेयः, बहिरुदरभित्तिस्थेन च पाणिना चिबुकं नीचैः कर्पणीयम् ।

(३)गभीरं प्रविष्टे शिरसि—पूर्वोक्तोपक्रमाणामसाफल्येऽपि न भग्नाशः स्यात् । यस्मिन् पार्श्वे मुखं स्यात्तस्मिन्नेव शयानायाः पुरोविवर्त्तनाय यथोचितकालं प्रतीक्षणीयम् । प्रकृतिर्यथा दुरवस्थितमपि सङ्क्रमयति न तथा वयम् । यदि चेत्ततोऽपि शिरो नाग्रे सरति, आवीभिस्त्वर्यते विलम्बातिशयेन गर्भाशयविदारभीतिश्च तदा सन्दंशेनैनं निहरेत् । केचित्तु सन्दंशप्रयोगं नाभिशंसन्ति । अपवृत्ते तु मुखे तत्प्रयोगो व्यर्थ एव । सङ्कुचितश्रोणिकाया उदरविपाटनं भगास्थिच्छेदनं वा क्रियते, अशक्ये शिरोवेधनमपि । मृते तु गर्भे शिरोवेधनमेव कार्यम् ।

# सप्तमोऽध्यायः ।

## वैकृतोदयाः ( पूर्वतोऽनुवृत्ताः ) अवतरणमपि वैकृतम् ।

### श्रोण्यवतरणम् ।

अथातो नितम्बोदयविज्ञानीयमध्यायं व्याख्यास्यामः ।

नितम्बोदयो नाम स्फिक्पूर्वा गर्भनिष्क्रान्तिः । अधःशाखयोरवस्थान-विशेषात् स चतुर्धा भिद्यते स्फिक्पादोदयः, स्फिगुदयः, पादोदयः, जानूदयश्चेति । तत्राद्यः पूर्णनितम्बोदयः, शेषाश्चापूर्णनितम्बोदयाः ।

पूर्णनितम्बोदयः—अत्र गर्भाङ्गसंस्थितिः प्राकृता तिष्ठति । अधःशाखे वङ्क्षणसन्धौ जानुसन्धावुभयत्रापि सङ्कुच्य वर्तेते । श्रोणिकण्ठे स्थितौ स्फिचौ तदासन्नौ पादौ च सहैव श्रोणिगुहामुत्तरन्ति । अत एवास्य स्फिक्पादोदय इति संज्ञानम् ।

अपूर्णनितम्बोदयः—अत्राधःशाखयोरङ्गसंस्थितिर्विकृता भवति । यदोरुद्वयं ( वङ्क्षणसन्धौ ) सङ्कुचितं जङ्घाद्वयं च ( जानुसन्धौ ) प्रसृतं स्यात्तदा केवलं स्फिचोः प्राक् प्रतिपत्तेः स्फिगुदयः । यदा तु जङ्घोरुयुगलमेकशो द्विशो वा पूर्णतः ( जानुवङ्क्षणसन्धिषु ) प्रसरेत्तदा पादस्य पादयोर्वा प्रतिपत्तेः पादोदयः । एवं यदा जङ्घाद्वयं जानुसन्धौ) सङ्कुचितं भवेत्, ऊरुद्वयं वा च ( वङ्क्षणसन्धौ ) प्रसृतं तदा

---

श्रोण्यवतरणम् Pelvic presentation. नितम्बोदयः Breech presentation. पूर्णनितम्बोदयः Complete pelvic presentation. स्फिक्पादोदयः Full breech presentation. अपूर्णनितम्बोदयः Incomplete pelvic presentation स्फिगुदयः Frank breech presentation.

जानुनो जानुनोर्वा प्रतिपत्तौ जानूदयः । कदाचित्तु मिश्रप्रतिपत्तौ जानुपादोदयोऽपि सम्भवति ।

हेतुविज्ञानम्—तत्र ये ये भावा गर्भस्य गर्भाशयस्य वाकृतिं बलं च विकुर्वन्ति ते सर्वे ओणयवतरणस्य हेतवो भवन्ति। गर्भस्य तिर्यग्भावेनावस्थितिस्तु जानूदयस्य पादोदयस्य वा मुख्यो हेतुः । ते च पुनः—

(१) बहुप्रजातानां गुरु-शिथिलो गर्भाशयः, गर्भोदकवृद्ध्या यमलगर्भेण वाऽतिविस्फारितो गर्भाशयः, विरूपो गर्भाशयः, वक्रीभूतो गर्भाशयः, गर्भाशयार्बुदाः, सङ्कुचिता श्रोणिः, द्वारस्थाऽपरा च ।

(२) बृहत्प्रमाणं शिरः, अपुष्टः, शुष्कः, मृतः, यमलः, अद्भुतः, विकृताङ्गश्च गर्भः ।

गर्भासनानि—अत्रापि पूर्ववच्चत्वारि गर्भासनानि भवन्ति, मातुरुदरे गर्भपृष्ठस्य वामपूर्वादिखण्डचतुष्टयान्यतरस्मिन्नवस्थानात् । नामनिर्देशस्तु त्रिकमधिकृत्य क्रियते, तद्यथा—

(१) वामपूर्वत्रिकासनम्—अत्र मातुः पृष्ठाभिमुखस्योर्ध्वशिरसो गर्भस्य त्रिकं वामश्रोणिगवाक्षं, नितम्बान्तरालपरिखा दक्षिणतिर्यग्व्यासं, शिखरकान्तरालीयो व्यासश्च वामतिर्यग्व्यासमधिश्रित्य वर्त्तन्ते । अस्यैव च बाहुल्येनोपलब्धिः ।

(२) दक्षिणपूर्वत्रिकासनम्—सर्वं सुगमम् । वामदक्षिणपदयोर्विपर्यासं विधाय पूर्ववत् पठनीयम् ।

(३) दक्षिणपश्चिमत्रिकासनम्—अत्र तु मातुरुदराभिमुखस्य गर्भस्य त्रिकं दक्षिणत्रिकजघनसन्धानं, नितम्बान्तरालपरिखा दक्षिणतिर्यग्व्यासं, शिखरकान्तरालीयो व्यासश्च वामतिर्यग्व्यासमधिकृत्य तिष्ठन्ति ।

---

पादोदयः Foot or footling presentation जानूदयः Knee presentation, जानुपादोदयः Knee & foot presentation
(1) Left Sacro-anterior (L S A) (2) Right Sacro-anterior (R S A) (3) Right Sacro-Posterior (R S P)

४) वामपश्चिमत्रिकासनम् अत्र तृतीयासनेन तुल्यम्, वाम दक्षिणपदयोर्विपर्य्ययमात्रं तु भेदः ।

[ ८३ चित्रम् ]

श्रोण्यवतरणे गर्भासनानि।



II  I  III  IV

१. वामपूर्वत्रिकासनम् ।  २. दक्षिणपूर्वत्रिकासनम् ।
३. दक्षिणपश्चिमत्रिकासनम् ।  ४. वामपश्चिमत्रिकासनम् ।

निर्णयः—तत्रोदरपरीक्षणेन गर्भाशयस्योत्तरभागे प्रतीयते समवृत्तं कठिनं बहुचेष्टं ग्रैवपरिखोपलक्षितं च शिरः; मध्यभागे एकतः पृष्ठम् अन्यतश्च हस्तपादम्, अधरभागे तु बृहत्तरो नितम्बः शिरोविपरीतलक्षणः । श्रोणिकण्ठातिक्रमणे तु नैव नितम्बप्रतीतिः । शीर्षोदयापेक्षया चात्र गर्भाशय-

(4) Left Sacro posterior (L.S.P)

स्योत्तरभागो ( अधःशाखे प्रसूते न चेत् ) लघुतरः, अधरभागश्च बृहत्तरो भवति ।

योनिपरीक्षया तु—प्राग् अत्यूर्ध्वमवस्थानाञ्चितम्बस्य दुष्प्राप्यत्वेऽपि यथैव सोऽर्वाक् प्रतिपद्यते तथैव तद्विशेषाः परिज्ञेयाः, अनुत्रिकास्थ, कुकुन्दरपिण्ड, गुदविवरम्, बाह्यजननाङ्गानि चेति । मुखादस्य व्यावृत्तिस्तु पूर्वं दर्शिता । अथ चेत् कापि शाखा तदवयवो वा योनौ अग्रागत उपलभ्यते तदा का नाम सा शाखा ? दक्षिणा वामा वा ? कश्चाय मवयव ? इति सर्वं सम्यग् निर्णेयम् । जानु कूर्परात्, पादः करात्, वङ्क्षणदेशश्च कक्षादेशाद् व्यावर्त्तनीयः । तत्र जानु बृहत्तरं वृत्ततरं प्रसारणशीलेन ( प्रसृते जानुनि न तु सङ्कुचिते स्थिरीभूतत्वात्तदा तस्य ) जानुकपालेन, जङ्घास्थिकूटेन जानुकपालबन्धन्या स्नाय्वा चोपलक्ष्यते, पादश्च दीर्घतरः पार्ष्ण्या समक्षुद्रसरलाङ्गुलीभिः पादाङ्गुष्ठेन च । पादाङ्गुष्ठो हि कराङ्गुष्ठ इवापकृष्टो नाङ्गुलिभ्यो दूरं वियुज्यते न चाप्याकृष्टमूलस्तद्वत् संयुज्यते कनिष्ठामूलेन । वङ्क्षणदेशः पर्शुकाभी रहितो भवति न कक्षादेशः । कक्षाभावज्ञानेन नितम्बः स्कन्धादपि व्यावर्त्त्यते । स्फिगुदये पृष्ठवंशनमनाद् गर्भाशयमुखोपस्थितं त्रिक कदाचित् शिर इव प्रत्ययमावहेत् किन्तु त्रिककण्टकानामुपस्थित्या सीमन्त-रन्ध्र-कशानाञ्चाभावेन तद्भ्रमो निरस्तो भवति । त्रिकोपस्थयोर्दिक्परि-ज्ञानेन च गर्भासनमपि निर्णेतुं शक्यते ।

हृच्छब्दश्च—यथापूर्वं मध्यरेखाया वामतो दक्षिणतो वाऽनुभूयते नितम्बस्य श्रोणिनिमज्जनात्पूर्वं नाभेरुपरिष्टात्, परश्च तदधस्ताद् इति ।

रश्मिचित्रपरीक्षणम् पञ्चमासात्परं सन्देहस्थले 'क्ष'रश्मिचित्रदर्शने-न सुकरो निर्णयः ।

निष्क्रमणविधिः—तत्रायं विशेषः—शिरोवतरणे सङ्कोचप्रसारौ नाम ये द्वे आरम्भिके गती, श्रोण्यवतरणे तयोः सर्वथैवाभावः, अनावश्य-कत्वात् । ते ह्यस्थिरं शिरः पृष्ठवंशे स्थिरीकृत्य मुहूर्त्तं दण्डवत्तदेकभावं

नयतः । इह तु नितम्बस्य पृष्ठवशेन स्थिरानुबन्धत्वात् सिद्धैव स्कन्धता । यस्तूत्तरकालीनो वक्रजननपथमनुकूलयितुं सङ्कोचः प्रमाणे वा भवति तदर्थमिह मध्यगात्रस्य पार्श्वावनमनं नाम गतिविशेषो गन्तव्यः । एवञ्चात्र अवतरणम्, अन्तरावर्त्तनम्, पार्श्वावनमनम्, बहिरावर्त्तन-ञ्चेति चतस्रो गतयः फलिताः ।

[ ८४ चित्रम् ]

श्रोण्यवतरणम् ।



गर्भश्रोणिः स्त्रीश्रोण्या उत्तरभागतोऽधोऽवतरति ।

अवतरणम्—गर्भाशयबलेनाधः प्रणुद्यमानस्य गर्भस्य नितम्बदेशः श्रोण्यामवतरति । तत्र यदि स्फिक्पादोदयस्तदा सङ्कुचिताध्यधः शाखा निपीडनबलात् पुनरतिशयं सङ्कुच्य गात्रेण सह भृशं संसज्यते । कदाचित् पादयोः श्रोणिकण्ठेन निग्रहात् स्फिगुदये परिणतिर्दृष्टा । अवतीर्णस्य च पूर्वो नितम्बः पश्चिमापेक्षया नीचैर्गच्छति ।

पार्श्वावनमनम् Lateral Flexion of the breech on the trunk.

अन्तरावर्त्तनम् – अनेन पूर्वो नितम्बः (नतु त्रिकम्) पुरतो विवृत्य भगसन्धानिकाया अधः प्रपद्यते । शिखरकान्तरालीयश्च व्यासस्तिर्य-व्व्यासात् श्रोण्या अनुदैर्घ्यव्यासं समायाति । पूर्वनितम्बस्यैव सर्वदा पुरतो विवर्त्तनात् चतुर्ष्वपि गर्भासनेषु ह्रस्वमेवान्तरावर्त्तनमिति विशेषस्स्मर्त्तव्यः ।

[ ८५ चित्रम ]

श्रोण्यवतरणम् ।



अन्तरावर्त्तनेन पूर्वो नितम्बः पुरतो विवर्त्तते । ( शरस्तु मिथ्यादिशि प्रयुक्तो व्यावृत्य शोधनीयः )

पार्श्वावनमनम —जननपथवक्रतामनुकूलयितुं गात्रस्य प्रबलं पार्श्वा-वनमनं जायते । तत्र सामान्यतः पूर्वो नितम्बः सन्धानिकातलादवस्रस्य योनिमुखात्प्रथममाविर्भवति, पश्चिमस्तु मूलपीठमुत्तरन् ततः परम् । यदा तु मूलपीठं दीर्णद्वारं शिथिलं वा भवेत् तदा पश्चिमनितम्बस्याग्रनिर्गतिः क्षुद्रमाने गर्भे नितम्बद्वयस्य सहनिर्गतिर्वापि दृष्टा । स्फिक्पादोदये पादा-वपि नितम्बदेशेन सार्धमेव निर्गच्छतः ।

बहिरावर्त्तनम् –ततो निर्मुक्तस्य नितम्बदेशस्य गात्रप्रत्युद्वलनेन प्रत्यावर्त्तनात् शिखरकान्तरालीयो व्यास एकवारं पुनः स्वस्थितिं

( तिर्यग्व्यासस्थितिं ) लभते, अन्येव च पूर्वस्कन्धस्यान्तरावर्त्तनेन यथैव नितम्बदेशस्ततसाधं बहिरावर्त्तते तथैव स भूयः परावर्त्तनेऽनुदैर्घ्यव्यास एव । गतिश्चैषा शिरोवतरण इव न स्पष्टा भवति, मुखं बहिरावर्त्तनमपि च प्रत्यावर्त्तनाद् विपरीतमेव जायते ।

[ ८६ चित्र ]
श्रोण्यवतरणम् ।



पूर्वतो विवृता गर्भश्रोणिः पार्श्वावनमनेन मूलाधारपीठमुत्तरन् ।

**गात्र-शिरोनिर्गमः**—आगते नितम्बे शेषगात्रमपि क्रमेण निर्याति । पादौ नितम्बेन हस्तौ च वक्षसा सार्धं निर्गच्छतः । तत्र स्कन्धयोरंसकूटान्तरालीयो व्यासः शिखरकान्तरालीयव्यासेनाधिष्ठितं समान एव तिर्यग्व्यासे भूत्वाऽवतरति, यथैव च स्कन्धौ निर्गमद्वारे प्रपद्येते तथैव पूर्वांसस्य पुरोविवर्त्तनात् स श्रोण्या अनुदैर्घ्यव्यासे समायाति । ततो गर्भाशयबलेन सङ्कुचितं हि शिरः स्वानुदैर्घ्यव्यासैः स्कन्धाद्विपरीतं तिर्यग्व्यासमधिकृत्य श्रोणौ विशति । तलभूमिं स्पृष्ट्वाऽनुशीर्षं पुरतो विवर्त्तते ।

घाटा च सन्धानिकातलं प्रपद्यते । तदनु शिरसो जन्म । तत्र पुरा हनुमुख-ललाटमध्यशीर्षाणि क्रमेण बहिर्भवन्ति, अनुशीर्षञ्च सर्वेषामन्ते ।

अत्रेदं स्मर्त्तव्यम्—श्रोणौ संविष्टं शिर उत्तरगर्भशय्यां परित्यजति, अतो न तत्सङ्कोचबलं तस्मिन् क्रियाकरम्, केवलं प्रवाहणबलेनैव ( श्रोणितलभूमिबलेन औदर्य्यपेशीबलेन च ) तन्निष्कास्यते । तत्तु बलं न सर्वदा कर्मणि समर्थं भवतीत्यविश्वासभूमिरेव । विलम्बाच्च गर्भो-पघातभयम् । अत एव नितम्बोदयेऽन्वागच्छतः शिरसो जन्मनि भिषजा-न्वर्ष्यते ।

अथ सामान्यत उक्तं निष्क्रमणविधिं तत्तदासनेषु विशदीकृत्य वक्ष्यामः—

प्रथमासनम्—अत्र गर्भश्रोणिः स्वशिखरकान्तरालीयव्यासेन स्त्री-श्रोण्या वामतिर्य्यग्व्यासमधिष्ठाय वस्तिगुहायामवतरति । ततस्तल-भूमिस्पर्शनादन्तरावर्त्तनम्, तेन पूर्वनितम्बो वामतिर्य्यग्व्यासस्याग्रिम-प्रान्तात् पुरतो विवृत्य सन्धानिकाया अधः संविशति, शिखरकान्त-रालीयश्च व्यासः श्रोण्या अनुदैर्घ्यव्यासं प्रपद्यते । तदनु गात्रस्य स्ववामपार्श्वेऽवनमनम्, नितम्बजन्म च । ततः प्रत्यावर्त्तनम्, तेन शिखर-कान्तरालीयव्यासः पुनः पूर्वस्थितिं लभते । अथ मध्यकायप्रवृत्तिः । तत्र पूर्वस्कन्धस्यान्तरावर्त्तनादंसकूटान्तरालीयो व्यासो वामतिर्य्यग्व्यासं परित्यज्य निर्गमद्वारस्यानुदैर्घ्यव्यासमाश्रयते, तद्वच्च शिखरकान्तराली-योऽपि, नितम्बदेशस्य तस्याधमेव समदिशि बहिरावर्त्तनात् । ततोऽस्य शिरः स्वानुदीर्घिकव्यासेन श्रोणिकण्ठस्य दक्षिणतिर्य्यग्व्यासमा-श्रित्य श्रोणौ विशति । तलभूमिस्पर्शाच्चानुशीर्षं दक्षिणतिर्य्यग्व्यासस्य पूर्वप्रान्तात् पुरतो विवृत्य सन्धानिकाया अधः स्थिरीभवति । स्थिरी-भूतञ्च तत् कीलमिवाश्रित्य चक्रगतिना विवर्त्तमानं गर्भशिरो निर्याति ।

द्वितीयासनम्—सर्वं प्रथमासनेन तुल्यम् । केवलं वामदक्षिण-पदयोर्व्यत्यासं विधाय पठनीयम् ।

तृतीयासनम्—अत्र शिखरकान्तरालीयो व्यासो वामतिर्यग्व्यासमधिष्ठाय श्रोणिकण्ठेऽवतरति। पूर्वनितम्बश्च तथैवान्तरावर्त्तमानस्तद्व्यासाग्रकोटितः पुरतो विवृत्य सन्धानिकाया अधः प्रपद्यते। ततो गात्रस्य स्वदक्षिणपार्श्वेऽवनमनाद् नितम्बजन्म। प्रत्यावर्त्तनन्त्विह बहुधा पूर्वतो विपरीतं दृश्यते। अर्थात् प्रथमद्वितीयासनयोः पूर्वनितम्बोऽन्तरावर्त्तनाद् यस्य तिर्यग्व्यासस्य पूर्वकोटिं त्यक्त्वा पुरोविवर्त्तते, बहिरागत्य प्रत्यावर्त्तमानः स पुनस्तामेव कोटिं संश्रयते। इह तु न तथा प्रतिनिवर्त्तते त्यक्तपूर्वां कोटिम्, किन्तर्हि परपार्श्वे विवर्त्तमानस्ततो विपरीतामेव तिर्यग्व्यासाग्रकोटिं भजते। एवञ्चात्र सन्धानिकातलान्निर्गतः, पूर्वनितम्बो मातुर्वामतो विवर्त्तते दक्षिणतिर्यग्व्यासस्य पूर्वकोटौ। मातृपृष्ठवंशेनात्मानं सङ्गमयितुम् अवसरे कृतो गर्भगात्रप्रयत्नश्चात्र हेतुः। फलतश्चास्य स्कन्धौ श्रोणिकण्ठस्य दक्षिणतिर्यग्व्यासमधिकृत्य श्रोणीं विशतः, पूर्वस्कन्धश्च तदग्रकोटितः पुरतोऽन्तरावृत्य सन्धानिकाया अधो विश्राम्यति। ततोऽस्य शिरः स्वानुदैर्घ्यव्यासेन वामतिर्यग्व्यासमधिकृत्य श्रोणिपथमुत्तरति, अनुशीर्षञ्च श्रोणितलस्पृष्टं वामतिर्यग्व्यासस्य पूर्वप्रान्तात् प्रचल्य पुरतो विवर्त्तते सन्धानिकाया अधः। स्कन्धान्तरावर्त्तनकाले शिरोऽन्तरावर्त्तनकाले वा निर्गतं गात्रमपि बहिरावर्त्तते स्तोकेन। ततश्चक्रगतिना शिरोजन्म तु प्राग्वदेव।

कदाचित्तु नितम्बः पूर्ववत् स्वाभाविकदिशि प्रत्यावर्त्तते। तदा स्कन्धौ वामतिर्यग्व्यासं शिरश्च पश्चिमानुशीर्षं स्वानुदैर्घ्यव्यासेन दक्षिणतिर्यग्व्यासमाश्रित्य श्रोणयामवतरन्ति। अत्रानुशीर्षं दक्षिणतिर्यग्व्यासस्य पश्चिमप्रान्तात् पुरतः प्रचलितं चक्राष्टत्रिभागं दीर्घमन्तरावर्त्तते इति विशेषः। शेषं स्पष्टम्।

चतुर्थासनम्—सर्वं तृतीयासनमिवैव। वामदक्षिणपदयोर्विपर्य्ययं विधाय पठनीयम्। अन्यश्चापि विशेषो वक्तव्यः—"कदाचित्तु नितम्बः पूर्ववत् स्वाभाविकदिशि प्रत्यावर्त्तते। तदा स्कन्धौ दक्षिणतिर्यग्व्यासं

शिरश्च पश्चिमानुशीर्षं स्वानुदैर्घ्यव्यासेन वामतिर्यग्व्यासं, वामतोऽनुशीर्षं कृत्वाऽनुप्रस्थव्यासं वाऽऽश्रित्य श्रोण्यामवतरन्ति । अत्रानुशीर्षं वामतिर्यग्व्यासस्य पश्चिमप्रान्ताद् अनुप्रस्थव्यासस्य वा वामप्रान्तात् पुरतः प्रचलितं चक्राष्टत्रिभागं चक्रार्धं वा दीर्घमन्तरावर्तते" इति ।

## श्रोण्यवतरणे वैकृतं निष्क्रमणम् ।

अत्रापि शिरःप्रतीपावर्त्तनमेव मुख्यो विकारः । पादोदयजानूदयरूपा विकृतिस्त्वकिञ्चित्करत्वाच्चिन्त्यैव ।

शिरःप्रतीपावर्त्तनम्—यदा कदा विशेषतस्तु तृतीयचतुर्थासनयोरनुशीर्षं पुरतो न विवृत्य पश्चिमतस्त्रिकोदरेऽपवर्त्तते । पूर्वाभिमुखश्च गर्भो भवति । कदाचित्तु चिबुकस्य सन्धानिकाया उपरि निग्रहात् खसूची वैयाकरण इव ऊर्ध्वमुखोऽपि सञ्जायते । एवम्भूतस्य भिषक्साहाय्यं विना स्वतो निष्क्रमणं तु न कथमपि सम्भाव्यते ।

शिरोरूपणम्—अन्वागच्छतः शिरसो रूपणं मन्दमेव भवति, श्रोणिकृतपीडनाद् द्रुतमेव मुक्तत्वात् । तत्रानुशीर्षनासामूलिक आनुशीर्षचिबुकिकश्च व्यासौ दीर्येते, ग्रैवाब्रह्मरन्ध्रिक आनुशीर्षाधरब्रह्मरन्ध्रिकश्च वर्धेते । पूर्वनितम्बो बहिर्जननाङ्गानि च तत्राधिशिरःस्थानीयशोफस्य भूमयः, वृषणौ तु विशेषेण । कदाचित्तु त्वङ्नीलिम्ना वृषणयोः कृष्णवर्णताऽपि दृष्टा, अचिरेणैव च सा जन्मोत्तरं विलुप्यते ।

शुभाशुभम्—तत्र नितम्बोदये मातुः कृते नास्ति किमपि विशेषभयम् । अधरगर्भशय्यायां गर्भनितम्बस्य दुःस्थितत्वादकाले जरायुभेदः, अक्षुद्रकाये गर्भे दीर्घकालीनः प्रसवः, बलादाहरणे गर्भाशयमुखस्य

---

अधिशिरःस्थानीयः शोफः Representative of the Caput succedaneum. त्वङ्नीलिमा Subcutaneous Ecchymosis.

( अविकसितं चेत् ) योनिमुखस्य ( मूलपीठं न कर्त्तितं चेत् ) वा विदरणम्, हस्तादिसंसर्गात् सङ्क्रमणभयम् इति सामान्योपद्रवास्तु सम्भाव्यन्ते ।

बालास्त्वत्र विशेषतो व्यापद्यन्ते । प्रतिशतं दश विंशतिर्वा मृत्युसङ्ख्या दृष्टा । बलादाहरणेऽस्थिभङ्ग-सन्धिविश्लेष-सिरास्नायुपेशी-नाड्यभिघातादय उपद्रवा अपि सम्भवन्ति । तद्यथा—जघनसङ्गे सक्थि-कर्षणेनोरुभग्नम् अङ्कुशाद्त्वङ्मांसादिघातश्च, अंससङ्गे बाहुकर्षणेन प्रगण्डाक्षकभग्नं कक्षानुगनाडीप्रवेणिकाभिघातश्च, शिरःसङ्गे गात्रादि कर्षणेन पृष्ठवंशाभिघातः सुषुम्नाविदरणं शिरोग्रीवसन्ध्यभिघातो वराशिका-विदरणं मस्तिष्कान्तारक्तस्रुतिः उरःकर्णमूलिकपेश्यन्तः क्षुद्ररक्तप्रणालि-कानां त्रुटनाद् रक्तग्रन्थिश्च, मुखभूमिं धृत्वा कर्षणे तु हनुभग्नं हनुभ्रंशो जिह्वाभिघातश्चेति ।

जन्मकाले गर्भमृत्युहेतवस्त्विमे भवन्ति—

( १ ) अकालान्तःश्वसनम्—नितम्बोदये यदा विलम्बेन गर्भिणी सूते तदाऽपरारक्तसंवहनस्य बाधनाद् नाभिनालस्य वा प्रपीडनाद् आंशिकः प्राणरोधो गर्भस्य जायते । तेन निर्गतशरीरार्धे शीतवायुस्पर्शेन च गर्भः क्षुभ्यति । एवञ्चोभयथैव श्वसनकेन्द्रस्योत्तेजनाद् अनिर्गतशिरा गर्भोऽकाल एव कदाचिदन्तरुच्छ्वसेत् श्लेष्मासृग्गर्भोदकानामन्तःकर्षणेन स्रोतोरोधाच्च म्रियेत ।

( २ ) शिरोऽभिघातः—अप्राप्तावसरतया मन्दं रूपितमेव शिरः श्रोणिगुहातः सहसा विनिर्गच्छदभिहन्यते । दात्रिका जवनिका च कला

---

(१) Premature inspiration. आंशिकः प्राणरोधः Partial asphyxia. (२) Cerebral injury. दात्रिका Falx cerebri. जवनिका Tentoriumn cerebelli.

( विशेषतस्तयोः संयोगस्थलम् ) प्रायस्त्रुट्यति शिरोऽन्तारक्तस्रुतिश्च जायते। सोऽयं प्रधानो हेतुर्नितम्बोदये गर्भमरणस्य।

( ३ ) नाभिनालपीडनम्—नितम्बोदये यदि शिरस्त्वरितं न प्रजायते तर्हि शिरःश्रोण्यस्थ्नोर्मध्ये नाभिनालस्य पीडनाद् गर्भरक्तसंवहनमुपरुध्यते। तेन च प्राणरोधाद् गर्भोपघातः सुनिश्चितः।

( ४ ) अपराया अकालवियुक्तिः—कदाचिद् गर्भाशयं परित्यज्य योनौ विलम्बमाने शिरसि उत्तरगर्भशय्यायाः प्रबलात्मसंहरणाद् अकाल एवापरा वियुज्यते। एवमपि प्राणरोधाद् गर्भमृत्युः।

## अथ प्रतिविधानम्।

द्विधा हि नितम्बोदय उपक्रम्यते स्थानस्यापवर्त्तनेनानपवर्त्तनेन वा यथावस्थम्।

**स्थानापवर्त्तनम्**—तत्र शिशोः कृते शीर्षोदयः शुभंयुर्भवति नितम्बोदयस्तु व्यापत्तिकरत्वादशुभंयुरिति पूर्वमिह दर्शितमेव। तथा च सति सम्भवे नितम्बोदयः शीर्षोदये परिवर्त्तनीयोऽन्यत्र श्रोणिसङ्कोचाद्, अपरापुरःस्थितेः, यमलगर्भाच्च। तत्र तु खलु नितम्बोदय एव हितावहो भवति। किञ्च प्रसवारम्भात् प्रागेव स्थानापवर्त्तनार्थं यतनीयम्। स एव तस्यानुगुणः कालः। तत्र यदि गर्भिण्या एव नितम्बोदयो निर्णीतो भवेच्छ्रोणिसङ्कोचादिकं च न स्यात्तर्हि व्यतीतेऽष्टमे मासि बाह्येन वर्त्तनविधिना स्थानमस्यापवर्त्तयेत्। अफले श्रमे पश्चात्परं पुनर्यतनीयम्। अपवृत्ते तु शिरसि बलाच्छिरः श्रोणौ प्रवेश्य दृढोदरबन्धनेन स्थिरीकुर्यात्,

---

(३) Pressure on the cord. (४) Premature separation of the placenta.

बाह्यो वर्त्तनविधिः External Version.

येन तत्रैव प्रत्यावर्त्तेत। अन्तरान्तरा च स्थितिरस्य निभालनीया। प्रत्यावृत्तं च पुनरपवर्त्तयेत्। प्रजायिन्यास्तु कृतेऽपवर्त्तने स्थिरीकरणाय जरायुरपि विदार्य्यते। अल्पे गर्भोदके प्रसृतजङ्घे गर्भे सङ्कोभूते च जघनं दुःशकं चेदपवर्त्तनम्, उदरभित्तिशैथिल्याय सम्मूर्च्छनं सङ्कविनिवृत्तये चावाक्शिरःशयनमावश्यकम्।

स्थानानपवर्त्तनम्—यदा तु नितम्बोदय एवेष्टः स्याद् व्यर्थी-भवति वा स्थानापवर्त्तनयत्नस्तदा समाहितचेतसा भिषजा प्रतिप्रसवावस्थ-मित्थमुपक्रान्तव्या प्रजायिनी। निपुणं परीक्ष्यतेऽत्र भिषजां चातुरी। इदन्त्ववधेयम्—यदि चेत् स्त्रीरप्रजाता स्याद् गर्भोऽपि महाप्रमाणः प्रसृत-जङ्घश्च तर्हि मूलावदरण-गर्भमरणाभाविवन्ध्यात्वाद्याशङ्कनादुदरविपाटनमेव श्रेयस्करं स्यादिति।

## प्रत्यवस्थमुपक्रमस्त्वयम्—

प्रथमावस्था—अधरगर्भशय्यायां नितम्बदेशेनासम्यक्पूरणात् प्रायोऽत्र जरायुरकाले भिद्यत, इति विदितचरम्। तथा न स्यादित्याद्य उपक्रमः। अन्यथा दुर्विकसितं गर्भाशयमुखं गर्भस्यांसशिरोगतिं बाध-यद् गर्भं घातयति। तस्मादारम्भादेव स्त्री पर्य्यङ्कशायिनी स्याद्, विशेष-तश्च तदा यदा जरायुरावीकाले योनौ दुर्लम्बते। न च सा प्रवाहेत। वस्तिं न ग्राहयेत्। आवीकाले योनिपरीक्षणं तु न जातुचित् कारयेत्। परीक्षणेऽपि यथायं न दीर्य्यते तथाऽऽचरणीयम्।

द्वितीयावस्था—यथैव गर्भस्य नितम्बदेशो योनिमुखं प्रपद्यते तथै-वोत्तानं शयानां स्त्रियं खट्वान्ताहितश्रोणीं[1] स्थापयेद्, येनाग्रे शिरोजन्मनि चिकित्सासौकर्यं स्यात्। त्वरितं विशल्यभावाय चेष्टमानेन तु यथास्य

---

अवाक्शिरःशयनम् Trendelenburg positon.

[1] In Cross bed position.

प्राकृतगतिर्न व्याहन्यते तथा यतनीयम् । अन्यथा फलं विपरीतमेव स्याद्, विलम्बः सङ्गो वा भवेत् । तस्मान्न जातुचिदपि गर्भगात्रमाकर्षेत्, सति प्रयोजने केवलमंसपिण्डिकां पीडयित्वैव गर्भं निर्हरेत् । गात्राकर्षणेन तु गर्भगतिर्व्याहन्यते । भुजौ प्रसृत्य शिरःसङ्गं जनयतः ।

दृष्टे नितम्बे स्फिक्पादोदयश्चेद् योनावङ्गुलीः प्रवेश्य गर्भपादौ धारणीयौ येन न तौ मूलपीठस्योपरि निगूह्य यातान्न च निगूहीताववदारयेतां मूलपीठम् ।

तत आनाभि निःसृते गर्भगात्रे नाभिनालैकदेशमाकृष्य एकतः कुर्यात्, सततं तत्स्पन्दनाऽवबोधेन गर्भस्य प्राणोपरोधभियं च विद्राङ्कुर्वीत । एवं शिथिलीकृता नाभिनाडी नावदर्यतेऽपि । अन्यथा कदाचिद् गर्भगात्रश्रोणिकण्ठयोर्मध्ये पीडनान्निरुद्धप्रसरा गात्रनिर्गत्याऽऽकृष्यमाणा दीर्येत । निर्गतं गर्भगात्रमुष्णेन वाससा पिदध्यादपि, येन शीतवातादिस्पर्शं क्रकचस्पर्शमिव मन्यमानो नोच्छ्वस्यान्ताम्रयेत । न चातः परं किमपि कर्त्तव्यम् । प्रकृत्यैव गर्भमध्यमात्रं बाहू च संश्लिष्टोरसौ निर्यान्ति, शिरश्च श्रोणिकण्ठे प्रविश्य गुहायामवतरति । शिरोजन्मनि तु साहाय्यमपेक्ष्यते प्रायेण । यथा, भिषग् गर्भाशयस्कन्धमधः पीडयेत् स्त्री चैव प्रवाहेत । अत्रोपदिशन्त्येके, शिरोजन्मनि सौकर्य्यार्थं योनिमुखान्निर्गतं गर्भगात्रं शय्यापादत आलम्बनीयम्, येन शरीरभराच्छनैराकृष्यमाणं शिरः सुखेन सङ्कुचितं च बहिः प्रपद्येत इति ।

अथ चेदाकृष्टं नाभिनालं न स्पन्देत, स्कन्धनिर्गमात् प्रागेव वा क्षीणस्पन्दं स्याद्, आशुप्रसवाय प्रयतनमावश्यकम् । तत्रादौ भिषग् गर्भाशयस्कन्धं दृढमधः पीडयेत् । एवं हि गर्भवक्षः संश्लिष्टबाहुकं बहिर्निःसरति, श्रोणिगुहायामवतीर्य वा तिष्ठति तथाभूतम् । तथागतस्य च गात्राकर्षणेऽपि न विशेषहानिः । यदा तु स्कन्धपीडनमात्रेण नार्थसिद्धिस्तदा निषिद्धमपि गात्राकर्षणं विधीयत एव । बाहुभ्यां गर्भगात्रं नितम्बयो-

गृहीत्वा यावच्छक्यं निम्नतः कर्षेत् । पैच्छिल्येन भ्रश्येते चेत्करौ गर्भगात्रं वाससा वेष्टनीयम् । सहायश्चापि गर्भाशयस्कन्धं परिगृह्यावपीडयेद् हस्तानुद्भ्रंशाय तेनैव समम् । ततो योनिपरीक्षया हस्तयोः स्थितिं निद्दीत । अवतीर्णौ चेत् कूर्परकोणेऽङ्गुलिं दत्वाऽकृष्य क्रमश आहरेत् । यदा तु प्रसृत्योर्ध्वं गतौ योन्या न लभ्येते तदा गर्भशिरस आहरणात् प्रागेव तावधः कर्षणीयौ विधिना वक्ष्यमाणेन ।

सम्प्रति शिष्यते शिरस आहरणम् । परमं चरमञ्चैतद् भिषजः कर्त्तव्यम् । यतो गर्भाशयस्य क्षेपणबलं गर्भाशयाद् बहिर्भूते गर्भशिरसि न मूर्च्छति प्रायेण । अशयाद् बहिर्योनौ शिरसोऽवस्थानं तु नाभिनालपीडनाद् अपरान्तर्विमोक्षाद् अकालश्वसनाद्वा हेतोर्गर्भोपघाताय स्यात् । तस्मादंसनगतया सहैव शिरश्चेन्न बहिरायाति विधिविशेषैस्तदाहरणस्य युक्तता स्पष्टैव ।

केचित्त्वाहुः—यदा गर्भो नालास्पन्दाङ्गविक्षेपादिना विपन्न इव लक्ष्येत, आशुप्रसवश्च शक्यो न स्य त्तदा गर्भाशयस्थेऽपि गर्भशिरसि विधिनानेन गर्भो रक्षितुं शक्यः । तद्यथा, बाह्वोराहरणानन्तरं भिषग् हस्तमेकं गर्भस्यानुवक्षोमुखमुपरि नीत्वा, मध्यमाङ्गुलिं नासासितावितराङ्गुलीश्च गण्डोर्ध्वगहन्वस्थिषु धृत्वा, मध्यपर्वणां सङ्कोचेन करतलहृदयं शरावीकृत्य स्थापयेत् । येनापत्यपथस्य मृदुभागा गर्भमुखमण्डलादपसरयुर्वायुश्चान्तः कृष्टो बालमुज्जीवयेत् ।

## अथ शिरोबहिष्करण विधयः

तत्रैकः—(१) यत्र स्त्रिया एकतः स्थितो भिषग् हस्तैकस्य तर्जनीमध्यमाभ्यां बालं ग्रीवामूलेंऽसदृशयोरुपरि बडिशग्राहं गृहीत्वा पुरतो बलात्त-

---

1　Prague's method

द्गात्रमाकर्षति येनास्य शिरः सन्धानिकायाः पश्चिमतः पीडितानुशीर्षं सङ्कुच्य तिष्ठेद्, अपरेण च हस्तेन तत्पादयुगलमवगृह्य मातुरुदराभि-

[ ८७ चित्रम् ]
शिरसो बहिष्करणम् ।



प्रथमो विधिः ।

मुखं पूर्वोर्ध्वतो दोलयति त्वरया येनास्य शिरो मध्यकीलमिव स्थिरीभूतानुशीर्षमाश्रित्य चक्रगतिना सुखं द्रुतं च योनिमुखान्निर्गच्छेत् । सामान्योऽयं विधिः श्रोणिकपाठस्याधो गुहायां स्थित एव शिरसि क्रियाकरो भवति

द्वितीयः—(२) अत्र तु भिषग् गर्भमुखादर्वर्त्तिनं स्वकरं योनौ प्रवेश्य गर्भगात्रञ्चोष्णवाससावृतं प्रकोष्ठपुरस्तल आरोह्य तदङ्गुलिद्वयं ( तर्जनीमध्यमे ) गर्भमुखकुहरस्यान्तर्यथाशक्यं पश्चिमतो जिह्वापृष्ठे निवेशयति येन मुखं सुगृहीतं स्याद् न चाकर्षणकाले हनुभङ्गः प्रसज्येत ।

---

2 Smellie's method.

इतरहस्तस्य च तर्जनीमध्यमाभ्यां ग्रीवावामूलमुभयतः स्कन्धौ गृह्णाति। ततश्च मुखस्थाङ्गुलिनिर्देशेन गर्भशिरसोऽनुदैर्घ्यव्यासं श्रोणयाहितयं-व्यासेऽनुप्रस्थव्यासे वा ( आयतश्रोणीकायाः ) समानीय हनुं नमयति

[ ८८ चित्रम् ]
शिरसो बहिष्करणम् ।



द्वितीयो विधिः ।

येन शिरः सङ्कुचितं स्यात् । सहायश्चापि जठरभित्तिस्थेन पाणिना शिरोऽधः पीडयन् ( ललाटभागं विशेषेण , तत्सङ्कोचे साहाय्यमाचरेत् । अतः परञ्च भिषक् प्रागनुश्रोण्यक्षं निम्नतः पश्चिमतश्च गर्भमाकर्षति येन शिरोऽस्य श्रोणिकण्ठान्निरस्तं स्यात् , ततो निम्नतः, प्राप्ते तु निर्गम-द्वारे शिरोऽनुदैर्घ्यव्यासं तिरश्चीनव्यासतोऽनुप्रस्थव्यासतो वा निर्गमद्वार-स्यानुदैर्घ्यव्यासे कृत्वा गर्भगात्रं पूर्वोर्ध्वतो दोलयति प्राग्वत् । कर्षणं तु स्कन्धयोरेव कार्यं न तु हनौ मुखहन्वभिघातभयात् । प्रबलाकर्षणे तु तत्रापि कक्षानुगनाडीप्रवेश्या विदारभयमस्त्येव । अपर्याप्ते तु तद्बले सहायोऽधिवस्तिदेशपीडनेन शिरोजन्मनि साहाय्यं विदधीत ।

तृतीयः—(१) गर्भो यदि चेन्मृतः पूर्वोक्तविधिभिर्निर्हर्त्तुमशक्यश्च तदा सन्दंशेन गृहीत्वा निष्कासनीयः। यन्त्रन्तु गर्भगात्रं मातुरुदरा-

[ ८६ चित्रम् ]

शिरसो बहिष्करणम्।



तृतीयो विधिः।

भिमुखमूर्ध्वमुन्नीय तस्याधः कृत्वा शिरसि निवेश्यते। मातुः पिच्छिता-भिघातादिभयाच्च शिरोवेधनं विधायैव सन्दंशः प्रयोक्तव्यः।

## अथापद्रवास्तेषां चिकित्सितञ्च।

जघनसङ्गः—अतिकायमाना गर्भश्रोणिः ह्रस्वकायमाना वा स्त्रीश्रोणिः अस्रुतजङ्घः स्फिगुदयो दुर्बला आढ्यश्च जघनसङ्गं जनयन्ति। त्रिविधश्च

(१) By forceps. जघनसङ्गः Impaction of breech.

तत्रोपक्रमः, उदरविपाटनं, जङ्घाकर्षणं जघनकर्षणञ्च । तत्र, अप्रजातासु महाकायमाने वा गर्भे उदरविपाटनं क्रियते । स्फिक्पादोद्गमश्चेद् उत्तान-स्थितां सम्मूर्छ्य, मूलपीठं चैकत उभयतो वा सङ्कुत्य, पादपार्श्वानुकूलञ्च हस्तं योनौ प्रणिधाय, सक्थिगर्भाशययोरन्तराले ऊर्ध्वमुन्नीताभ्यामङ्गुलिभ्यां पादमेकं गर्भस्य धृत्वा बहिः कर्षेद् येन गर्भश्रोण्या आयतनं ह्रस्येत । स्फिगुदये तु यत्र प्रसृतजङ्घयोः कुशावन्धात्वेन मध्यगात्रं दृढीभवति कटिवंशस्य पुरोनमनाच्च गर्भस्य श्रोण्यनुदैर्ध्यव्यासो दीर्घायते जघनं च योनिद्वारमनुप्राप्तमपि सज्जते ( पश्चिमत्रिकासनयोस्तु विशेषेण ), तत्राप्युभयतो मूलपीठं सङ्कुत्य ऊर्ध्वे स्थिते जघने पूर्वस्मिन् सक्थ्नि आजानु हस्तं नीत्वा जानुकपालिकाया अधो जङ्घामवगृह्य जानु सङ्कोचयेद् येन जङ्घाऽस्य जानुनि सङ्कुचिता नीचैरवतरेत् । ततः पादं धृत्वा योनिमुखाद् बहिः कर्षेत् । सर्वञ्चैतद् आवीनामन्तरान्तरा कुर्यात् । आवीकाले तु निश्चेष्टपाणिः स्यात् । अथ निर्गतं पादमस्यावगृह्य नीचैः कर्षेत् । प्राप्ते जानुनि पाणिनाऽन्येन तदूरुमपि धृत्वानुश्रोण्यक्षं कर्षणीयम् । यदा तु पश्चिमो नितम्बः प्रपद्यते तदा निर्गतस्य सक्थ्न उन्नमनं कार्यम् । ततो बहिरागतं गर्भश्रोणिं हस्ताभ्यां गृहीत्वा शेषमपि गात्रभागमाकृष्य निर्हरेद् विधिना निर्दिष्टेन । अथ चेदेवं गर्भश्रोणिर्न निर्याति पुनस्त-दायतनह्रासाय द्वितीयमपि पादं निर्हरेदेवमेव । कर्षेच्च ततः परम् उभौ धृत्वा पूर्ववत् ।

श्रोणिगुहायामधः प्रविष्टे तु गर्भजघनेऽनवकाशतया पादस्याहरण-मशक्यं चेत्पश्येद्, अङ्गुल्याऽङ्गुलिद्वयेन वा (तर्जनीमध्यमाभ्यां) पूर्व-वङ्क्षणाविष्टेन पूर्वं वङ्क्षणदेशं पुरा शनैराकर्षेन्नतु पश्चिमम्; तदाकर्षणे पूर्वो नितम्बः सन्धानिकया उद्गृहीत आबाधकरः स्यात् । ईषदाकृष्टे तु पूर्वे नितम्बे परमपि तथैवाकर्षेत् । एवञ्च पर्यायेण वङ्क्षणद्वय-

---

कुशावन्धाव: splinting action.

माकर्षता गर्भश्रोणिः स्त्रियाः श्रोणितलभूमौ प्रापणीया। तत्र स्थिते च उभयोरपि वङ्क्षणयोः सार्धमेवाङ्गुलिप्रवेशः कर्त्तुं शक्यः। ऊर्वस्थिभग्नसन्धिविश्लेषभिया च सर्वदा वङ्क्षणकोण एव कर्षणं विधेयम्। एवमशक्ये तु प्रबलाकर्षणाय द्विगुणीकृतव्रणवस्त्रपट्टिकापाशेन (अष्टादशप्राङ्गुलदीर्घेण द्विप्राङ्गुलायतेन) पूर्ववङ्क्षणं गृहीत्वा कर्षणीयम्। एतदर्थं कुण्ठितबडिशस्य तु प्रयोगो दृष्टप्रायोऽपि न शस्यते मांससिराद्यभिघातभयात्। एवं सन्दंशप्रयोगोऽपि न बहु मन्यते बहुभिः। यतो मन्दं प्रयुक्तः स्रंसते निगडं पीडितश्च गर्भमभिहन्ति। तस्माद्यदा गर्भो मृतः स्यादन्ये वा कर्षणविधयो विफलाः स्युस्तदैव बडिशसन्दंशयोः प्रयोगो विधेयः।

एवमप्यशक्ये गर्भे व्यापाद्य निर्हरेत्। तीक्ष्णेन बडिशेन घातनकर्त्तर्या वा पूर्ववङ्क्षणे शाखामाच्छिद्य, आच्छिन्नां चापनीय, इतरपादं च दर्शितेन विधिनाऽवतार्य्य गर्भमाहरेत्। किम्वा शीर्षपीडकेन गुदविवराविष्टमध्यफलकेन गर्भश्रोणिं सम्पीड्य निष्कासयेत्।

उद्बाहुता—कदाचिद् गर्भभुजौ स्वस्थानादपसृतावंसकूर्परसन्ध्योः प्रसृत्य शिरसः पार्श्वयोरुद्गमनेनाबाधकरौ स्याताम्। शिरस आहरणात्पूर्वं तयोरधोनयनमावश्यकम्। दुष्करं चैतत्कर्म। अविधिना कृते तु गर्भस्यांसविश्लेषः प्रगण्डाक्षकयोर्भग्नश्च सम्भवति। कदाचित्तु भुज एकः स्कन्धसन्धौ प्रसृतः कूर्परसन्धौ च सङ्कुचितः शिरसः पुरस्तात् पृष्ठतो वापि तिष्ठेत्। स्मर्त्तव्यश्चात्र यत् पूर्वस्थापेक्षयोर्ध्वं स्थितस्यापि त्रिकोदरस्य महावकाशत्वात् पश्चिमस्थस्यैव भुजस्य पूर्वमधोनयनं सुकरम्। अयञ्च तद्विधिः—

---

व्रणवस्त्रपट्टिकापाशः Fillet of gauze कुण्ठितबडिशः Blunt hook. गर्भव्यापादनम् Embryotomy. तीक्ष्णबडिशः Sharp hook घातनकर्त्तरी Embryotomy Scissors. शीर्षपीडकम् Cephalotribe. उद्बाहुता Upward displacement of the arms.

भिषक् स्त्रियाः पुर उपविश्य स्थित्वा वा गर्भगात्रं पाणिनैकेन जङ्घयो-र्गृहीत्वा मातुरुदराभिमुखमुन्नयेद् येन योनौ हस्तप्रणिधाने सौकर्य्यं

[ ९० चित्रम् ]



उद्गतस्य बाहोः प्रतीकारविधिः ।

भवेत् । पश्चिमश्च भुजो नीचैः कृष्टः सुखेन लब्धः स्यात् । ततो गर्भमुख-दिगनुवर्त्तिनं हस्तमपरं योन्यां प्रवेश्य गर्भपृष्ठस्योपरितः पश्चिमांसेऽङ्गुली-र्नीत्वा प्रगण्डनलकमनुवर्त्तमानः कूर्परदेशमभिस्पृशेत् । तत्र पूर्णप्रसृत-श्चेद् गर्भभुजः, स्वाङ्गुलीमुखैः प्रगण्डपूर्वाधोदेशं तथा नमयेद्यथा प्रकोष्ठः सङ्कुचितः स्यात्, सहैव च समग्रं बाहुं मुखोरःपूर्वतः शनैरवतारयेत् ॥ अपूर्णप्रसृतश्चेत्, कूर्परकोणेऽङ्गुल्याङ्गुलिद्वयेन वा धृत्वा वक्षसोऽग्रा-न्नीचैरवतारयेत् ।

अथ शिष्यते पूर्वभुजस्याधोनयनम् । तच्च द्विधा सम्भाव्यते तथास्थितस्याहरणं, गात्रविवर्त्तनेन पश्चाद्गतस्य वाहरणमिति ।

तत्राद्यं सन्धानिकायाः पश्चिमे हीनावकाशतया भुजस्य दुःसरूत्वान्न सुकरम् । न च निर्बाधं द्वितीयमपि, स्थिरीभूते गर्भशिरसि चक्रचतुर्थाद्धिकं गात्रविवर्त्तने शिरोग्रीवसन्धिस्नायूनां विदारभयात् सुषुम्नाकाण्डपीडनाद्गर्भमृत्युभयाच्च । अथ चेद् विदारादिभयात् पूर्वांसस्य लघुविवर्त्तनं वक्षोदिशि क्रियते तदा बाहोः शिरसः पश्चाद् गमनेन पूर्वतोऽपि कृच्छ्रतराऽवस्था प्रसज्येत । विवर्त्तनं लघु वा स्याद् दीर्घं वा स्यात् सर्वदा गर्भपृष्ठदिश्येव विवर्त्तनं श्रेयोवहम् ।

अन्यच्चापि—तृतीयचतुर्थासनयोर्यत्र गर्भपृष्ठं पश्चिमाभिमुखं भवति वक्षोदिशि विवर्त्तनं नावश्यकम्, तदा गात्रस्य चक्रचतुर्थं पृष्ठदिशि लघु निवर्त्तनेनैव पूर्वांसः पश्चिमांसो भवेत् । एवं प्रथमद्वितीयासनयोर्यत्र गर्भपृष्ठं पूर्वाभिमुखं भवति शिरश्च श्रोणिकण्ठादुपरि स्थितमस्थिरं, तत्र चक्रार्धं यावदपि विवर्त्तनेन पूर्वस्थोऽसः पश्चिमस्थः कर्त्तुं शक्यते । किन्तु यदा शिरः स्थिरं स्याद् आसनं च प्रथमं द्वितीयं वा, स्नाय्वाद्यभिघातभयाच्च पृष्ठदिशि दीर्घविवर्त्तनं कर्त्तुमशक्यम्, तत्र वक्ष्यमाणेन विधिना पूर्वबाहोरतथास्थितस्यैवाहरणं श्रेयस्करम् । तृतीयचतुर्थासनयोस्तु स्थिरीभूतेऽपि शिरसि पृष्ठदिशि लघुविवर्त्तनेनैव संसिद्धिः ।

पूर्वबाहोस्तथास्थितस्यैवाहरणे गर्भगात्रं यावच्छक्यं मातुः पृष्ठाभिमुखमवनयेत्, हस्तञ्च गर्भमुखदिगनुकूलं गर्भगात्रभगसन्धानिकयोर्मध्ये यावदूर्ध्वमूर्ध्वं नीत्वा कूर्परमभिस्पृशेत्, प्रकोष्ठं च कूर्परसन्धौ सङ्कोचयन् बाहुं गर्भमुखस्य पुरः कृत्वाऽवतारयेत् ।

भुजस्य ग्रीवायाः पश्चिमतोऽपसरणम्*—कदाचित्तु गर्भस्योद्गता बाहुः

---

* Dorsal displacement of the arm (Nuchal position ).

कूर्परसन्धौ सङ्कुच्य पश्चिमतो ग्रीवाऽनुशीर्षण्याधः प्रपद्यते । महांश्चैष उपद्रवः । तत्र अङ्गुष्ठकरानिर्दिष्टायां दिशि गर्भगात्रविवर्त्तनेन पश्चाद् गता बाहुः शिरसः पार्श्वं प्रपद्यते । तथाप्रपन्नो च पूर्ववद् ( योनितो हस्तेन

[ ९१ चित्रम् ]



ग्रीवायाः पश्चिमतोऽपसृता गर्भबाहुः ।

कूर्परेऽवगृह्य पुरतोऽधस्ताच्चावतार्य ) आहरेत् । संशयश्चात्र, यतोऽनुशीर्षेण प्रपीडितत्वाद् भुजस्यापि सहैव विवर्तनं सम्भाव्यते । तत्र गर्भं रक्षितुकामो बाहुं भङ्क्त्वा छित्वा वा गर्भमाहरेत् ।

### शिरोनिर्गमे विलम्ब हेतवः *

(क) शिरःसङ्गः—तत्र प्रायः शिरसः प्रसरणमेव प्रधानो हेतुः । प्रसरणं च सन्धानिकोत्तरपीडनं विनैव गात्राकर्षणेन बाह्वोः प्रसरणमिव जायते ।

* Causes of delay in Aftercoming Head. (क) Impaction of the Aftercoming Head.

शिरसो बृहत्कायमानता श्रोण्या वा सङ्कीर्णताऽपि शिरः प्रसारयति। पूर्वोक्तैः शिरोबहिष्करणविधिभिश्चात्र प्रतिकुर्वीत ।

(ख) शिरोग्रहः—कदाचिद् गर्भस्य शिरोधराऽऽकुञ्चनवलयेन दुर्विकसितग्रीवामुखेन वा निगृह्यते । विपद्यते च तेन गर्भः । तत्रैनां सम्यग् मूर्च्छयेत्, पेशीनां शैथिल्याय । शिरोदारणं वा कार्यम् । जीवन्त च गर्भे गर्भाशयग्रीवां सङ्कृत्य निहरेत् । कर्म चैतन्मातुर्व्यापत्तिकरमिति तु स्मर्त्तव्यम् ।

(ग) शिरसः प्रतीपावर्त्तनम्—यदा कदा प्रतीपावर्त्तनेन गर्भस्यानुशीर्षं त्रिकोदरे मुखं च सन्धानिकायाः पश्चात् प्रपद्यते । तत्र यथा हनोर्जन्म पूर्वं स्यात्तथा यतनीयम् । पूर्वोक्तः प्रेगभिषजो विधिरत्रापि कार्यकरो भवति । निर्गतगात्रं मातुः पृष्ठाभिमुखमवनमयेदिति तु विशेषः । किं वा विवर्त्तनेनानुशीर्षं पुरस्तादानीय प्रेगा द्विधाभिनिष्कासयेत् ।

---

(ख Gripping of the Head (ग) Malrotation of the Head.

# अष्टमोऽध्यायः ।

वैकृतावतरणोदयाः ( पूर्वतोऽनुवृत्ताः ) ।

पार्श्वावतरणम् ।

## अथातः स्कन्धोदयविज्ञानीयमध्यायं व्याख्यास्यामः ।

पार्श्वावतरणं नाम गर्भाशये परिघवत् तिर्यगनुप्रस्थं वा स्थितस्य गर्भस्य पार्श्वैकदेशेनावतरणम् । तत्रास्य शिर एकस्मिन् जत्रुनोदरे तिष्ठति, श्रोणिदेशश्चान्यस्मिन् मनागूर्ध्वतरं च । स्कन्धश्चात्र प्रायेणो देति । कदाचित् प्रसवारम्भे उरःपार्श्वपृष्ठानां करकूर्परपादानां चान्यत मेनोदीयमानोऽपि परिणतिकाले स्कन्धोदय एव पर्यवस्यति । प्रतिशत-सङ्ख्यामानश्चास्याधप्रतिशतम् ।

[ ६२ चित्रम् ]

पार्श्वावतरणम् ।



अनुप्रस्थमास्थित ऊर्ध्वमुखः परिघः ।

---

पार्श्वावतरणम् Transverse-oblique-shoulder presentation or cross birth.

हेतुः—अत्रापि गर्भगर्भाशययोराकृतिबले विकुर्वाणाः श्रोण्यवतरणोक्ता ( ३३०तमे पृष्ठे ) भावा एव हेतवो भवन्ति ।

[ ९३ चित्रम् ]

पार्श्वावतरणम् ।



तिर्यगास्थितोऽवाङ्मुखः परिघः ।

गर्भासनानि—चत्वारि गर्भासनानि भवन्ति । नामनिर्देशस्तु अंस ( कूट ) पृष्ठमधिकृत्य क्रियते । तद्यथा—

(१) वामपूर्वांसपृष्ठासनम्—अत्र मातुः पृष्ठाभिमुखस्य गर्भस्य शिरो वामजघनोदरं, दक्षिणांसकूटश्च निम्नगो वामं श्रोणिगवाक्षमाश्रित्य वर्त्तते । बाहुल्यदर्शनादेतत्प्रधानम् ।

(२) दक्षिणपूर्वांसपृष्ठासनम्—मातृपृष्ठाभिमुखस्य गर्भस्य शिरो दक्षिणजघनोदरं, वामांसकूटश्च निम्नतो दक्षिणं श्रोणिगवाक्षमधिकृत्य तिष्ठति ।

---

(1) Left Acromio Anterior. (2) Right Acromio Anterior.

(३) दक्षिणपश्चिमांसपृष्ठासनम्—इह मातुः पूर्वाभिमुखस्य गर्भस्य शिरो दक्षिणजघनादूरं, दक्षिणांसकूटश्च निम्नतो दक्षिणगवाक्षमधिशेते ।

[ ६४ चित्रम् ]

पार्श्वावतरणम् ।




स्कन्धोदये गर्भासनचतुष्टयं यथासङ्ख्यमनुदर्शितम् ।

(४) वामपश्चिमांसपृष्ठासनम्—गर्भः पूर्वाभिमुखः । शिरो वामं जघनाद्दूरं, वामांसकूटश्च निम्नतो वामगवाक्षमाश्रयते ।

केचित्तु गर्भपृष्ठस्य पूर्वाभिमुखत्वं पश्चिमाभिमुखत्वं चाधिकृत्य द्वे एव गर्भासने व्याख्यानयन्ति, पूर्वपृष्ठासनम् पश्चिमपृष्ठासनं चेति ।

---

(3) Right Acromio Posterior. (4) Left Acromio Posterior. पूर्वपृष्ठासनम् Dorso—anterior, पश्चिमपृष्ठासनम् Dorso—posterior.

## निर्णयः—

उदरपरीक्षणम्—तत्र दर्शनेन परिघवत् स्थिते गर्भे गर्भाशयोऽधिकमायतः स्तोकमुन्नतश्च लक्ष्यते। स्पर्शनेन च गर्भाशयस्कन्धे प्रतीयते न शिरो नापि नितम्बः (तिर्यक् स्थिते त्वनु)(पार्श्विकप्रदेशयोरन्यतरस्मिन् प्रायेण नितम्बः कदाचिच्च शिरो वाप्यनुभूयते)। तयोः प्रतीतिर्जघनोदरयोर्भवति। एकतोऽस्थिरं गर्भशिरोऽन्यतश्च स्थिरा गर्भश्रोणिः प्रतीयते। उभयोर्मध्ये च गर्भस्य पृष्ठं हस्तपादा वा यथासनमनुभूयन्ते। श्रोणिकण्ठमपि प्रायेण रिक्तं तिष्ठति। आसन्ने स्थितो गर्भस्यांसदेशोऽपि विभावयितुं शक्यः। श्रोणिकण्ठमतिक्रान्ते तु गर्भांसे तदाकृतिविज्ञानं दुःशकम्। शिरस्तु तदापि महाश्रोण्यां स्थितं प्रायेण प्रतीतियोग्यं भवति। परीक्षणं चैतत् प्रसवारम्भात् प्राग् जरायुविदरणात्पूर्वं वा सम्भवति। विदीर्णे तु जरायौ गर्भशरीरे दृढमाश्लिष्टो गर्भाशयः स्पर्शपरीक्षां बाधयति।

योनिपरीक्षणम्—आदौ न किमपि ज्ञापयति, दूरवर्तित्वाद् गर्भाङ्गानाम्। प्रवृत्ते तु प्रसवे गोस्तनवल्लम्बमानं वारिपुटकं तदन्तश्च ष्ठा गर्भबाहुर्नाभिनाडी वाऽवगम्यते। बाहुभ्रंशश्च स्कन्धोदयनिदर्शकः। विदीर्णे जरायौ कतरोऽयं बाहुरिति गर्भेण सह करमेलनेन जानीयात्। वामो वामेन दक्षिणश्च दक्षिणेन यथावन्मिलति। उत्तानितश्च कराङ्गुष्ठेन यतो निर्दिशति तस्यामेव दिशि गर्भशिरः स्यात्, करपृष्ठाभिमुखञ्च गर्भपृष्ठम्। अंसफलकाक्षकपर्शुकानां कक्षादर्य्याश्च स्थितिरपि शिरोदिशं ज्ञापयति। कदाचित्तु विलम्बेन शूनोऽसदेशो नितम्ब इव प्रत्ययमावहन् संशाययति चेतः। पार्श्वावतरणं च श्रोण्यवतरणाच्चिकित्सिते भिद्यते। तस्मात् क्रियं सम्मूर्च्छ्य सुष्ठु च परीक्ष्य निर्णेयम्। अंसनितम्बयोः कक्षावङ्क्षणयोर्जानुकूर्परयोः करपादयोश्च पार्थक्यं पूर्वं (३३२ पृष्ठे) दर्शितम्।

रश्मिचित्रणं त्वत्र विशेषार्थकरम् । श्रवणपरीक्षा तु निर्णयदशा-स्वर्थैव ।

**निष्क्रमणविधिः**—परिघनामाऽयं मूढगर्भः स्वतो निष्क्रान्तुमशक्तः । कदाचिदेव क्रिया महाश्रोणितया स्वस्य च ( मृतोऽपुष्टः शुष्को वा चेत् ) हीनप्रमाणतयाऽवकाशलाभात् त्रिधा निर्गच्छति ।

[ १५ चित्रम् ]

स्कन्धोदयः ।



स्वतोऽनुकूलनम् ।

(१) **स्वतः स्थानापवर्त्तनम्**—कदाचन जरायुविदरणात् प्राग् आवीबलात् स्वाङ्गचेष्टनबलाच्च अपसृतपार्श्वदेशः शिरोऽवतरणं श्रोण्य-वतरणं वा परिणमति ।

(२) **स्वतोऽनुकूलनम्**—कर्हिचिच्च जरायुविदरणादनन्तरमावी-

---

(1) Spontaneous Version or Spontaneous Rectification.

(2) Spontaneous Evolution.

बलाद् वस्तिगुहायां प्रविष्टे गर्भस्कन्धे सामान्यतस्तदनुबन्धी करो योनि-मुखादवस्रंसते। स्कन्धः स्पृष्टतलभूमिरन्तरावृत्तः सन्धानिकाया अधः प्रपद्यते। ग्रीवा च सन्धानिकायाः पश्चादवपीड्यते। शिरस्तु श्रोणि-कण्ठादुपरि स्थितं ग्रीवावंशस्योत्तरपृष्ठवंशस्य च प्रभूतावनमनाद् गात्रेण

[ ९६ चित्रम् ]

स्कन्धोदयः।



स्वतोऽनुकूलनम्।

युज्यते। ततस्तीव्रावीबलेन मूलपीठं विस्तार्य क्रमेण पर्शुकाः श्रोणिः सक्थिनी च बहिरायान्ति। तदनु प्रपद्यते पश्चिमः स्कन्धो बाहुः शिरश्च। तीव्रपीडनावनमनाभ्यां च प्रायोऽत्र गर्भो विपद्यते।

(३) जटिलनिर्गतिः—कदाचित्तु स्वतोनुकूलनवत् प्रवृत्ते गर्भनिर्गमे शिरोऽपि गात्रेण सह बलाद् वस्तिगुहायां निक्षिप्यते बहिष्क्रियते च द्विगुणीभूत एव गर्भो योनिमुखात्। तदेतद् मृते शुष्के चैव गर्भे सम्भवति।

---

(३) Spontaneous Expulsion (Corpore Conduplicato).

शुभाशुभम्—(क) उपेक्षया गर्भसङ्गः। सङ्गेनानिरस्यमानस्तु गर्भो भृशमापीडितो रसाऽवहनान्म्रियते। (ख) गर्भेण भृशमाध्माता तनूकृता

[ १७ चित्रम् ]

स्कन्धोदयः



जटिलनिर्गतिः।

चाधरगर्भशय्या दीर्यति। (ग) हतबलो वा गर्भाशयः सङ्कोचाद्विरमति। (घ) गर्भाशयविदरणादावीप्रणाशाद्वा पूर्वमेव बलात्तिक्षयेन मातुर्मरणम्।

(क) Impaction of a neglected shoulder presentation.

(ख) Rupture of the Uterus. (ग) Secondary Inertia of the Uterus. (घ) Death of the mother from sheer exhaustion,

(ङ) जरायोरकालदरणं नाभिनालभ्रंशः सङ्क्रमणभीतिः प्रसवोत्तरा रक्तस्रुतिश्चेति सामान्योपद्रवा अपि भवन्ति।

[ ९८ चित्रम् ]

आसनोपक्रमः।



(क) (ख)

एवं गर्भस्थिता अग्रिमचित्रदर्शित उत्कटुकासनविधिर्यथाक्रममाश्रयणीयः।

उपक्रमः—प्रसवारम्भात् प्राक् तदादौ वा निर्णीते स्कन्धोदये स्थानापवर्त्तनेन तत्प्रसाधनं ( शिरोवतरणे श्रोण्यवतरणे वा परिवर्तनम् ) सुखसाध्यम्। जरायुविदरणादनन्तरमाशु विज्ञातेऽपि तत् साध्यमेव। विलम्बेन ज्ञाते तु कृच्छ्रसाध्यमसाध्यं वा मन्तव्यं भयावहं च। तदा स्कन्धसङ्गादन्यद् गर्भच्छेदनादिकं कर्मापि दुःशकं व्यापत्तिकरं च स्यात्।

तदेतत् स्थानापवर्त्तनं—त्रिधा सम्पाद्यते आसनविशेषैः शीर्षा-वर्त्तनेन श्रोण्यावर्त्तनेन च । तत्र—

आसनोपक्रमः—प्रसवस्य प्रथमावस्थायां यदा जरायुरविदीर्णा उदीयमानभागश्च श्रोणिकण्ठादुपरि वर्त्तते तदा यस्मिन् पार्श्वे गर्भस्याधर-

[ ९९ चित्रम् ]

आसनोपक्रमः ।



(क)　　(ख)

उत्कटुकासनविशेषौ ।

पूर्व चित्रदर्शितयोर्गर्भस्थित्योर्यथाक्रममुपयुज्येते ।

स्थानापवर्त्तनम् Version. आसनोपक्रमः Postural Treatment

ध्रुवभागः (शिर एव प्रायेण भवति) स्यात् तस्मिन्नेव पार्श्वे प्रजायिनीं शाययेत्। तथाशायानाया गुरुत्वबलादवस्रस्ते गर्भाशयस्कन्धे गर्भः स्वयमेव विवृत्तः शिरोऽवतरणे परिणमति। एवं सति नातः परं किमपि कार्यम्। कदाचित्तु पुनरावर्त्तनशङ्कया गर्भाशयपार्श्वयोर्वर्त्तीकृते वस्त्रखण्डे निवेश्य दृढोदरपट्टबन्धनेन स्थिरीकरणमपेक्षते। विवृते तु गर्भाशयमुखे जरायुं दारयेच्छिरसः स्थैर्य्याय।

किंवाऽष्टानवतितमे नवनवतितमे च चित्रे दर्शितेनोत्कटुकासनविशेषेण गर्भो विवर्त्तनीयः। अत्र यतोऽस्य गर्भश्रोणिः स्यात्तत्पार्श्वगतं सक्थि वङ्क्षणसन्धौ सङ्कोचयेत् पादतलं च भूमौ स्थापयेत्, तदितरं तु सक्थि वङ्क्षणसन्धावर्धं प्रसार्य पादाङ्गुलिबलेन तिष्ठेदिति।

शीर्षावर्त्तनम्—किंवा जरायुविदरणात् प्राग् बाह्यानुष्ठानेन पार्श्वावतरणं शिरोऽवतरणे परिवर्त्तनीयम्। उत्तमोऽपि विधिरयं प्रायो न सम्यक् सिध्यति विफलीभवति वा गर्भस्य पुनः स्कन्धोदये विवर्त्तनात्।

श्रोण्यावर्त्तनम्—पूर्वोक्तविधीनामसम्भवे वैफल्ये वा विधिरयमुपदिश्यतेऽन्यत्रातीतकालतया गर्भाशयविदरणशङ्कनात्। तत्र द्व्यङ्गुलमानं विकसितं ग्रीवामुखं, हस्तादिकमभ्रष्टं, प्रचुरं च गर्भोदकं तदा संयुक्तानुष्ठानेन; पूर्णतो विकसितं ग्रीवामुखं चेद् आभ्यन्तरानुष्ठानेन श्रोण्यावर्त्तनं विधीयते। श्रोण्यवतरणे परिवर्त्तितस्य च पाद एको योनौ कर्षणीयः, येन प्रतिवर्त्तनात्पुनः पार्श्वावतरणं न प्रसज्येत। आभ्यन्तरे तु विधौ स्त्रियं मूर्च्छयित्वा ग्रीवामुखे च हस्तं प्रणिधाय पृष्ठाभिमुखस्याधस्तनं पूर्वाभिमुखस्य चोर्ध्वतनं पादमाकर्षेत्।

---

वर्त्तीकृते वस्त्रखण्डे Rolled Towels. उत्कटुकासनविशेषेण By King's-method. शीर्षावर्त्तनम् Cephalic Version. बाह्यानुष्ठानम् External method. श्रोण्यावर्त्तनम् Podalic Version. संयुक्तानुष्ठानम् Bi—Polar method. आभ्यन्तरानुष्ठानम् Internal method.

एवमस्यानुशीर्षं सर्वदा पुरतो विवर्त्तते न तु पश्चिमतः । पादाकर्षणात्प्राक् च योनौ स्रस्तं करं वस्त्रेण बध्वा धारयेद् यथायं कर्षणावसरे पुनर्नोद्गच्छेदित्येके । अष्ट करमुद्गमय्य पादं कर्षेदित्यपरे । अतः परं प्रकृतौ त्यजेत् । विपन्नां तु गर्भिणीं गर्भं वा मत्वा सपदि निर्हरेत् ।

गर्भच्छेदनम् - यदा तु श्रोण्यावचानमशक्यं निषिद्धं दुःशकं वा पश्येत्तदा ग्रीवाच्छेदन—पृष्ठच्छेदन—कोष्ठाङ्गच्छेदनानामन्यतमेन छित्वा गर्भमाहरेत् ।

उदरविपाटनम्—तु नात्राभिमतम । काले स्थानापवर्त्तनेनैव संसिद्धेः । कालात्ययेऽपि गर्भच्छेदनमेव हितावहम् , उदरविपाटनस्य सङ्क्रमणभीत्या भयावहत्वात् । केवलं यदा श्रोणिसङ्कोचेन गर्भाशयार्बुदादिना वा योनितो जनने बाधां पश्येत् तदैवोदरं पाटयित्वा समुद्धरेत् ।

## जटिलावतरणम् ।

जटिलावतरणम्—नाम तद्यत्र शिरसा सह हस्तः पादो वा पादद्वयं वा हस्तपादौ हस्तपादा वाऽवश्यस्य निर्यान्ति । एष एव प्रतिखुरः । यथोक्तं सुश्रुतेन—"निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः" इति । गर्भशिरसः स्त्रीश्रोण्या वाऽऽकृतिप्रमाणविकारं यदा श्रोणिकरणं न सम्यगापूर्यते

---

गर्भच्छेदनम् Embryotomy. ग्रीवाच्छेदनम् Decapitation. पृष्ठच्छेदनम् spondilotomy, कोष्ठाङ्गच्छेदनम् Evisceration.

उदरविपाटनम्—Caesarian Section. जटिलावतरणम् Complex or Compound Presentation,

शिरसा तदाऽयं सम्भवति । गर्भनिर्गतिश्च प्रायोऽत्र निर्बाधा । तथाप्येवं

[ १०० ] चित्रम्

प्रतिखुरः ।



जटिलावतरणम् । शिरसा सह पादद्वयमवतरति ।

प्रतिपन्नस्य हस्तपादावूर्ध्वमुत्पीड्य शिरोऽनुलोममानीयापहरेत् । किं वा पादाकर्षणेन गर्भस्याधराधम अपत्यपथमानीयापहरेत् ।

[ १०१ ] चित्रम्

प्रतिक्षुरः ।



जटिलावतरणम् । शिरसा सह पादाऽवतरति

# नवमोऽध्यायः ।

## अथातो बह्वपत्यताविज्ञानीयमध्यायं व्याख्यास्यामः ।

तत्र बहुधा ( अशीतावेकः ) द्वौ, कदाचित् ( षट्सहस्रेष्वेकः ) त्रयः चत्वारः पञ्च षडपि वा गर्भाः सहैव कुक्षिमागच्छन्तीति बह्वपत्यताऽपि प्रायो दृश्यते । आनुवंशिकश्चायं विशेषः । तत्र यमो जीवति, इतरे तु प्रायेण विपद्यन्ते । ते ह्यकाले स्रंसन्ते, जाता अपि च न चिरं जीवन्ति । प्रायोदर्शनाच्च यमलगर्भ एवेह वर्णनीयः ।

हेतुः प्रकारश्च —

[ क ] एकस्य बीजग्रन्थेर्बीजपुटकाद् बीजपुटकाभ्यां वा निर्गते द्वे स्त्रीबीजे, किं वा उभयोर्बीजग्रन्थ्योर्बीजपुटकान्निर्गते द्वे स्त्रीबीजे यदा शुक्रेण संसृज्येते तदा यमस्योत्पत्तिः । अतुल्यबीजश्चायं यमः ।

[ ख ] एकमपि स्त्रीबीजं यदा युग्मचित्केन्द्रवद् भवति, एकचित्केन्द्रवदपि वा पुम्बीजेन संसर्गादनन्तरं यदा गर्भस्थल्यां पूर्णतो द्विधा भिद्यते तदापि यमोत्पत्तिर्जायते । तुल्यबीजोऽयं यम इति तु विशेषः ।

(ग) एवं त्रिकचतुष्कादिष्वपि स्वयमूह्यम् । तद्यथा—यदैकस्मात् स्त्रीबीजात् तुल्यबीजौ यमौ द्वितीयाच्चैक एव गर्भस्त्रिभिर्वा बीजैरेकैकस्तदा गर्भत्रिकम्, यदा तु बीजद्वयाद् द्वौ द्वौ तुल्यबीजौ यमौ तदा गर्भचतुष्कम्, यदा च त्रयाणां स्त्रीबीजानां बीजद्वयाद् द्वौ द्वौ तुल्यबीजौ यमौ

---

बह्वपत्यता Multiple Pregnancy द्वौ = Twins त्रयः = Triplets. चत्वारः = Quadruplets. पञ्च = Quintlets. षट् = Sexlets. आनुवंशिको विशेषः Inherited Tendency द्विधाभेदः Cleavage or Fission of embryonic area ( divides into two blastoderms ).

तृतीयाश्चैकस्तदा गर्भपञ्चकम्, यदा तु त्रिभिरपि द्वौ द्वौ यमौ तदा गर्भषट्कम्।

एवं च तुल्यातुल्यबीजभेदेन द्विविधो यमः फलितः। एतच्च तयोर्वै लक्षणम्।

[ १०२ चित्रम् ]

अतुल्यबीजो यमः।



द्वे अपरे, द्वौ बहिर्जरायू द्वौ चान्तर्जरायू।

अतुल्यबीजो यमः—

[ १ ] द्वावपि सुतौ, द्वे अपि सुते, एका सुताऽपरश्च सुत इति लिङ्गसाम्यं लिङ्गवैषम्यं वा।

[ २ ] अपरा बहिर्जरायुरन्तर्जरायुश्च तयोः पृथक् पृथग् भवन्ति। अतः सम्पर्कस्थले चत्वारः कलास्तरा लभ्यन्ते। कदाचित्तु तत्र बहि-

---

अतुल्यबीजो यमः Bi—ovular Twins.

जरायोः स्तरद्वयमाश्लिष्य कालेन विलुप्यतेऽपि, एक एव च बहिर्जरायु-गर्भकोषद्वयं परिवृण्वन् लक्ष्यते। एवमतिसन्निकर्षेणाऽपृथग्भूतेव लक्ष्यमाणाऽप्यपरा न परमार्थेन तथा ग्राह्या, रक्तसंवहनपार्थक्यस्य तत्र स्फुटत्वात्।

[ ३ ] उभावपि प्रायः समकायमानभारौ स्वस्थौ कालजन्मानौ च।

तुल्यबीजो यमः—

युग्मचित्केन्द्रवतो बीजाज्जातश्चेत्—

[१] उभयोर्लिङ्गसाम्यमाकृतिसाम्यं च दृष्टम्।

[ १०३ चित्रम् ]

तुल्यबीजो यमः

[ युग्मचित्केन्द्रवतो बीजाज्जातः ]



एकाऽपरा, एक एव बहिर्जरायुः,

अन्तर्जरायू च द्वौ।

तुल्यबीजो यमः Uni-ovular twins ( Homologous )

(२) एकाऽपरा, एक एव च बहिर्जरायुः । अन्तर्जरायुनिर्मितो गर्भकोषस्तु पृथक् पृथग्भवति । कदाचित्तु संयोगस्थलेऽन्तर्जरायुद्वयं संसृज्यते, दीर्यते च कालान्तरेण मध्यफलकं तत् । एवमेक इव भासमानोऽपि गर्भकोषो दीर्णकलावशेषैर्भेत्तुं शक्यते ।

[ १०४ चित्रम् ]

तुल्यबीजो यमः ।

[ संसृष्टबीजस्य द्विधाविभागाज्जातः ]



एकाऽमरा, एको बहिर्जरायुः, एक एव चान्तर्जरायुः ।

(३) हीनप्रमाणौ, विषमकायमानभारौ, अस्वस्थौ, अकाल-(कालात्पूर्वम्) जन्मानौ च प्रायेण ।

## द्विधाविभागाज्जातश्चेत्—

(१) उभयोर्लिङ्गसाम्यम् ।

(२) एकाऽमरा, एको बहिर्जरायुः; एक एव चान्तर्जरायुः ।

(३) हीनविषमप्रमाणावस्वस्थावकालजन्मानौ च।

स्मर्तव्यश्चात्र—(अ) यदा संसृष्टबीजं न पूर्णतो भिद्यते तदा वियोन्याकृतिगर्भाणां जन्म।

(आ) विषमप्रमाणत्वे यदैको न सम्यक् पुष्यति तदा म्रियतेऽपरेण पीडितः शुष्यति च।

अन्यच्च—

अधिगर्भाधानेनापि यमोत्पत्तिर्दृष्टा। शुक्रसंसर्जनवैचित्र्यकृतश्चायं विशेषः। द्विविधं च तत् तुल्यर्त्तुकं भिन्नर्त्तुकञ्चेति। तत्र—

तुल्यर्त्तुकमधिगर्भाधानं नाम, एकस्मिन्नेव ऋतौ निर्गतयोर्द्वयोः स्त्रीबीजयोरेकदा पुरुषयोगादेकस्य, लघुनैव कालेनान्यदा पुरुषयोगादितरस्यापि च पुम्बीजेन संसर्जनम्। गौराङ्ग्या एकदा गौराङ्गयोगादन्यदा च कृष्णश्यामपुरुषयोगाज्जातौ गौरश्यामौ यमौ त्वत्र प्रमाणम्। तिरश्चीनेष्वपि च दृष्टमेतत्।

भिन्नर्त्तुकमधिगर्भाधानं नाम, एकस्मिन्नृतौ जाते गर्भाधाने मासात्परं ततोऽधिकं वा परस्मिन्नृतौ निर्गतस्य द्वितीयस्त्रीबीजस्य पुम्बीजेन संसर्जनम्। तत्र यमयोरेकः पूर्णतां गतः परश्च न तथा, किंवा एकः काले जातः परश्च द्वित्रमासात् परम्, तावुभावपि भिन्नर्त्तुकस्याधिगर्भाधानस्य ज्ञापकौ। तृतीये चतुर्थे वा मासि कौषिक्याः शैषिक्याश्च गर्भधरकलाया मेलनाद् यावत् पन्था नावरुध्यते बीजागमश्च जायते चेन्नासम्भवमिदमित्याहुरेके। नेत्यन्ये।

---

वियोन्याकृतिगर्भाः Pathological embryos.

मृतशुष्कः Faetus papyraceous or Faetus Compressus.

तुल्यर्त्तुकमधिगर्भाधानम् Superfecundation.

भिन्नर्त्तुकमधिगर्भाधानम् Superfaetation.

बीजवाहिस्रोतःकलायाः स्थौल्येन स्रोतोऽवकाशस्य श्लेष्मागलिकया पीवास्मरणैश्च शीघ्रमेवावरोधात्, रजःस्रुतिरिव गर्भिण्या बीजागम-

[ १०५ चित्रम् ]

यमलगर्भः ।



द्वावपि शिरसाऽवतरतः ।

क्रियानिरोधाच्च, एकः पूर्णो इतरस्त्वपूर्णो इत्यस्य रसाऽसम्यग्वहनादि-भिरन्यथाप्युपपत्तेश्च ।

केवलं यदा युग्मगर्भाशया स्त्री भवति बीजागमश्चापि कथञ्चिज्जायते तदैव भिन्नत्वे कस्याधिगर्भाधानस्यावसरः। इत्थम्भूतस्यैव चैकः कालेऽन्यश्च कालात् परं जायते। किंवा यदा प्रथमं स्त्रीबीजं बीजवहस्रोतसि लग्नं वर्धते परं च द्वितीयमपि पुम्बीजेन संसृज्य गर्भाशयमवाप्नोति तदापि भिन्नत्वे काधिगर्भाधानस्य सम्भवः।

**गर्भावतरणानि**—अत्र शिरःश्रोणिपार्श्वावतरणानां समद्वन्द्वविषमद्वन्द्वभेदात् षड् गर्भावतरणानि भवन्ति। तद्यथा—

[ १०६ चित्रम् ]
यमलगर्भः।



द्वयोरपि पार्श्वावतरणम्।

[१] द्वे शिरोऽवतरणे ४७·४% [ १०५ चित्रम् ]

[२] द्वे श्रोण्यवतरणे ८·४%

[३] द्वे पार्श्वावतरणे ०·४%

[४] एकं शिरोवतरणम्, एकञ्च श्रोण्यवतरणम् ३४·२% [१०७ चित्रम्

[५] एकं शिरोवतरणम, एकञ्च पार्श्वावतरणम ५·८%

[६] एकं श्रोण्यवतरणम्, एकञ्च पार्श्वावतरणम् ३·६% [१०८ चित्रम्]

निर्णयः—तत्र मिथः पार्श्ववर्तिनौ यमौ मुकरनिर्गमौ भवतः पूर्वापरतश्च स्थितौ दुर्विज्ञेयौ । ऊर्ध्वाधःस्थितिस्तु सुविज्ञेयाऽपि कदाचिदेव दृष्टा ।

गर्भाशयश्च यमोपस्थितौ प्रायेणातिप्रवृद्ध उत्तांसिनश्च भवति । "यस्या मध्ये निम्नं द्रोणीभूतमुदरं सा युग्मं प्रसूयते" इति सुश्रुतः (शा० ३) । नाभिसमीपे जठरपरिणाहश्चत्वारिंशत्प्राङ्गुलस्ततोऽप्यधिको वा दृष्टः ।

[ १०७ चित्रम् ]

यमलगर्भः ।



एकः शिरसाऽन्यश्च श्रोण्याऽवतरति ।

सामान्यमानतो द्वित्रप्राङ्गुलं सोऽधिकायत एव । अनैकान्तिकञ्चैतल्लक्षणम्, गर्भोदकवृद्धावपि दर्शनाददर्शनाच्च न्यूनमानयोर्यमयोरपि ।

उदरस्पर्शेन चेद् द्वे शिरसी द्वे पृष्ठे द्वौ नितम्बौ बहुलानि च क्षुद्रशाखाङ्गानि प्रतीयन्ते तदा युग्मस्थितिर्निश्चितैव ।

---

मध्ये निम्नम् a difinite groove between the two faetal trunks.

एवं श्रुतिपरीक्षया पृथक् पृथक् स्थानद्वये द्वाभ्यां भिषग्भ्यां समं निपुणं च परीक्षणं गर्भहृदयद्वयस्य विषमसङ्ख्यानं शब्दश्रवणमपि यमलगर्भं निश्चाययति ।

रश्मिचित्रणं—तु सर्वसन्देहान् व्यपोहति ।

योनिपरीक्षणं तु नार्थकरम् । प्रसवकाले च निर्गतेऽपि प्रथमे शिशौ गर्भाशयो नातिहीयते प्रतीयते च स्पर्शादिना द्वितीयोऽपि गर्भः ।

[ १०८ चित्रम् ]

यमलगर्भः ।



एकः श्रोण्याऽन्यश्च पार्श्वेनावतरति ।

प्रसवक्रमः—तत्र हीनकायमानौ चेद्यमौ सुखेन प्रसूयेते । प्रायेण पूर्वमेकः प्रपद्यते ततो द्वितीयस्ततश्च क्रमेण तयोरमरे । कदाचित्तु पूर्वमेकस्ततस्तदमरा ततोऽन्यस्तदनु च तस्यामरा । पूर्वमेको गर्भस्तदपरा च ततो द्वितीयाऽमरा तद्गर्भश्चेति क्रमस्तु द्वितीयशिशोः कृते प्राणसंशयकरः । तत्र सद्य एव द्वितीयं गर्भमाहरेत् ।

किञ्च निर्गते प्रथमे शिशौ गर्भाशयः क्षणं [दश पञ्चदश वा प्रपलानि] विश्राम्यति । द्रुतमेव च ततो विकासितादपत्यपथाद् द्वितीयः प्रपद्यते

होरार्धमात्रेण कालेन । कदाचित्तु कतिपयहोरा दिनं दिनद्वयं सप्ताहं वा यावद् अन्तर्गतो विलम्बतेऽपि ।

उपद्रवाः—

[१] सम्बाधलक्षणानि—पादशोफार्शः सिराकौटिल्यकष्टश्वसनादीनि ।

[२] गर्भजरक्तविषता—वृक्कादीनां कार्यातियोगाद् गर्भवान्ति-लालामेहगर्भाक्षेपकादिरूपा ।

[३] गर्भोदकवृद्धिः—तुल्यबीजयोर्विशेषेण दृश्यते । एकस्मिन्नेव गर्भकोषे प्रायो वर्धते, उभयोर्वापि कदाचित् ।

[४] द्वारस्थाऽपरा—अपरादेशस्य विशालत्वाद् विस्थानेऽपि सा प्रसरति ।

[५] अकालप्रसूतिः—सप्ताहात् पक्षाद्वा पूर्वमेव प्रायेण यमयोर्जन्म ।

[६] वैकृतावतरणानि—उक्तान्येव ।

[७] परस्परासङ्गः—अनुपदमेव वक्ष्यते ।

[८] दीर्घप्रसूतिः—गर्भाशयदौर्बल्याद्वैकृतावतरणाच्च हेतोः ।

[९] आवीप्रणाशः—अतिवर्धनाद् दुर्बलो भवति गर्भाशयः ।

[१०] प्रसवोत्तरा रक्तस्रुतिः—अतिवर्धनेन गर्भाशयपेशीसूत्राणां दौर्बल्याद्, अपरास्थलस्य विशालत्वाद्, अपराया दुर्बलतराधर-गर्भशय्यायामास्थितत्वाच्च सम्भवति ।

[११] वियोन्याकृतिगर्भाः—प्रायो दृश्यन्ते ।

[१२] सङ्क्रमणभीतिः—प्रकृतिदैर्घ्याद् हस्तादियोगादपरास्थलस्य विशालत्वाज्जराय्वादिशेषाच्चोपसर्गभयम् ।

---

[१] Pressure Symptoms. [२] Pregnancy Toxaemia. [३] Hydramnios. [४] Placenta Praevia. [५] Premature Delivery. [६] Malpresentations. [७] Interlocking. [८] Prolonged Labour. [९] Inertia. [१०] Post-partum Haemorrhage. [११] Faetal Malfomations. [१२] Risk from Sepsis.

शुभाशुभम्—उपद्रुतत्वेऽपि मातुः कृते नास्ति विशेषभयम्। शिशुस्तु विपद्यते प्रायः, अचिरजातत्वाद् हीनमानत्वाद् दुर्बलत्वाद्वैकृतावतरणत्वाच्च। कदाचिद् रसालाभादन्तर्गतोऽपि कश्चिच्छुष्यति।

सामान्यप्रसवोपक्रमः—आदौ प्रथमं निर्गच्छतः शिशोरवतरणं परिज्ञेयम्। शिरः श्रोणिर्वा चेत्स्वत एव स प्रपत्स्यते। निर्गते तु तन्नाभिनालं नियमेन द्वयोरन्तरयोर्बद्ध्वा छेदनीयम् अन्यथा तुल्यबीजयोर्यमयोरपरारक्तसंवहनानुबन्धेनापरो गर्भः शोणितक्षयाद् व्यापद्येत। न च नालमाकर्षेदपि, कदाचिद् मिथोग्रथितत्वे कृष्टं तत् परनाभिनालं पीडयित्वा द्वितीयगर्भस्य मृत्युहेतुः स्यात्।

ततो द्वितीयशिशोरवतरणं स्पर्शेन योनिपरीक्षया वा निर्दिशेत। शिरसा श्रोण्या वाऽवतरति चेदुपेक्ष्यः। पार्श्वावतरणे तु गर्भोदकनिर्गमात् पुनरावीप्रादुर्भावाच्च प्रागेव स्थानापवर्त्तनं विधीयते।

अतः परं होरार्धं होरैकं वा प्रतीक्षणीयं यावद् गर्भाशयो विश्रम्य सबलो भूत्वा पुनः सङ्कोचानारभते। ततो द्वितीयं गर्भकोषं दारयेत्। अथ चेत् प्रथमावरायाः अकालवियोगेन रक्तस्रुतिर्द्वितीयगर्भस्य हृच्छब्दानां वा मन्दता च स्यात्तदा तु पुनरावीप्रादुर्भावं न प्रतीक्षेत। झटित्येव जरायुकोषं विदार्य संवाहनोपमर्दनादिना गर्भाशयं समुत्तेजयेत्। श्रोण्यावर्त्तनं वा विधाय सक्थिनी धृत्वा समाकर्षेत्। सन्दंशेन वा गृहीत्वा सद्यः समाहरेत्। अतोऽन्यथा त्वाशुहरणं न शस्यते यतो दुर्बलो गर्भाशयः सम्यगाकुञ्चनायाऽलब्धावसरो न प्रभवति सम्भाव्यशोणितातिस्रावरोधाय। एवं होरैकं प्रतीक्षितेऽपि यदा नाव्यः प्रादुर्भवन्ति तदापि जरायुं दारयेद् उपमर्दयेदवपीडयेच्च गर्भाशयस्कन्धम्, अन्यथा कतिपयदिवसानन्तरं प्रसविष्यमाणो द्वितीयगर्भः पुनः सूतिकाक्लेशाय स्यात्। एवं स्थितौ पोषणकसत्वस्योपयोगोऽपि हितावहो भवति। तद्धि गर्भाशयसङ्कोचान्

---

पोषणकसत्वम् Pituitary extract.

प्रवर्त्य द्वितीयगर्भं स्रावयति दूरीकरोति च प्रसवोत्तररक्तस्रुतेर्भीतिम् । केचित्त्वाहुः – "अकालजातः प्रथमशिशुरपुष्टश्चेद् द्वितीयगर्भनिर्हरणाय न त्वरणीयम्, यतः कालान्तरेण स्वयं प्रजातः स पुष्टो भविष्यतीति" ।

विशल्यभावात्परं च तृतीयावस्थायां प्रसवोत्तररक्तस्रुतेः सम्भावनातिशयेन तत्प्रतीकारस्तूशा सर्वथा सन्नद्धो भवेत् । गर्भाशयस्कन्धस्योपरि

[ १०९ चित्रम् ]

यमयोः परम्परासङ्गः ।




परम्परासङ्गस्य त्रयः प्रकारा अत्र दर्शिताः ।

( क ) यदा द्वावपि शिरसाऽवतरतः ( ख ) यदा प्रथमः शिरसाऽवतरति द्वितीयश्च पार्श्वेन । ( ग ) यदा प्रथमः श्रोण्यावतरति द्वितीयश्च पार्श्वेन ।

तदुत्तोजनाय सर्वदा निहितपाणिः स्यात् । अपराप्रपत्त्यनन्तरं त्वग्वेधेन "अर्गटा"ख्यं नव्यभेषजं दद्यात् । यावद्धयं प्रत्यासन्न एव च भिषक् तिष्ठेत् ।

यदा तु हीनप्रमाणौ यमौ सहैव निष्क्रमितुं प्रवृत्तौ तदोर्ध्वं स्थितो मनागुत्क्षिप्य प्रतिरोधनीयः । अथ चेदेकः शिरसाऽन्यश्च श्रोण्या योनिमुखं प्रपद्यते तदा श्रोण्याऽवतरन्तमधःस्थमपि रोद्धुमुत्क्षिपेत् ।

## परस्परासङ्गस्तदुपक्रमश्च ।

कदाचिद् यमयोः परस्परासङ्गोऽपि दृष्टः । चतुर्विधश्च सः । तद्यथा—

[१] यदा द्वावपि शिरसाऽवतरतः, लघुनी च शिरसी सहैव श्रोणौ विशतस्तदाऽनवकाशतया गतिरोधादासङ्गः । अत्रोदरपरीक्षयाऽ-

[ ११० चित्रम् ]

यमयोः परस्परासङ्गः ।



यदा प्रथमः श्रोण्यावतरति द्वितीयश्च शिरसा ।

नुलम्बस्थितं मध्यकायद्वयं योनिपरीक्षया च शिरोलक्षणमर्बुदद्वयं प्रतीयते । तत्रैकस्य शिरः श्रोणिकण्ठाद् बहिरुत्क्षिपेद् येनान्यो नीचैरागत्य प्रसूयेत । उत्क्षेपणासम्भवे तु नीचैः स्थितं शिरः सन्दंशेन गृहीत्वा कर्षेत् । एवमप्यशक्ये शिरो विदार्य तं गर्भमाहरेत् ।

[२] अथ चेत् प्रथमः श्रोण्याऽवतरति द्वितीयश्च शिरसा, शिरश्च तत्

प्रथमस्य गात्रेण सह श्रोण्यां संविश्य तस्य शिरसोऽग्रे प्रपन्ने, तदाऽपि स्थानाभावाद्वा, चिबुकेन चिबुकस्य निग्रहाद्वा [ ११० चित्रम ] चिबुकेनानुशीर्षस्य निग्रहाद्वा, अनुशीर्षेणानुशीर्षस्य निग्रहाद्वा गतिसङ्गः। अत्रोदरपरीक्षया द्वितीयशिशोर्मध्यकायं योनिपरीक्षया च तस्यैव शिरः प्रतीयते। तत्र द्वितीयगर्भस्य शिरो बन्धादुन्मोच्य ऊर्ध्वमपसारयेद् आकर्षेच्च प्रथमस्य शिरः। अशक्ये तु हीनप्रमाणौ चेद्यमौ द्वितीयमेव पुरा सन्दंशेनाकृष्य निर्हरेत्। एवमप्यशक्ये प्रथमस्य शिरश्छित्त्वा तद्गात्रमाहरेत्। ततश्छिन्नं शिर ऊर्ध्वमुत्क्षिप्य द्वितीयगर्भं गर्भाशयस्कन्धावपीडनेन सन्दंशकर्षणेन वा निर्हरेत्। तदनु च प्रथमस्य छिन्नं शिर आहरेत्। सर्वत्र च नाभिनालादिपीडनान्मृतप्रायः प्रथमशिशुरेव व्यापादनीय इति नियमः।

[३] शिरोभ्यामवतरतोर्यद्येक इतरापेक्षया मनागग्रेसरो भवति तदा द्वितीयस्य शिरस्तद्ग्रीवायामाविश्य गतिं रुध्नाति। निदानं त्वस्य न सुकरम्। यतः सामान्ययोनिपरीक्षणेन दूरस्थितो गतिरोधहेतुर्न प्रतीयते, उदरपरीक्षया च केवलं युग्मस्थितेरेवावबोधः। यदा प्रसवविलम्बं दृष्ट्वा श्रोणिगतं शिरः सन्दंशेनाकृष्यते प्रतिरोधश्च प्रतीयते तदा मनः संशेते। यथैव च योनौ हस्तं प्रवेश्य कराङ्गुलीः शिरस ऊर्ध्वं नीत्वा विमृश्यते तथैव सर्वं स्पष्टं भवति। तत्र द्वितीयस्य शिर ऊर्ध्वं क्षिप्त्वा प्रथमो यमः सन्दंशेनाहरणीयः।

[ ४ ] अथ चेत् प्रथमः शिरसा श्रोण्या वाऽवतरति द्वितीयश्च पार्श्वेन, प्रथमस्य स्कन्धो (शिरोऽवतरणे) हनुर्वा ( श्रोण्यवतरणे ) च द्वितीयस्य ग्रीवया निगृह्यते तदाऽप्यासङ्गः [ १०९ चित्रम् (ख) (ग) ]। निदानं त्वस्यापि यद्यपि न सुकरं तथापि जठरपरीक्षणेनैकस्य विज्ञाने पार्श्वावतरणे पार्श्वावतरणं प्रायेणोपद्रवजुष्टं भवतीति कृत्वा पूर्ववत् सम्यग् योनिपरीक्षणेन सर्वं विज्ञातं भवति। तत्र द्वितीयगर्भस्य गात्रं मार्गतोऽपसार्य प्रथमगर्भं शिरसा प्रपन्नं सन्दंशेन श्रोण्या प्रपन्नं च सक्थ्यादिकर्षणेन निर्हरेत्, ततश्च द्वितीयो गर्भो विवर्त्य निष्कासनीयः।

श्रोण्या प्रपन्नः प्रथमो यद्येवं न निष्क्रामति तदा शिरश्छित्वा तद्गात्रं पूर्वमाहरेत्, ततो द्वितीयं विवर्त्य निष्कासयेत्, तदनु च प्रथमस्य छिन्नं शिरः।

प्राञ्चोऽप्याहुः—

(१) कन्यां सुतं वा सहितौ पृथग्वा, सुतौ सुते वा तनयान् बहून् वा।
कस्मात् प्रसूते सुचिरेण गर्भम्, एकोऽभिवृद्धिश्च यमेऽभ्युपैति॥
रक्तेन कन्यामधिकेन पुत्रं, शुक्रेण तेन द्विविधीकृतेन।
बीजेन कन्यां च सुतं च सूते, यथास्वबीजान्यतराधिकेन॥
शुक्राधिकं द्वैधमुपैति बीजं, यस्याः सुतौ सा सहितौ प्रसूते।
रक्ताधिकं वा यदि भेदमेति, द्विधा सुते सा सहिते प्रसूते॥
भिनत्ति यावद् बहुधा प्रपन्नः, शुक्रार्त्तवं वायुरधिप्रवृद्धः।
तावन्त्यपत्यानि यथाविभागं, कर्मात्मकान्यस्ववशात् प्रसूते॥
कर्मात्मकत्वाद् विषमांशभेदाच्, शुक्रासृजोर्वृद्धिमुपैति कुक्षौ।
एकोऽधिको न्यूनतरो द्वितीय, एवं यमेऽप्यभ्यधिको विशेषः॥

—च० शा० २।

(२) बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ।
यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ॥

—सु० शा० ३

(३) यदा तु कललं वायुस्तद् द्विधा कुरुते बली।
यमौ तदा सम्भवतः कृष्णात्रेयवचो यथा॥
वायुस्त्वश्ववराहाणां देहेषु बलवान् पुनः।
स तत्र कललं भित्वा करोति बहुपुत्रताम्॥

—भेल० शा० १।

(४) .............................. शुक्रार्त्तवे पुनः।
वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता॥

—वा० शा० १।

# दशमोऽध्यायः ।

## अथातो मूढगर्भविज्ञानीयमध्यायं व्याख्यास्यामः ।

मूढो विलोमगतिर्निरुद्धगतिर्विगुणापानमूर्च्छितो वा यो गर्भः स मूढगर्भः । उच्यतेऽपि—"तमेव कदाचिद् विवृद्धम् असम्यगागतम् अपत्यपथमनुप्राप्तमनिरस्यमानं विगुणापानसम्मोहितं गर्भं मूढगर्भ इत्याचक्षते"—सु० नि० ८ । "तं तु गर्भं कदाचिद् असम्यगपत्यपथमनेकधा प्रतिपन्नं विगुणेनैव वायुना पीडितं मोहितं च मूढगर्भ इत्याहुः । विगुणानिलप्रतिपीडनवैचित्र्याद्सङ्ख्यगतिश्च"—सङ्ग्र० शा० ४ ।

तथा च त्रिविधो मूढगर्भः फलितः—(१)असम्यगागतः(२) अनिरस्यमानः(३) सम्मोहितश्चेति ।

### असम्यगागतो मूढगर्भः ।

त्रिविधा हि गर्भगतिः सङ्ग्रहकारेण निर्दिष्टा, ऊर्ध्वा (श्रोण्यवतरणम्) तिर्यग् (पार्श्वावतरणम्), न्युब्जा (शिरोऽवतरणम) चेति । तत्र सङ्कुचितेन शिरसा श्रोणौ प्रविश्य, उचितेन पथा यदा स्वयं गर्भो निष्क्रामति तदा सम्यगागतो भवति । विपरीतं निष्क्रान्तस्तु असम्यगागतो मूढगर्भः । उक्तमपि—"स चोपस्थितकाले जन्मनि प्रसूतेः । मारुतयोगात् परिवृत्यावाक्शिरा निष्क्रामत्यपत्यपथेन । एषा प्रकृतिर्विकृतिः पुनरतोऽन्यथा ।"—च० शा० ६ ।

नाना विपरीतगतयश्च "वैकृतं निष्क्रमणम्, वैकृतान्तरणम्, वैकृतादयः" इत्यादि प्रसङ्गेषु पूर्वं सहेतुकं व्याख्याताः । तथा च प्रतीपावृत्त-

---

मूढगर्भः Abnormal delivery. (१) Malpresented. (२) Partialy or Completely obstructed. (३) Asphyxiated, or still born

शिरा: शीर्षोदय:, ललाटोदय:, मुखोदय: स्फिक्पादोदय:, स्फिगुदय: जानूदय:, पादोदय:, स्कन्धोदय:, कूर्परोदय:, हस्तोदयश्चेति सर्व एवैते विलोमगत्या प्रतिपन्ना असम्यगागता मूढगर्भा भवन्ति। प्राञ्चस्तु मूढगर्भगतिं चतुर्धाऽष्टधा च विभज्य वर्णयन्ति। वस्तुतस्तु—"स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्यया हीयते"

—सु० नि० ८।

गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः।
तत्रानल्पमतिर्वैद्यो वर्त्तेत विधिपूर्वकम्॥ सु० चि० १५।

चतुर्धा गतिः—

[१] कीलः—"ऊर्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः"। अयं जघनसङ्गोपद्रुतः, स्फिगुदयः।

[२] प्रतिखुरः—"निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः।" अयं जटिलोदयः।

[३] बीजकः—"यो निर्गच्छत्येकशिरोभुजः स बीजकः"। अयमपि जटिलोदयः।

[४] परिघः—"यस्तु परिघइव योनिमुखमावृत्य तिष्ठेत् स परिघः"। अयं स्कन्धोदयः

अष्टधा गतिः—

(१) "तत्र कश्चिद् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते"। स्फिक्पादोदयः। ( ४० चित्रे द्वितीयः, ८४ चित्रं च)।

(२) "कश्चिदाभुग्नैकसक्थिरेकेन"। पादोदयो जानूदयो वा (४० चित्रे तृतीयचतुर्थौ)।

(३) "कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः"। स्फिगुदयः। (४० चित्रे प्रथमः, ८६ चित्रं च)।

---

[१] Frank breech presentation with impaction.

[२] Complex ~~or Compound~~ presentation.

(१) Full breech presentation. (२) Footling or Knee presentation. (३) Frank breech presentation.

[४] "कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते"। पार्श्वावतरणम् । (९३, ९४, ९५ चित्राणि) ।

[५] "अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना"। हस्तभ्रंशयुतः स्कन्धोदयः । (९५ चित्रम्)

[६] "कश्चिदाभुग्नशिरा बाहुद्वयेन"। जटिलोदयः ।

[७] "कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः"। जटिलोदयः प्रतिम्बुरः । (१०० चित्रम्)

[८] "कश्चिदेकेन सक्थ्ना योनिमुखं प्रतिपद्यतेऽपरेण पायुम्"। पादोदयजानूदयौ ।

—सु० नि० ८ ।

सप्तमाष्टमौ वाग्भटेन विष्कम्भसंज्ञया निर्दिष्टौ । तद्यथा—

हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।
पादेन योनिमेकेन भुग्नोऽन्येन गुदञ्च यः ॥
विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।—वा० शा० १ ।

माधवप्रभृतिभिस्त्वष्टधा गतिः किञ्चिदन्यथैव दर्शिता । तद्यथा—

भुग्नोऽनिलेन विगुणेन ततः स गर्भः,
सङ्ख्यामतीत्य बहुधा समुपैति योनिम् ।
[१]द्वारं निरुध्य शिरसा [२]जठरेण कश्चित्,
[३]कश्चिच्छरीरपरिवर्त्तितकुब्जदेहः ॥
[४]एकेन कश्चिदपरस्तु[५] भुजद्वयेन,
[६]तिर्य्यग्गतो भवति कश्चिद[७]वाङ्मुखोऽन्यः ।
[८]पार्श्वापवृत्तगतिरेति तथैव कश्चिद्,
इत्यष्टधा गतिरियं ह्यपरा चतुर्धा ॥

तत्र (१) निरुद्धशिराः = प्रतीपापवृत्तशिरसः शीर्षोदयादयः । (७६ चित्रम्)
(२) निरुद्धजठरः = अधोमुखः परिघो यदा जठरेण द्वारं निरुध्य तिष्ठति ।

---

(४) Transverse Presentation. (५) Transverse Presentation with prolapse of the hand. (६), (७) Complex or Compound Presentations. (८) Foot and knee presentation.

(३) कुब्जदेहः = पूर्वोक्तः सप्तमप्रकारः। (४) प्रपन्नैकभुजः = पूर्वोक्तःपञ्चमो भेदः। (५) प्रपन्नभुजद्वयः = पूर्वोक्ता षष्ठी गतिः। (६) निर्यग्गतः = पूर्वोक्तस्तृतीयः प्रकारः। (७) अवाङ्मुखः = मुखोदयः। (७५ चित्रम्)(८) पार्श्वापवृत्तगतिः = स्वतोऽनुकूलनक्रमेण यदा परिघो निर्याति।

## अनिरस्यमानो मूढ़गर्भः।

प्रवृत्ते प्रसवे गर्भिण्यङ्गवैगुण्याद् गर्भाङ्गवैगुण्याद् वाऽवरुद्धो गर्भो यदा निष्क्रमितुमसमर्थस्तदा निरुद्धगतित्वादनिरस्यमानो मूढगर्भो भवति। तत्र—

(क) गर्भिण्यङ्गवैगुण्य—यथा, (१) सङ्कुचितश्रोणिः (२) योनिगर्भाशयश्रोणिबीजग्रन्थीनाम् अर्बुदानि (३) योनिसंवरणम् (४) गर्भकोषपरासङ्गः (५) योनिगर्भाशययोराकृतिदोषाः (६) गर्भाशयस्य अयथास्थितिः।

(क) गर्भाङ्गवैगुण्य—यथा, (१) अवतरणासनाङ्गसंस्थितीनां विकाराः (२) ह्रस्वदीर्घ स्थूलकृशादिरूपाः कायमानदोषाः (३) वियोन्याकृतयः (४) यमलादिसङ्ख्याविकाराः (५) अर्बुदानि च।

तत्रैषां केचिद् गर्भाशयसङ्कोचान् दुर्बलीकृत्य उपहत्य वा, केचिद् गर्भावतरणक्रियां व्याहत्य, केचिच्च विकृतोदयान् वैकृतनिष्क्रमणान् अन्यान् वोपद्रवान् संजनय्य सङ्ग जनयन्ति।

---

[क] Abnormalities on the part of the mother. (१) Contracted pelvis. (२) Tumours. (३) Stenosis & Atresia of the Cervix or Vagina. (४) Retraction ring dystochia. (५) Malformations of the Uterus & Vagina. (६) Malpostion of the uterus.

[ख] Abnormatities on the part of the foetus. (१) Abnormal presentations, positions & attitudes. (२) Abnormal size of entire foetus or its parts. (३) Malformations. (४) Twins. (५) Tumours.

## सम्मोहितो मूढगर्भः ।

जातमात्र एव बालः प्रकृत्या श्वसिति । कदाचित्तु निरुद्धश्वसनः क्षीणश्वसनो वा प्राणोपरोधान्मोहं गतोऽपि दृष्टः । प्राणोपरोधकरा भावास्त्विमे भवन्ति—

(१) बाधितं रक्तसंवहनम्, यथा—(क) नाभिनालपीडनम् (ख) अपराया अकालवियुक्तिः (ग) गर्भाशयस्य प्रबलाकुञ्चनम् (घ) मातुस्तीव्ररक्तक्षयः ।

(२) शिरोभिघातः शिरःपीडनं वा, यथा—सङ्कुचितश्रोणौ सन्दंशाकर्षणे च । श्वसनकेन्द्रमत्रोपहन्यते ।

(३) अकाले श्वसनप्रयत्नः, यथा—नितम्बोदयेऽनागतशिरा अपि शीतस्पर्शादिभिरुत्तेजितो यदान्तः श्वसितुं चेष्टते तदा गर्भोदकादिकर्दमकच्छ्वासोपरोधः ।

(४) मातुर्गम्भीरमूर्च्छनेनश्च ।

दारुणादारुणभेदेन च द्विविधो गर्भमोहः, तद्यथा—

> तत्र चेत्पाण्डुवर्णः स्याद्विपण्णो रुद्धहृद्गतिः ।
> शिथिलाङ्गो लुप्तप्रत्यावर्त्तनोऽस्पन्दनालकः ॥

---

(१) Interference with placental circulation. (क) Pressure on the cord, (ख) Premature separation of the placenta. (ग) Tonic Contraction of the uterus. (घ) Anaemia of the mother as in severe haemorrhage. (२) Severe injuries or compression of the head. (३) Premature inspiratory effort. (४) Deep maternal Anaesthesia. दारुणमोहः Asphyxia pallida or White asphyxia. अदारुणमोहः Asphyxia livida or Blue asphyxia विपण्णो रुद्धहृद्गतिः = Suffering from shock & heart failure.

शिथिलाङ्गो लुप्तप्रत्यावर्त्तनः = Muscles are flaccid and the

नष्टपायुग्रहो बालो विस्फारितकनीनकः ।
मन्दा क्षीणा अक्रमाश्च हृच्छब्दाः सो हि दारुणः ॥
अथ चेन्नीलवर्णः स्यात् संरुद्धश्वसनक्रियः ।
कठिनाङ्गः स्थितप्रत्यावृत्तिः सस्पन्दनालकः ॥
दृष्टपायुग्रहो बाल आकुञ्चितकनीनकः ।
मन्दा दृढाः सक्रमाश्च हृच्छब्दाः सो ह्यदारुणः ॥

स्मर्त्तव्यञ्चात्र—

सम्यगनुपक्रान्तश्चाऽदारुणो दारुणे पर्यवस्यतीति । अथ च प्रजायिन्याः स्त्रियाः श्रुतिपरीक्षयाऽऽवीनामन्तरापि गर्भहृदयं मन्दमेवावबुध्येत, मन्दतरमेव चोत्तरोत्तरं स्यात् ( प्रतिप्रपलं शतादपि न्यूनम् ), शीर्षोदयेऽपि गर्भोदकं गुदशैथिल्याद् गर्भविड्दूषितं स्यात् तदा गर्भोऽयं नियतं मोहपरीत इति विद्यात् ।

साध्यासाध्यता—

(१) "तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ" ।—सु० नि० ८ ।

"विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः" ।—बा० शा० १ ।

"तौ मूढौ हस्तेनाहर्त्तुमशक्याविति शस्त्रमवचारयेत्" ।—अ० स० ४ ।

(२) "शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कलश्वासकासभ्रमनिपीड़िताम् परिहरेत्" ।—सु० नि० ८ ।

(व्याख्या)—विपरीतेन्द्रियार्थादिभिर्निपीडिता जननी यैस्ते तथाविधास्तान् परिहरेदिति । विपरीतेन्द्रियार्थता = अर्थानां हीनातियोगेनानुभवनम् । अरिष्टलक्षणञ्चैतत् । आक्षेपकः = गर्भाक्षेपकनामा विशिष्टो गदः । योनिभ्रंशः = गर्भाशयस्य अयथास्थितिः । योनिसंवरणम् =

---

reflexes arc lost. नष्टपायुग्रहः = with relaxed sphinctor, मन्दाः क्षीणा अक्रमाः = Slow, feeble and irregular संरुद्धश्वसनक्रियः = The respiratory function is mainly at fault.

गर्भाक्षेपकः Eclampsia.

योनिद्वारस्य संवृतिः । तन्त्रान्तरादुद्धृत्य डल्हणेन संवरणस्य स्वरूपमपि दर्शितम् । यथाहि—

मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम् ।
कुरुते रुद्धमार्गत्वात् पुनरन्तर्गतोऽनिलः ॥
निरुणद्ध्याशयद्वारं पीडयन् गर्भसंस्थितिम् ।
निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते ॥
बद्धां संरुद्धहृदयां नाशयत्याशु गर्भिणीम् ।
योनिसंवरणं विद्याद् व्याधिमेनं सुदारुणम् ॥ इति ॥

मक्कल्लः = गर्भाशयस्य मूढगर्भनिरसनार्थं क्रियमाणात् प्रबलाकुञ्चना-दुत्थितं दारुणं शूलम् । यद्यपि मक्कल्लप्रकरणे ( सु० शा० १० ) "प्रजातायाश्च नार्या" इत्यादिना प्रजाताया व्याधिरयमिति दृश्यते तथापि चकाराद् अप्रजाताया अपि भवतीति "गर्भकोषपरासङ्गः" इति वक्ष्य-माणपद्यावसरे डल्हणेन व्याख्यातम् ।

(३) प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा ।
नीलोद्धतसिरा हन्ति सा गर्भं स च तां तथा ॥

—सु० नि० ८ ।

(४) गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः ।
हन्यात् स्त्रियं मूढगर्भं यथोक्ताश्चाप्युपद्रवाः ॥

—सु० सू० ३३ ।

---

मक्कल्लः Complete Tonic or Tetanic Contraction of the uterus.

(३) Exhausted condition of the mother.

गर्भकोषपरासङ्गः = गर्भकोषस्य गर्भाशयस्य परोऽत्यर्थमासङ्गोऽतिशयेन नि-रोध इति डल्हणः ।

Partial tonic contraction of the uterus (Retracction ring dystochia,) निरोधः क्रियानिरोध इति कृत्वा Uterine Inertia इत्यपि केचित् ।

## चिकित्सा

(१) "तस्य गर्भशल्यस्य जरायुपातनकर्म संशमनमित्येके, मन्त्रादिकर्माथर्ववेदविहितमित्येके, परिदृष्टकर्मणा शल्यहर्त्रा हरणमित्येके"

—च० शा० ८ ।

[ आशुकारित्वात् प्रत्यक्षोपायत्वाच्च शल्यहर्त्रा हरणमेवात्र प्रधानम् ]

(२) "नातः कष्टतममस्ति यथा मूढगर्भशल्योद्धरणम्, अत्र हि योनियकृत्प्लीहान्त्रगर्भाशयानां मध्ये कर्म कर्त्तव्यं स्पर्शेन, उत्कर्षणापकर्षणस्थानापवर्त्तनोत्कर्त्तनभेदनच्छेदनपीडनर्जूकरणदारणानि चैकहस्तेन, गर्भं गर्भिणीं चाहिंसता, तस्मादधिपतिमापृच्छ्य परं च यत्नमास्थायोपक्रमेत"

—सु० चि० १५ ।

"तद्विद्यसहितस्तमुपक्रमेत् । अक्रियायां ध्रुवं मरणम् । उपक्रमे संशयः" इति सङ्ग्रहे विशेषः ।

( ३ ) "अथ हस्तप्राप्यं शल्यं हस्तेनाहरेत् । तदशक्यं यथायथं यन्त्रेण । तथाप्यशक्यं शस्त्रेण विशस्य..."—सङ्ग्रहसू० ३७ ।

तथा च द्विविधा शल्यक्रिया फलिता, यन्त्रकृता शस्त्रकृता चेति । तत्र यन्त्रक्रियायामुत्कर्षणापकर्षणस्थानापवर्त्तनपीडनर्जूकरणानि शस्त्रक्रियायाञ्चोत्कर्त्तनभेदनच्छेदनदारणानि प्रयुज्यन्ते ।

---

(२) कर्म कर्त्तव्यं स्पर्शेन=स्पर्शदोषस्य च सङ्क्रमणजनकत्वेन कष्टतमत्वं व्यक्तम् । उत्कर्षणादीनि— तत्र उत्कर्षणम्=उत्पीडनम् अधोगतस्योर्ध्वीकरणम् (Pushing up), अपकर्षणम्=ऊर्ध्वगतस्याधः कर्षणम् (Traction), स्थानापवर्त्तनम्=स्थानव्यावर्त्तनम् उत्तानस्यावाङ्मुखीकरणम् अवाङ्मुखस्य चोत्तानीकरणम् (Version—Cephalic or podalic), उत्कर्त्तनम्=ऊर्ध्वस्य कस्यचिदङ्गस्य छेदनम्, भेदनम्=आध्मातस्य गर्भकुक्ष्यादेर्विदारणम् (Evisceration), छेदनम्=सक्तस्य तत्तदङ्गस्य छेदनम् (Division, cutting, Excision), पीडनम्=चम्पनम्, वलनम् (Compression) ऋजूकरणम्=कुटिलस्य सरलीकरणम् (straightening) दारणम्=विदारणम् (Section or Incision)

## असम्यगागतमूढगर्भोपक्रमः ।

[क] "तस्मात्तत्सङ्गे सूत्यः प्रयतेरन् । त्रिविधस्तु सङ्गो भवति, शिरस्यंसे जघने वा" । —संग्रह शा० ४ ।

"स्वभावगता अपि त्रयः सङ्गा भवन्ति, शिरसो वैगुण्यादंसयोर्जघनस्य वा । जीवति तु गर्भे सूतिका गर्भनिर्हरणे प्रयतेत ।"

—सु० चि० १५ ।

[ प्रयतेत = नानाविधैः प्रसवोपक्रमोक्तनस्यधूमजृम्भणचङ्क्रमण-प्रवाहणोत्कटुकासनादिभिरुपायैर्यतेत ]

[ख] "निर्हर्तुमशक्ये च्यावनान् मन्त्रानुपश्रृणुयात्; तान् वक्ष्यामः—

इहामृतं च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥

इदममृतमपां समुद्धृतं वै,
तव लघु गर्भमिमं प्रमुञ्चतु स्त्रि ।
तदनलपवनार्कवासवास्ते,
सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥

मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्येण रश्मयः ।
मुक्तः सर्वभयाद्गर्भ एह्येहि विरमाचितः ॥'

—सु० चि० १५ ।

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पातु वैशल्यं वा दधात्वपि ॥
प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयादिरक्षितम् ॥ इति

संग्रह शा० ३ ।

[ग] "औषधानि च विदध्याद् यथोक्तानि" —सु० चि० १५ ।

[ यथोक्तानि = अपरापातनोदितानि, यानीह प्रसवोपक्रमे २८९, २९० पृष्ठयोर्दर्शितानि ]

[घ] "वृथाभूते च —उत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमित-
कट्या धन्वननगवृन्तिकाशाल्मलीमृत्स्नघृताभ्यां अक्तयित्वा
हस्तं योनौ प्रवेश्य गर्भमुपहरेत् । तत्र—

(१) सक्थिभ्यामागतमनुलोममेवाञ्छेत् ।

(२) एकसक्थ्ना प्रपन्नस्येतरसक्थि प्रसार्यापहरेत् ।

(३) स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्योर्ध्वमुत्क्षिप्य सक्थिनी
प्रसार्यापहरेत् ।

(४) तिर्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चादर्धमूर्ध्वमुत्क्षिप्य
पूर्वार्धमपत्यपथं प्रत्याजेवमानीयापहरेत् ।

(५) पार्श्वापवृत्तशिरसमंसं प्रपीड्योर्ध्वमुत्क्षिप्य शिरोऽपत्य-
पथमानीयापहरेत् ।

(६) बाहुद्वयप्रतिपन्नस्योर्ध्वमुत्पीड्यांसौ शिरोऽनुलोममानीयापहरेत्

(७,८) द्वावन्त्यावसाध्यौ मूढगर्भौ । —सु० चि० १५ ।

[तौ मूढौ हस्तेनाहर्तुमशक्याविति शस्त्रमवचारयेत्—संग्रहशा० ४,
विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः—वा० शा० १]

## अनिरस्यमानमूढगर्भस्योपक्रमः ।

[ ङ ] "एवमशक्ये शस्त्रमवचारयेद्" ।*

[ १ ] तत्र स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो विदार्य,

---

[घ] वृथाभूते = निष्फले मन्त्रौषधिव्यापारे । धन्वनो धनुर्वृक्षः, नगवृन्तिका
शल्लकी, मृत्स्नं = पिच्छा ।

(१) आञ्छेत् = आञ्छनमात्मदिक्कर्षणम्, सक्थिनो प्रसार्य तन्निर्हरेदिति ।

(४) पूर्वार्धम् = शिरोभागः, आर्जवमानीय = ऋजुभावमानीय ।

Embryotomy. [१] craniotomy— शिरोविदार्य = Perforation

शिरःकपालान्याहृत्य, शङ्कुना गृहीत्वा [चिबुके तालुनीति स्वग्रहेऽधिकम्] उरसि कक्षायां वापहरेद् , अभिन्ने शिरसि चाक्षिकूटे गण्डे वा ।

[ २ ] अंससक्तस्यांसदेशे बाहुं छित्वा,

[ ३ ] दृतिमिवाततं वानपूर्णोदरं वा विदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्; जघनसक्तस्य वा जघनकपालानीति" ।

—सु० चि० १५ ।

भवन्ति चात्र—

मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता ।
वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात्कदाचन ॥
यद्यदङ्गं हि गर्भस्य तस्य सज्जति तद्भिषक् ।
सम्यग्विनिर्हरेच्छित्त्वा रक्षन्नारीं च यत्नतः ॥
सचेतनञ्च शस्त्रेण न कथञ्चन दारयेत् ।
दार्यमाणो हि जननीमात्मानञ्चैव घातयेत् ॥
अविषह्ये विकारे तु श्रेयो गर्भस्य पातनम् ।
न गर्भिण्या विपर्यासः प्राप्तकालं न हापयेत् ॥
नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः ।
स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा ॥

—सु० चि० १५ ।

[च] "यथामार्गं दुराहरमन्यतोऽप्यथमाहरेत् " ।　—सङ्ग्रह सू० ३७ ।

(१) वस्तमाराबपन्नाया: कुक्षिः प्रस्पन्दते यदि ।
तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् ॥

—सु० नि० ८ ।

---

शिरःकपालानाहृत्य = Comminution or crushing शङ्कुना गृहीत्वापहरेत् = Extraction. शङ्कुः = आकुञ्चिताकारो बडिशविशेषः Blunt hook or crochet. [२] cleidotomy. [३] Evisceration.

(१) Caesarian Section. मण्डलाग्रम् Sharp hook

## अथ निर्हृतशल्याया उपचारविधिः—

एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ।
ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ॥
एवं मृद्वी भवेद् योनिस्तच्छूलं चोपशाम्यति ।

---

कृष्णातन्मूलशुण्ठ्येलाहिङ्गुभार्गीः सदीप्यकाः ।
वचामतिविषां रास्नां चव्यं सञ्चूर्ण्य पाययेत् ॥
स्नेहेन दोषस्यन्दार्थं वेदनोपशमाय च ।
क्वाथं चैषां तथा चूर्णं कल्कं वा स्नेहवर्जितम् ॥

---

शाकरवगन्धिङ्ग्वति विषापाठा कटुकरोहिणीः ।
तथा तेजोवतीं चापि पाययेद् पूर्ववद् भिषक् ॥
त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत् ।
पाययेद्वासवं नक्तमरिष्टं वा सुसंस्कृतम् ॥
शिरीषककुभाभ्यां च तोयमाचमने हितम् ।
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥
सर्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना ।
स्वेदाभ्यङ्गपरा नित्यं भवेत् क्रोधविवर्जिता ॥
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ।
रसं दशाहं शेषे तु यथायोगमुपाचरेत् ॥
व्युपद्रवां विशुद्धां च ज्ञात्वा च बलवर्णिनीम् ।
ऊर्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत् परिहारतः ॥

---

योनिसन्तर्पणेऽभ्यङ्गे पाने बस्तिषु भोजने ।
बलातैलमिदं चास्यै दद्यादनिलवारणम् ॥

—सु० चि० १५ ।

## सम्मोहितमूढगर्भस्योपक्रमः

ततोऽस्यातिप्रबलमोहज्वरपरीतगात्रस्य क्रोशितुमपि कृच्छ्रानुरूपमसमर्थस्य...पुनरिव मरणमनुभवतो लीयमानसंज्ञस्य अतिसम्बाधयोनिपुटावपीडितप्राणप्रत्यागमनाय...कुर्यात् ( अ० स० )—

(क) सुपरिलिखितनखया सुप्रक्षालितोपधानया कार्पासपिच्चवगुण्ठितया दक्षिणप्रदेशिन्या जिह्वोष्ठकण्ठमनुसुखं प्रमृज्यात् ।

(ख) अश्मनोः सङ्घट्टनं कर्णयोर्मूले ।

(ग) शीतोदकेनोष्णोदकेन वा मुखेन परिषेकः । तथा सङ्क्लेशविहतान् प्राणान् पुनर्लभेत ।

(घ) यदि वाऽचेष्ट एव स्यात्ततः कृष्णकपालिकया शूर्पेण चैनमभिनिष्पुनीयात् ।

(ङ) दक्षिणकर्णमूले च मन्त्रमस्योच्चारयेत् "अङ्गादङ्गात्सम्भवसि" इत्यादि पूर्वोक्तम् । यद्यचेष्टः स्याद् यावत्प्राणानां प्रत्यागमनात् । तत्तत् सर्वमेव कुर्युः । प्रत्यागतप्राणस्य च प्रकृतिभूतस्य नाभिनालं नालाभिबन्धनाच्चतुरङ्गुलस्योर्ध्वं क्षौमसूत्रेण बध्वा तीक्ष्णेन शस्त्रेण वर्धयेत् ।

सङ्ग्रह० उ० १ । च० शा० ८ ।

अथ विशेषः—

## दारुणमोहोपक्रमः ।

(१) अस्पन्दमानं नाभिनालं कल्पयेत् ।

(२) गुल्फौ धृत्वाऽवाङ्मुखीकरणेन कण्ठादिगतं द्रवं वामयेत् । वस्त्रगुण्ठितया कनिष्ठिकया श्लेष्मविशोधिन्या वा च कण्ठनासं प्रमार्जयेत् ।

( ३ ) उष्णवाससाऽवृतं च गर्भम् उष्णे ( ११२° फा० ) जले गाहयेद् होराधमपि यावद् वक्ष्यमाणविधिनोपक्रम्यमाणो बालो न रोदिति । विषादभयाच्च खरशीतस्पर्शादिभिः सततं तत्परिरक्षणं कार्यम् ।

अतएव वगाहानन्तरं सम्यक् प्रोञ्छनम् उष्णवाससां निचये शायनं च विधीयते।

(४) हृद्यौषधानि च प्रयुञ्जीत त्वग्वेधेन।

(५) मा व्यधात् कृत्रिमश्वसनक्रियाम्। केवलं जले गाहमानस्य वक्षःस्थलं प्रतिप्रपलं दशवारं पीडयेत्। पशुकाधश्च कराङ्गुल्या हृदयमुपमर्दयेत्। मणिच्छदं स्फारयेद्, गुदे वा मध्यमाङ्गुलिमर्पयेत्। तालुदन्तच्छदेषु च सुरामवघर्षयेत्। जिह्वां वा गृहीत्वा कर्षेत्। पञ्च प्रतिशतप्राङ्गारिकाम्लवायुयुक्तं वा विष्णुपदामृतमाघ्रापयेद्। आधमेद्वा बालवक्षस्तदर्थकारिणः स्वनिःश्वसितवायो कद्धनासस्य तन्मुखस्यान्तः फूत्करणेन*।

एवं हि क्षिप्रमुपक्रान्तः प्रायः श्वसिति, अदारुणे वा मोहे पर्य्यवस्यति।

## अदारुणमोहचिकित्सा—

(१) पादयोर्धृत्वाऽवाङ्मुखीकृत्य कण्ठनासादिकं पूर्ववच्छोधयेत्

(२) प्रतिसङ्क्रमितचेष्टां च प्रवर्त्तयेत—स्फिचौ करतलेन मुहुर्मुहुरभिहत्य, पृष्ठवंशं वा सुरयाऽभ्यज्य, वक्षो वा कराङ्गुलिभिरवघृष्य, मुखं वा च शीतोदककणैः परिमार्ज्य, उष्णोदके शीतोदके च पर्य्यायेण वाऽवगाह्य। इति।

---

४—(क) Coramine Ic.c. into muscle or ½ c.c. into the umbilical vein,

(ख) Pituitrin 2 mins

(ग) Adrenalin 5 mins into the heart through the 3rd or 4th interspace close to sternum.

* Mouth to mouth insufflation.

(३) यावच्च नाभिनाडी स्फुटं स्पन्देत, नैनां कल्पयेत्। अपरा हि तन्मुखेन किञ्चित् २ प्राणवातमस्य वहति।

(४) व्यर्थीभूतेषु चैषु, हृदयं चेद् दृढं स्पन्दते कृत्रिमश्वसनेन पुनरुज्जीवयितुं यतेत। तत्रेमे कृत्रिमश्वसनस्य विधयो भवन्ति-

( क ) प्रथमविधिः—चरकोक्तं शूर्पेण कृष्णकपालिकया वाऽभिनिष्पवनम्।

[ १११ चित्रम् ]

तृतीयविधिः



उच्छ्वसनम्

(क) Rocking method

( ख ) द्वितीयविधिः—उत्तानशयानस्य शिशोः पादयुगलं सहायको धत्ते । भिषक् च शिरसि स्थितः कूर्परयोः प्रगण्डौ धृत्वा क्रमेणोर्ध्वं बहिरन्तश्चाकृष्य शिरःपार्श्वयोर्नयति वक्षोविकसनाय ।

[ ११२ चित्रम् ]

तृतीयविधिः ।



निःश्वसनम् ।

ततश्च नीचैरानीय ताभ्यामेवास्योरः प्रपीडयति वक्षोनिमीलनाय । दशवारं च प्रतिप्रपलं कुर्यात् ।

(ख) Sylvester's method

( ग ) तृतीयविधिः—शिशुं क्रोडेऽनुप्रस्थं शाययित्वा १११,११२ चित्रयोः सन्दर्शितविधिना संवलनोद्वलनाभ्यां निःश्वासोच्छ्वासौ प्रवर्त्तयेत् ।

( घ ) चतुर्थविधिः—११३,११४ चित्रयोर्दर्शितः, स्पष्टश्च । प्रशस्तोऽपि विधिरयम् अकुशलेन प्रयुक्तः सन्धिविश्लेषादिकं जनयति ।

[ ११३ चित्रम् ]
चतुर्थविधिः ।



उच्छ्वसनम् ।

[ ११४ चित्रम् ]
चतुर्थविधिः



निःश्वसनम् ।

कदाचित्तु विपादं वर्धयित्वा सुषुम्नान्तःशोणितस्रुतिं च सञ्जनय्य शिशुमुपहन्त्यपि ।

(ग) Marshall Hall's method. (घ) Schsultze's method

( ङ ) पञ्चमविधिः—अयमपि प्रशस्तो विधिः (११५,११६ चित्रयोः) ; किन्तु न द्वितीयवद् अधिकं वायुं कर्षति विक्षिपति च ।

[ ११५ चित्रम ]

पञ्चमविधिः ।



उच्छ्वसनम् ।

(ङ) Byrd's method .

( च ) षष्ठविधिः—वस्त्रेणावेष्ट्य सन्दंशेनाङ्गुष्ठाङ्गुलिभ्यां वा जिह्वां गृहीत्वा शनैर्बहिः कर्षेत् पुनरन्तः प्रवेशयेच्च । प्रतिप्रपलं च दशवारमेवं कुर्यात् ।

[ ११६ चित्रम् ]

पञ्चमविधिः ।



निःश्वसनम् ।

### भवन्ति चात्र, सुख प्रसूतिकृद्योगाः—

पाठालाङ्गलिसिंहास्य मयूरकजटैः पृथक् ।
नाभिवस्ति भगालेपात् सुखं नारी प्रसूयते ॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥
जलं च्यावनमन्त्रेण सप्तवाराभिमन्त्रितम् ।
पीतं, गृहाम्बुना गेहधूमो वा सुखसूतिकृत् ॥
पुटदग्धसर्पकञ्चुक मसृणमसीकुसुम सारसहिताक्षी ।
झटिति विशल्या जायते गर्भिणी मूढगर्भाऽपि ॥
स्नुहीक्षीरं तथा स्तोकं गर्भिण्याः शिरसि क्षिपेत् ।
मृतगर्भं तदा सूते गर्भिणी रमणी द्रुतम् ॥
उभपञ्चदशं यन्त्रं यन्त्रं वोभयत्रिंशकम् ।
शरावलिखितं दृष्ट्वा सुखं नारी प्रसूयते ॥

**उभयपञ्चदशकं यन्त्रम् ।**

| | | |
|---|---|---|
| ८ | ३ | ४ |
| १ | ५ | ९ |
| ६ | ७ | २ |

**उभयत्रिंशकं यन्त्रम् ।**

| | | |
|---|---|---|
| १६ | ६ | . |
| २ | १० | १८ |
| १२ | १४ | ४ |

# प्रथमोऽध्यायः ।

## अथातः सूतिकाविज्ञानीयमध्यायं व्याख्यास्यामः

सूतिकाकालो—नाम प्रसवानन्तरं सार्धमासमितो द्विमासमितो वा कालो यत्र सूतिकाया गर्भधारण-प्रजननप्रभावाद् वैषम्यं गता धातवः कोष्ठाङ्गानि च यथास्वं परिसंस्थितिं प्रत्यागच्छन्ति, स्तन्यं च प्रवर्त्तते। क्रियाशारीरदृशा तु यावत् पुनरार्त्तवदर्शनं न स्यात् तावदस्यावधिर्मन्तव्यः। उच्यतेऽपि—

(१) "अनेन विधिनाऽध्यर्धमासमुपसंस्कृता विमुक्ताहाराचारा विगत-सूतिकाभिधाना स्यात्, पुनरार्त्तवदर्शनादित्येके" -सु० शा० १० ।

(२) षड्भिर्मासैः प्रसूताया धातवो रुधिरादयः ।
प्रत्यागच्छन्त्यरोगाया यथास्वं परिसंस्थितिम् ॥
— काश्यपसंहिता ।

(३) व्युपद्रवां विशुद्धां च विज्ञाय बलवर्णिनीम् ।
ऊर्ध्वं चतुर्भ्यो मासेभ्यो नियमं परिहापयेत् ॥—भावमिश्रः ।

लोकव्यवहारे तु दशाहेन द्वादशाहेन वा (सूतिकाभावोपरोधं तात्पर्यम्) स्नानादिकं कारयित्वा कालः समाप्यते। घटनाक्रमश्च सूतिकायास्त्रिधा विभज्य वर्ण्यते—अपत्यपथपरिवर्त्तनानि, स्तनपरिवर्त्तनानि, अन्य-परिवर्त्तनानि च ।

## जननाङ्गपरिवर्त्तनानि ।

गर्भाशयसंवरणम्—गर्भाशयसंवरणं नाम परिवृद्धस्य गर्भाशयस्य पुनर्ह्रस्वीभवनम्। गर्भनिर्गमाद् रिक्तीभूतो गर्भाशयो नीचैरागत्य नाभिदेशे ( सन्धानिकातः पञ्चप्राङ्गुलमूर्ध्वं ) तिष्ठति। तस्योत्तर-

---

सूतिकाकालः Puerperium.

गर्भाशयसंवरणम् Involution of the uterus.

भागः स्थूलकठिनो वर्त्तुलप्रायः, अधरभागस्तु तनुशिथिलो रूपहीनः । ग्रीवाभागोऽप्यधरगर्भाशयस्यालक्षण एव, किञ्चित् स्थूलतर इति तु विशेषः । शिथिलोऽधरभाग उत्तरभागं न धारयतीति प्रसवानन्तरं गर्भाशयस्य-दैर्घ्यं सहसा हीयते ।

आभ्यन्तरतस्तु गर्भाशयस्याऽपरादेशोऽण्डाकृतिश्चतुःप्राङ्गुलदीर्घ-त्रिप्राङ्गुलायतो विच्छिन्नकलावशेषैरुन्नावनश्च लक्ष्यते, शेषो देशश्च मसृणप्रायः (केवलं यत्र तत्र कलायाः शुषिरस्तरावशेषैर्विषम इव भवति) । उत्तरशय्या पाण्डुवर्णा दृश्यतेऽधरशय्या ग्रीवा च रक्तोच्छूना । किञ्च स्फारीभूता ग्रीवाऽधरशय्यया तथैकीभावमापद्यते यथा ह्यनयोः सीमान्त-बोधनमन्तर्मुखमपि न स्पष्टतो लक्ष्यीभवति । अध्यर्धमासेन तु संवृतो गर्भाशयः पुनः प्रकृतिस्थो जायते । केवलं स्तोकेन प्रवृद्धतनुः, कठिनतरः, अतिवर्त्तुलः, क्षुद्रतरग्रीवः, दीर्घायतबहिर्मुखश्चेत्येवाऽप्रजातावस्थातो भिद्यते । संवरणे च परिवृद्धगर्भाशयस्य सर्व एव ते कलापेश्याद्यवयव-भागाः परिवर्त्तन्ते । तद्यथा—

उदर्या कला—गर्भनिर्गमेन शिथिलीभूता वलिततनुश्च कलेयं शनैः शनैर्वृद्धधातुपरिक्षयात् प्रकृतिस्था भवति ।

पेशीसूत्राणि—गर्भाशयस्य प्रबलाकुञ्चनेन पीडिता बहवो रक्तवह-प्रणालिका अवरुध्यन्ते । प्रवृद्धायतनानि च पेशीसूत्राणि रसालाभादव-शीर्यन्ते गलन्ति च । गलनोत्थिता मलाश्च सूतिकास्रावमार्गेण लसीकामार्गेण मूत्रमार्गेण चापनीयन्ते । अत एवाद्येषु दिवसेषु सूतिकाया मूत्रे नाम्र-जनिकद्रव्याणि प्रचुरं लभ्यन्ते । रक्तसञ्चरणावरोधाद्विशुद्ध्यमानं परं परमुपचीयमानं च तक्राम्लं गलनक्रियां सम्पादयति । त्रिचतुरदिनात्परं तु यदा गर्भाशयमार्दवाद् रक्तसञ्चारः पुनर्व्यवतिष्ठते किञ्चित् तदा मलशुद्ध्या तक्राम्लक्षयाद्गलनक्रिया मन्दीभवति, मूत्रे मलद्रव्याणि हीयन्ते, संवरणक्रियाऽपि च मन्दायते । एवङ्कारं च सूत्राणां दैर्घ्यस्थौल्ययोर्ह्रस-नात् पूर्ववद्भावः ।

**श्लेष्मधरा कला**—गर्भधरकलासंसक्तो जरायुर्गानिलया सह यदाशयाद् वियुज्यते तदा कलायाः शुषिरस्तरो विच्छिद्यन्ते। छिन्न-शिष्टायाश्च कलाया उपरितनभागा गलित्वा सूतिकास्रावेण सह निर्यान्ति आशयान्तर्देशश्च चतुर्दशाहेन समतलप्रायो जायते। ततो मूलदेशात् पुनरुद्भूयमाना नवनवा कला प्रणष्टभागमापूरयति मासेन। अपरादेशस्तु विलम्बेन पूर्यते।

**सिराधमन्यादयः**—सम्पीडनबलाद् धमनीनां कायमानं ह्रसति। त्वतीनां स्थौल्यं तु न विनश्यति। क्षुद्राणां तु कासाञ्चिन् पेशीमयत्वं तन्तुध्वंसं स्रोतश्चावरुध्यते संयोजकधातुपूरितः। केशप्रतीकाशानां तु बहूनां प्रणालिकानां सर्वथैव विलोपः। सिराकुल्याश्च रक्तकन्दरुद्धाः शनैः शनैः पीतपिण्डमिव परिणमन्ते। रसायन्यो नाड्यश्चापि च प्रकृतिं गच्छन्ति।

**भारः कायमानञ्च**—गर्भाशयो हि सद्यः प्रसूतायाः प्रायेण षट्-प्राङ्गुलदीर्घः सार्धचतुःप्राङ्गुलायतः, सार्धत्रिप्राङ्गुलवेधः शटकाधिक-भारो भवति, सन्धानिकातः पञ्चप्राङ्गुलमूर्ध्वं च वर्तते। क्रमेण हीयमानश्च यथाकालमरोगायाः प्रकृतिभाव (३"×२"×१") मापद्यते प्रकृतिभूतस्य भारस्तु द्विप्रशुक्तिमितो दृष्टः। सन्धानिकाया उपरि गर्भाशय-स्कन्धस्य सीमावेक्षणेन च क्षयक्रमो निर्धार्यते। मापनकाले मलमूत्रा-शययोः शुद्धिरावश्यकी, अन्यथा गर्भाशयस्योद्गमनाद् भ्रान्तिः स्यात्। प्रत्यहं च प्राङ्गुलार्धमानेन गर्भाशयः क्षीयते। समान्यतश्चतुर्थे दिवसे गर्भाशयस्कन्धो नाभेरध आयाति, दशाहेन सन्धानिकायाः पृष्ठतः, पञ्चदशाहेन च श्रोणिकण्ठस्याधः प्रपद्य सर्वथा वस्तिगतो भवति। क्षयो-परोधस्तु विकृतिलक्षणम्। एवं सहसा परिक्षयोऽपि गर्भाशयस्य स्थान-विच्युतिं दर्शयति।

बहिर्मुखं च गर्भाशयस्य शीघ्रं सङ्कोचं गच्छदपि कियत्कालं मृदु विस्फारणार्हं च तिष्ठेत्। सप्ताहान्तेऽपि तस्मिन्नङ्गुलिप्रवेशः कर्तुं शक्यः।

किञ्च सकृत्प्रजाताया दृढो गर्भाशयः प्राचीरिकाणां सम्यङ् मेलनेन न शेषदोषः स्यात् । बहुप्रजातायास्तु शैथिल्येन कदाचिद् रक्तस्कन्दा-द्यवशेषरूपो दोषस्तिष्ठेत् । शेषदोषनिर्हरणाय यतमाने तु गर्भाशये मक्कल्लाख्यशूलमस्या उपजायते । स्तन्यचूषणकाले प्रवृत्तः स्तनहर्षः शूलमेनं वर्धयति । शाम्यति च शूलमेतद् दिनैकेन दिनद्वयेन वा प्रायः ।

बीजवहस्रोतसी स्नायवश्च—यथा यथा गर्भाशयो विपरिणमते तथा तथा स्थानसंस्थानादिषु विपरिणममाना इमेऽवयवा अपि स्वभावमा-पद्यन्ते ।

योनिः—मृद्वी विस्तीर्णा कदाचन ( सकृत्प्रजातायां ) दीर्णाऽपि च योनिः पक्षेण मासेन वा विपरिणममाना स्वस्था भवति ।

सूतिकास्रावः—सूतिकास्रावो नाम प्रसवानन्तरं सप्ताहं द्विसप्ताहं वा योनिमुखाज्जायमानो व्रणास्रावविशेषः । स चादौ त्रिचतुरदिनं सरुधिरो निर्गच्छति शोणितबहुत्वात्, ततः पञ्चषदिनं पीतावभासो रक्तमस्तुप्राचुर्याद्, दशाहात्परञ्च सततं क्षीयमाणो रक्तमस्तुमात्रः श्वेतकणश्लेष्मस्रावप्राचुर्याच्छ्वेतपिच्छिलः । सामान्ये योन्यास्रावे च तत एव पर्यवस्यति । छिन्ना गलिताश्च जरायवादिकलाभागा अपि सूतिकास्रावे लभ्यन्ते ।

अदुष्टश्च सूतिकास्राव उग्रगन्धोऽपि न पूतिगन्धो दृष्टः । तत्र गर्भाशयाद् गृहीत आस्रावो जीवाणुविरहितो भवति । दशाहात्परं योन्या गृहीते तु विविधा अपूयजनना जीवाणवो लभ्यन्ते । अनम्लत्वाच्च सूतिकास्रावस्य योनौ सङ्क्रमणसम्भवः । परिमाणन्त्वस्य न नियतम्, अष्टशेटकतः शेटकं यावद्दर्शनात् । गर्भस्य गुरुत्वमानम्, अपरायाः परिणाहमानम्, स्त्रिया रजःस्रावमानम्, प्रसवकाले स्रुतरक्तमानञ्च सूतिका-स्रावमानं प्रभावयन्ति । तत्राद्यत्रिकस्य वृद्धिः सूतिकास्रावमानं वर्धयति क्षयश्च ह्रासयति । चतुर्थस्य तु वृद्धिस्तन्मानं ह्रासयति क्षयश्च वर्धयति । एवं स्तनपायनेनापि सूतिकास्रावमानं हीयते । काले लुप्तशोणिताया

रक्तस्य पुनर्दर्शनन्तु संवरणक्रियाया व्याघातं सूतिकाया अकालचेष्टितं वाख्यापयति ।

तथा च पुरा निर्बाधा स्रुतिः, ततः क्रमेण परिक्षयः, यथोक्तो वर्णभेदः, अविस्नगन्धिता चेत्स्यात् सूतिकाभाव निर्दुष्टमादिशेत्; अतोऽन्यथा तु विकृतम् । सहसा निरुद्धस्तु सङ्क्रमणारम्भं द्योतयति । वासोरञ्जनविशेषेणापि दुष्टमदुष्टं वा विनिर्दिशेत् । तद्यथा—दुष्टं रञ्जनलक्ष्मणः केन्द्रभागो मन्दरक्तवर्णः केन्द्रबहिर्भाग आरक्तवर्णः प्रान्तभागश्च स्फुटवर्णतया सम्यक् परिच्छिन्नो भवति । निर्दुष्टं तु केन्द्रभागो रक्तवर्णः केन्द्रबहिर्भागो मन्दतरवर्णः प्रान्तभागश्च हीनवर्णतयाऽपरिच्छिन्न इव लक्ष्यते ।

## स्तनपरिवर्तनानि ।

तृतीयेऽह्नि चतुर्थेऽह्नि वा स्तन्यमस्याः प्रवर्त्तते वास्तविकम् । प्रवर्त्तनोन्मुखं च स्तन्यं स्तनयोरपीनत्वं काठिन्यं स्पर्शाक्षमत्वं सिराह्रपं कक्षाग्रन्थीनां वृद्धिं ज्वरं चापि करोति । आदौ दिनद्वये तु यत् क्षीरं स्रवति, तद् वास्तविकक्षीराद् भिन्नमेव । पीयूषमिति च तत्संज्ञानम् । तदेतत् सुपीतं तीव्रक्षारस्वभावं भवति, तप्तमतप्तं वापि च कदाचित् सङ्घातभावं भजते । सूक्ष्मवीक्षणेन स्थूला वसाकणिका वर्त्तुलप्राया द्वित्रिचित्केन्द्रवन्तः पीयूषकणाश्च दृश्यन्ते । त्रिचतुरदिनेष्वेव च पीयूषकणानां विलोपः । वास्तविकं स्तन्यं तु मृदुक्षारस्वभावं पीयूषकणरहितं शङ्खावभासं च भवति, प्रतनकं शर्करा खनिजद्रव्याणि लवणानि च विद्रुतानि स्तन्यमस्तुनि वर्त्तन्ते । परिमाणं त्वस्य न नियतम्, आहारानातुर्यसौमनस्याचूषणादिभावापेक्षत्वात् । नवमासावधि यथोत्तरं वर्धते इति तु प्रकृतिः । सहसा मानक्षयस्तु सङ्क्रमणादशाया ज्ञापकः ।

---

पीयूषम् = Coostrum    पीयूषकणाः = Colostrum, = Corpuscles.

शंखावभासम् = Pale blue.

भवन्ति चात्र—

रसप्रसादो मधुरः पक्वाहारनिमित्तजः ।
कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥
धमनानां हृदिस्थानां विवृतत्वादनन्तरम् ।
चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥
तदेवापत्यसंस्पर्शाद् दर्शनात् स्मरणादपि ।
ग्रहणाच्च शरीरस्य शुक्रवत् संप्रवर्त्तते ॥
स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ।

—सु० नि० १० ।

करोति स्तनयोः स्तन्यं पिपासां हृदयद्रवम् ।
कुक्षिपार्श्वकटीशूलमङ्गमर्दं शिरोरुजाम् ॥
एतत्स्तन्यागमोत्थस्य ज्वरस्योक्तं स्वलक्षणम् ।
स हि पीयूषसंशुद्धौ क्षममात्रेण तिष्ठति ॥

—काश्यपसंहिता

## शेषाङ्गपरिवर्त्तनानि

रक्तवहसंस्थानम्—गर्भिणीहृदयस्य या स्वल्पस्थूलता दृष्टा, सूतिका-काले सा क्रमशो लुप्यति, शिखरप्रतिघातश्च स्वस्थानं प्रपद्यते । मर्मरध्वनि-रपि बहुधा श्रूयते । धमनीप्रतिघाताः ( नाडीगतिः ) स्वाभाविकप्रमाणा-दपि मन्दायन्ते ( पञ्चाशतः षष्टिः ) । सुलक्षणञ्चैतत् , सर्वं सुष्ठ्विति ज्ञापनात् । हेतुत्वेन च भण्यते प्राणदाख्यनाड्याः समुत्तेजितत्वम् , धमनीनां परिवृद्धततित्वम् , सूतिकायाः शय्याश्रितत्वम् , गर्भाशयात् प्रसृतस्य मेदसो रुधिरे समुपस्थितत्वम् , प्रसवे शोणितास्रावेण रक्तधातोर्दौर्बल्यञ्च । ज्वराद्दते परिवृद्धा ( नवत्यधिका ) नाडीगतिस्तु

---

स्तन्यागमोत्थो ज्वरः Milk-fever, मर्मरध्वनिः Soft blowing murmur.

रक्तस्रुतिं हृद्रोगं मनोऽभिघातं वा ज्ञापयति। आदौ श्वेतकणोत्कर्षः स्कन्दकद्रव्यप्राचुर्यं च रक्ते दृष्टम्।

तापक्रमः—प्रसवोत्तरं प्रथमे दिने प्रायेण मन्दज्वरः (प्राकृतमानाद्र्धांशाधिकः, एकांशाधिको वा) सञ्जायते। आयासजन्यश्चायम् अचिरेणैव हीयमानः कतिपय (द्वादश) होराभ्यन्तरमेव शाम्यति। तृतीये चतुर्थे वा दिने एकोत्तरशतांशप्रायः स्तन्योत्थज्वरोऽपि दृष्टः। दृश्यते च सूतिकाकाले तापक्रमस्य स्वल्पोऽस्थिरश्च न्यूनाधिकभावः सामान्यैरपि हेतुभिः। किन्तु नवनवत्यंशादधिको नवनवत्यंशोऽपि द्वादशहोराधिकस्थायी चेदवश्यमनुसन्धेयः। इत्थम्भूतो हि ज्वरः सङ्क्रमणदशां विकारान्तरं वा सूचयति।

स्मृत्त्यव्यक्त्याश्च—तीव्रेऽपि ज्वरे सुखं चेत् स्वपिति, अविकृतदर्शना च सौख्यमेवात्मनः प्रकटयते, तदा शुभम्। न तत्र सङ्क्रमणभयम्। अन्यथा (दुःस्वापा विकृतदर्शना क्लान्तमनस्का चेत्) त्वशुभम्। दुःस्वापा विकृतदर्शनाऽपि स्वस्थाऽहमिति चेदाचष्टे, अरिष्टमेव विद्यात्।

मूत्रवहसंस्थानम्—तत्र सूतिकाया मूत्रमानम् आदौ सार्धैकगुणप्रायं वर्धते। वर्धमानं विशिष्टगुरुत्वमपि चतुर्थदिवसे १०२२ प्रायं भवति। नात्रजनिकद्रव्याणामभिवृद्धिर्भूम्ना जायते। दुग्धशर्कराऽपि स्तन्यप्रवृत्तेः परं लभ्यते। संवरणक्रियया सम्बद्धं पेप्टोनाख्यद्रव्यं तु द्वितीये तृतीये वा दिने समुद्भूय क्रमशः क्षीयमाणं दशाहेन द्वादशाहेन वा लुप्यति। सद्यःप्रसूतायाश्च सार्धैकदिनाय प्रसवायासमूलाऽण्डजाला शल्कविशेषाश्च दृश्यन्ते।

कदाचिच्च, आंशिकः पूर्णो वा मूत्ररोधोऽपि सूतिकाया दृष्टः, विशेषतश्चाप्रजानाम्। उत्तानशयनं भीरुत्वं शिथिलोदरत्वं प्रसवक्लेशो मूत्रावदरणं मूत्रस्रोतसः शूनपिच्छितत्वं च मूत्ररोधस्य हेतवो भवन्ति।

---

सार्धैकगुणप्रायम् = 71 C. C. शल्कविशेषाः Hyaline Casts, मूत्ररोधः Retention of urine.

मूत्ररोधाच्च सम्भवन्ति गर्भाशयस्य भ्रंशो, हीनसंवरणम्, रक्तस्रुतिः, मूत्रक्षरणं वस्तिशोफश्चेति भूरिश उपद्रवाः ।

पक्तिसंस्थानम्—आदौ द्वित्रदिनेषु क्षुधा किञ्चिद्धीयते, स्तन्यागमात् परं च प्रयोजनवशाद् वर्धते । तृष्णावृद्धिरपि पुरा रक्तक्षयात् परं च स्तन्यप्रवर्त्तनात् स्वाभाविकी । एवं स्तन्यमूत्रादिभिर्जलांशक्षयाद् गर्भनिर्गमेन जठरान्तर्भारक्षयात्, शय्याश्रयणादुदरभित्तिशैथिल्याच्च विड्बन्धोऽपि स्वाभाविकः । अथ च वृक्कत्वचोः कार्यवर्धनाद् गर्भाशयस्य कायमानह्रसनात् प्रमिताशनाच्च हेतोः सूतिकायाः शरीरभारोऽपि प्रथमसप्ताहे त्रिचतुर्शटकं यावत् क्षीयते । बहुप्रजातायाः स्तन्यपायनशीलाया यमलापत्यायाश्च भारक्षयो विशेषेण भवति ।

श्वसनसंस्थानं त्वक् च—श्वासक्रिया न विशिष्यते । किञ्चिदेव (२० तः २२) वर्धते । स्वेदः प्रचुरं निस्रवति । रञ्जनकणचयः शीघ्रं विलीयते । अरुणाभाः किक्किसरेखा अपि श्वेताभा जायन्ते । अथ च कक्षात्वचि मुद्गादारभ्य कुक्कुटाण्डपर्यन्ता नानाप्रमाणा उत्सेधा अपि कदाचिल्लभ्यन्ते । त एते गर्भिण्या एव नवमदशममासयोः सम्भूय सूतिकादशायां स्पष्टतरा भवन्ति । विपरिवर्त्तिताः स्वेदग्रन्थय इमे स्वतः न प्रस्रवन्ति । पीडितास्तु प्राक् कणवद् मलद्रव्यं, ततः पीयूषनिभं द्रवं; परं च पयोनिभं रसं स्रवन्ति । आर्त्तवस्रावकाले त्विमे शूनाः सवेदनाश्चापि जायन्ते ।

उदरभित्तिः श्रोणिसन्धयश्च—प्रसवोत्तरं प्रशिथिला वलीसंवलिता चोदरभित्तिः सामान्यतो मासद्वयेन प्राकृतेव सञ्जायते । अतिविप्लुतोदराया बहुशः प्रजातायाश्च स्त्रिया उदरच्छदाख्यमध्यमचरमयोः पेश्योः सामान्यकण्डरा आततीभूय उदरदण्डिकाख्यपेश्यावपसारयति, येन दारुणचेष्टादिषु तन्मध्यतः क्षुद्रान्त्रोद्गमः प्रजायते ।

---

मूत्रक्षरणम् Incontinence of urine.

उत्सेधाः Lumps विपरिवर्त्तिताः Modified. कणवद् मलद्रव्यं Granular debris.

श्रोणिसन्धयोऽपि क्रमेण नष्टमार्दवाः काठिन्यं भजन्ते ।

सूतिकायाः स्ववेद्यलक्षणानि—

(१) शमोपलब्धिः—यथैव सूते तथैव सा निर्मुक्तशल्येव सौख्य-मनुभवति ।

(२) क्षुत्पिपासे—प्रसवश्रमैः खिन्नशरीरा प्रथमं जलमेव याचते । होरैकानन्तरं च बुभुक्षाऽपि जागर्त्ति ।

(३) मूत्रणेच्छा—प्रायो द्वादशहोराभ्यन्तरमेव स्त्रिया मेहनेच्छा जायते । मूत्रणमावश्यकमिति विज्ञापिते तु सा कदाऽपि तथाकर्त्तुं प्रभवति । अथ च बहुधा मूत्रणेच्छा नाप्यभिजायते, विशेषतश्चाप्रजातानाम् । इच्छन्त्योऽपि वा न तथाकर्त्तुं प्रभवन्ति, औदरिकभारक्षयाद् उदरभित्तिशैथिल्याद् मूत्रस्रोतसः पिच्चितत्वेन सवेदनत्वाच्च । द्वादशहोरातः परं तु मूत्रसङ्गं नोपेक्षेत । विड्विसर्गस्तु यावदियं शेते तावत्प्रायो न जायते ।

(४) मक्कल्लशूलानि—गर्भाशयसङ्कोचजनितानि प्रसवोत्तरशूलान्यपि बहुधा दृश्यन्ते । सूतिकायाः स्वभावतो जायमाना अपि गर्भाशयसङ्कोचा यदा केनाऽपि हेतुना विशिष्य प्रवर्त्तन्ते तदैव शूलं जनयन्ति । प्रसवकालो यदि यथोचितदैर्घ्यः स्याद् गर्भाशयश्च तृतीयावस्थायां तदनुबन्धिनि काले च सुदृढं संवृतः, तदा न शूलानां सम्भवः । यदैव प्रसवकालो ह्रस्वो भवति गर्भाशयश्च हीनसंवृतोऽविशोधितरक्ततया सान्तर्दोषस्तदैव शूलानां जन्म । अतश्च बहुप्रजातास्वेव प्रायेण मक्कल्लदर्शनम् । सामान्य-तश्च प्रथमाह्नः सायंकाले शूलानि विशेषेणानुभूयन्ते, अनुबध्नन्ति च कदाचन पञ्चषदिनानि परमपि । स्तन्यपानकाले च गर्भाशयप्रबला-कुञ्चनाच्छूलानि तीव्रायन्ते । सुश्रुतश्चाह—

(क) "प्रजातायाश्च नार्या रूक्षशरीराया स्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगतेनातिसंरुद्धं नाभेरधः पार्श्वयोर्वस्तौ वस्तिशिरसि वा ग्रन्थिं करोति, ततश्च नाभिवस्त्युदरशूलानि भवन्ति, सूचीभिरिव निस्तुद्यते

(क) After pains due to retention of blood clot (Lochiometra

भिद्यते दीर्य्यत इव च पक्वाशयः, समन्ताद्‌ध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्ललक्षणम्" (शा० १०)

(ख) स्त्रीणामपप्रजातानां प्रजातानां तथाऽहितैः ।

दाहज्वरकरो घोरो जायते रक्तविद्रधिः ॥

अपि सम्यक् प्रजातानामसृक् कायादनिःसृतम् ।

रक्तजं विद्रधिं कुर्यात् कुक्षौ मक्कल्लसंज्ञितम् ॥

सप्ताहान्नोपशान्तश्चेत्ततोऽसौ संप्रपच्यते ॥

( नि० अ० ९ )

(५) **स्तनव्यथा**—स्तन्यप्रवृत्त्या सहैव स्तनो पीनौ मन्दव्यथौ च भवतः । स्तनयोरतिपूर्णत्वे तु भृशं तुद्येते । सबलश्चेच्छिशुः, तत्कृत-स्तन्याचूषणचेष्टयाऽपि बहुधा वेदनाऽनुभूयते !

(६) **दौर्बल्यानुभवः**—यदा स्त्री सर्वप्रथमं शयनासनादुत्तिष्ठति, किमप्यप्रत्याशितं दौर्बल्यं तयाऽनुभूयते । अचिरेणैव च तन्निवर्त्तते । गतसूताऽभिधानाऽपि दौर्बल्यं क्लान्तिं चेदनुभवति, विकृतिविशेषमाशङ्क्य तस्य स्वरूपो हेतुश्च निर्णेतव्यः ।

## सूतिकोपक्रमः ।

तत्र सद्यः प्रसूता स्त्री शिशुश्च सद्योजातो यथोपचर्य्येते तथा प्रसवस्य तृतीयावस्थोपक्रमे पुरा व्याख्यातम् । अत्र तु तदनन्तरं कर्त्तव्यकर्मणां व्याकरणम् । पाचनादिस्वाभाविककर्मणां संवरणादिविशिष्टकर्मणां च सम्यक् सिद्धिर्यथा स्यात्तथा लक्ष्यीकृत्य च सूतिकोपक्रमो विधीयते । उच्यतेऽपि—

(१) तदुपक्रमसामान्यं विशेषोपक्रमं तथा ।

वक्ष्यामि व्यासतो देशविदेशाकुलसात्म्यतः ॥

—कश्यपः

(ख) Septic or putrid endometritis.

(२) भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यङ्गोत्सादनपरिषेकावगाहनान्नपानविधिभिर्विशेषतश्चोपचरेत्, विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति ।

—च० शा० ८ ।

(३) प्रसूता हितमाहारं विहारं च समाचरेत् ।
व्यायामं मैथुनं क्रोधं शीतसेवां विवर्जयेत् ॥
सर्वतः परिशुद्धा स्यात् स्निग्धपथ्याल्पभोजना ।
स्वेदाभ्यङ्गपरा नित्यं भवेन्मासमतन्द्रिता ॥

—भावमिश्रः ।

## अथ विस्तरः

(१) स्नेहादिपानम्, उदरवेष्टनं च—सूतिकां बलातैलेनाभ्यज्य स्नेहं पाययेत् पञ्चकोलचूर्णयुतम् उष्णगुडोदकानुपानेन, वातघ्नौषधक्वाथं वा पाययेत् स्नेहायोग्याम् । पीतवत्याश्चोदरं वेष्टयेन्महता वाससा । वचांस्यपि—

(क) अथ सूतिकां बलातैलेनाभ्यज्यात् । बुभुक्षितां च पञ्चकोलचूर्णेन यवान्युपकुञ्चिकाचव्यचित्रकव्योषसैन्धवचूर्णेन वा युक्तामहःपरिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत् । स्नेहायोग्यां वातहरौषधक्वाथं ह्रस्वपञ्चमूलक्वाथं वा । इति

—सङ्ग्रहशा० ३ ।

(ख) सूतिकांतु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत् परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्म्यीभावमभिसमीक्ष्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गबेरचूर्णसहितम् । स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा । तथा तस्या न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात् । —च० शा० ८

---

उदरवेष्टनम् = Binder.

(ग) सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेत् ।
पञ्चकोलकिनीं मात्रामनु चोष्णं गुडोदकम् ॥
वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति ।
विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ॥
स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत् ।
पीनवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥

—वा० शा० १ ।

(घ) प्रजातमात्रामाश्वास्य सूतां शक्ता विजाविका ।
न्युब्जां शयानां संवाह्य पृष्ठे संश्लिष्य कुक्षिणा ॥
पीडयेद् घट्टमुदरं गर्भदोषप्रवृत्तये ।
महताऽदुष्टपट्टेन कुक्षिपार्श्वे च वेष्टयेत् ॥
तेनोदरं स्वसंस्थानं याति वायुश्च शाम्यति ।

—सूतिकोपक्रमणीये कश्यपः ।

(२) विश्रान्तिः—शारीरो मानसश्च विश्रामो गर्भवृद्धिक्षपितशिथिलसर्वधातुकायाः प्रवाहणवेदनाक्लेदरक्तनिःस्रुतिविशेषशून्यशरीरायाश्च सूतिकायाः परं हितावह इति यथाऽस्या विश्रान्तिलाभः स्यात्तथा यतनीयम् । नैनामायासयेद् उद्वेजयेच्च ।

"प्रियङ्गुकानां कुसरैः स्वभ्यक्तां स्वेदयेत्ततः ।
स्विन्नामुष्णाम्बुना स्नातां विश्रान्तां विगतक्लमाम् ॥
कुष्ठगुग्गुल्वगुरुभिर्धूपयेद् घृतसंयुतैः ।"

—कश्यपः ।

निद्रायमाणा च सुखं विश्राम्यति । अतो निद्रोपघातकरेभ्यो भावेभ्यः सर्वथा परिरक्षेदेनां रात्रौ मध्याह्ने चापि । शिशुं सूतिकागारतः कुमारागारमपनयेत् । द्वारि पटाक्षेपं कुर्यात् । मन्दालोकं च तद्वेश्म कार्यम् ।

---

विश्रान्तिः = Rest.

